# मीमांसा-दर्शनम्

षष्ठाध्यायमारभ्य द्वादशाध्यायपर्य्यन्तम् ।

जैमिनिविरचितम्

सूत्रम् ।



श्रीशबरस्वामिकृत भाष्यसमेतम् ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतं प्रकाशितम् ।

कलिकाता नगर्य्यां

सारसुधानिधि यन्त्रे

मुद्रितम् ।

ई० १८८४

# मीमांसा-दर्शनस्य उत्तरषट्के

## सप्तमस्य अध्यायस्य प्रथमः पादः ।

---

अथ प्रयाजादि धर्म्माणामपूर्व्वप्रयुक्तताधिकरणम् ।

### श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥ (सि०)

पूर्व्वेण अध्यायषट्केन प्रत्यक्षविहितधर्म्माणां कर्म्मणां दर्शपूर्णमासादीनाम् इतिकर्त्तव्यता चिन्तिता, उत्तरेण इदानीम् अविहितेतिकर्त्तव्यताकेषु ऐन्द्राग्नादिषु चिन्तयितुमिष्यते । तत्र यदि दर्शपूर्णमासादीनां प्रकरणे ये विहिता धर्म्माः, ते सर्वकर्म्मसु विहिता भवन्ति, ततस्तैरेव धर्मैरैन्द्राग्नादयोऽपि धर्म्मवन्त उक्ताः, तथा कर्त्तव्याश्च इति, न अर्थ उत्तरेण षट्केन । अथ ये यस्य प्रकरणे उच्यन्ते, ते तत्रैव उक्ताः भवन्ति, ततोऽधर्म्मकाणि ऐन्द्राग्नादीनि । तेषु चिन्ता भवति, किम् एषां धर्म्माः सन्ति, उत न ? इति । यदा च सन्ति । तदा के ? कियन्तो वा ? कथं च अनुष्ठातव्याः ? इति, तदर्थम् उत्तरः षट्कः प्रवर्त्तनीयः ।

तत्र सप्तमेन तावत् सन्ति धर्म्माः इत्युच्यते । अष्टमेन च इमे अस्य इति । इत्थं प्रयोक्तव्याः इति नवमेन । दशमैकादशद्वादशैरेतावन्तः प्रयोक्तव्याः, न अतोऽधिकाः इति ।

तत्र इदं विचार्य्यते, किं यजिप्रयुक्ता एते धर्म्माः, कथं यजिर्गुणवान् स्यात्? इत्येवमर्थमाम्नायन्ते, आहोस्विद् अपूर्वप्रयुक्ताः? कथम् अपूर्वं स्यात्? इति। यदि यजिप्रयुक्ताः, ततः सर्वार्थाः। अथ अपूर्वप्रयुक्ताः, ततो यथाप्रकरणं व्यवतिष्ठन्ते। किं पुनरत्र युक्तम्? अपूर्वप्रयुक्ताः इति, अपूर्वं हि फलवत्, अफलो यजिः, फलवति च प्रयासो विधीयमानोऽर्थवान् भवति। तस्मात् अपूर्वप्रयुक्ता धर्म्माः अतः परमाचार्य्यस्य सूत्रोपन्यासः, श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् इति, मुख्यानि अपूर्वाणि, तानि हि फलवत्त्वात् प्रधानानि, प्रधाने च मुख्यशब्दः। तेषां भेद उक्तः शब्दान्तरादिभिर्हेतुभिः। तस्मिन् मुख्यभेदे सति यथाधिकारं भावः स्यात् शेषाणां, ये यस्य अपूर्वस्य अधिकारे प्रकरणे शिष्यन्ते, ते तस्यैव भवेयुः, श्रुतिप्रमाणत्वात्, अयमस्य अपूर्वस्य शेषः, अयम् अस्य इत्यत्र श्रुतिरेव प्रमाणं क्रमते। न प्रत्यक्षादीनामन्यतमत्। श्रुत्या च ये यस्य प्रकरणे श्रूयन्ते, ते तस्यैव भवितुमर्हन्ति, न चान्यस्योक्तोऽर्थोऽन्यस्य भवति, न हि यदेवदत्तस्य ग्रासाच्छादनादिकं, तद्यज्ञदत्तस्य भवति। तस्मात् यथाप्रकरणं व्यवस्था धर्म्माणाम्।

उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात्॥ २॥
(पू०)

अथ वा, न एतत् एवं, यथाप्रकरणं धर्म्माणां व्यवस्था इति। कथं तर्हि? ऐकधर्म्यं स्यात् इति, समानधर्म्मता,

सर्वे धर्म्माः सर्वार्थाः। कुतः?। उत्पत्त्यर्थाविभागात्, उत्पत्तिः इति यजिं ब्रूमः, अपूर्वस्य उत्पादनात्, अर्थः इति अपूर्वं ब्रूमः, यजिप्रयोजनत्वात्, तयोः अविभागः। सर्वाणि अपूर्वाणि यजिमन्ति, यजिसंयोगेन धर्म्माः श्रियन्ते, यजेत इत्युक्का उक्ताः, ते यजौ न सम्भवन्ति, तस्य अफलत्वात् तत्र असम्भवन्तः तत्सम्बद्धेषु अपूर्वेषु विज्ञायन्ते। स च यजिसम्बन्धः सर्वेषाम् अपूर्वाणां तुल्यः। तस्मात् सर्वार्थी भवन्ति, सत्वधर्म्मवत्, यथा सत्वधर्म्माः, गौर्न पदा स्प्रष्टव्यः इति गोत्वसम्बन्धेन श्रूयमाणाः तत्र असम्भवन्तः तत्सम्बद्धेषु पिण्डेषु विज्ञायन्ते, तस्य च गोत्वसम्बन्धस्य अविशेषात् सर्वगवीषु शुक्लनील-कपिल-कपोतिकासु भवन्ति। एवम् इहापि।

उच्यते, विषम उपन्यासः, तत्र गोसामान्यसम्बन्धेन धर्म्मा विधीयन्ते, गौर्न पदा स्प्रष्टव्यः इति, इह पुनर्यजिविशेषसम्बन्धेन धर्म्मा विधीयन्ते, दर्शपूर्णमासाभ्यां यजेत इति ज्योतिष्टोमेन यजेत इति, विशिष्टयजिसम्बद्धे एव अपूर्वे भवितुमर्हन्ति न सर्वत्र इति। तत्र ब्रूमः, दर्शपूर्णमासाभ्यां यजेत इत्यत्र न शक्यन्ते यागविशेषे धर्मा विधातुम्। किंकारणम्?। यदा यजौ धर्मा विधीयन्ते, तदा यजिरनूद्यते, यजेत इत्थम् इति, यदि यजिर्विधीयेत, न धर्मैः सम्बध्येत, न हि द्वयोर्विधीयमानयोः परस्परेण सम्बन्धो भवति, अनुवादश्च सन् अविशेषात् सर्वयागानुवादः। तस्मात् सर्वार्थी धर्माः।

ननु दर्शपूर्णमासशब्दो विशेषको भविष्यति। न दर्श-

पूर्णमासशब्दः शक्नोति यागं विशेष्टुम्। अयं हि विधिर्वा स्यात् अनुवादो वा, यदा अनुवादः, तदा धर्मसम्बन्धार्थः, स च धर्मसम्बन्धो यागानुवादेनैव तयोः सिद्धः।

ननु निवृत्तिकरो भविष्यति, दर्शपूर्णमासौ एव इत्थं कुर्य्यात् न अन्यान् इति। नैवं शक्यं, वचनं, अकारणं, न तस्य अन्यनिवृत्तिः अर्थः। ननु परिसङ्ख्यया करिष्यति। न अत्र परिसङ्ख्या युज्यते, यदि अन्येन वाक्येन यागमात्रे धर्मप्रसङ्गः कृतः स्यात्, तत एतत् पुनर्वचनं परिसङ्ख्यां कुर्यात्, अथ पुनः असति प्रसङ्गे अनेनैव प्रसङ्गो अनेनैव निवृत्तिः इत्यतिभारः एकस्यैव वाक्यस्य भवति।

एवं तर्हि, न अत्र यजेत इति शब्दो धर्मविधिभिः सम्बध्यते, यजेत इत्थमिति, केन तर्हि? दर्शपूर्णमासशब्देन, प्रत्यक्षो हि तेन अस्य संयोगः, दर्शपूर्णमासाभ्यां यजेत इति, परोक्षो धर्मविधिभिः। कः तदा वाक्यार्थः?। दर्शपूर्णमासौ कुर्य्यात् इति। नैवं शक्यम्, एवं सति धर्मा असम्बद्धाः पारिप्लवा भवन्ति। कथं कृत्वा?। येयमाख्यातिकी विभक्तिः यजेत इति, सा दर्शपूर्णमासयोः कर्त्तव्यतां विदधाति, तत्र कथं यागमात्रेण यागविशेषेण वा धर्मसम्बन्धः स्यात्, विधायिका विभक्तिर्नास्ति इत्यसम्बद्धा धर्मा भवन्ति।

नैष दोषः, न वयं वाक्येन धर्माणां सम्बन्धं करिष्यामः, केन तर्हि? प्रकरणेन। कथम्?। कर्त्तव्यतायां चोदितायाम् इतिकर्त्तव्यताकाङ्क्षा भवति, कथं कुर्य्यात्? इति। प्रकरणेन धर्माः सम्बध्यन्ते इत्थं कुर्य्यात् इति, नैवं शक्यं,

यदा हि दर्शपूर्णमासौ कर्त्तव्यतया चोद्यते, तदा इतिकर्त्तव्यताकाङ्क्षा एव नास्ति, प्रज्ञातेतिकर्त्तव्यतत्वात् तयोः, असत्याञ्च इतिकर्त्तव्यताकाङ्क्षायां प्रकरणमेव नास्ति, एवं हि उक्तम्, असंयुक्तं प्रकरणात् इतिकर्त्तव्यतार्थित्वात् इति।

एवं तर्हि, नैव अत्र यागे धर्मा विधीयन्ते, नापि दर्शपूर्णमासयोः कर्त्तव्यता उच्यते, किन्तर्हि ? दर्शपूर्णमासाभ्यां यजेत इति पदद्वयेन विशिष्टं यागमनूद्यात धर्मा विधीयन्ते, दर्शपूर्णमासाभ्यां यजेत इत्यम् इति। एवमपि दर्शपूर्णमासाभ्याम् इत्यनुवादो न युज्यते, तृतीयार्थस्य असिद्धत्वात्, पूर्ववान् अनुवादो भवति, अपूर्वश्च तृतीयार्थः, स अवश्यं विधातव्यः, तस्मिंश्च विधीयमानेऽन्यदेवासम्बद्धमापद्यते, दर्शपूर्णमासौ यजेः करणम् इति। तस्मात् स एव प्रथमः पक्षोऽस्तु, यागानुवादेन धर्माणां विधिः इति।

ननु तथापि दर्शपूर्णमासाभ्याम् इत्येतत्र सम्बध्यते। ननु सम्भंत्स्यते, कालवचनः सन् प्रायिको नित्यानुवादो भविष्यति,प्रायेण यागानां दर्शपूर्णमासकालत्वात्। तृतीया च कालस्य अर्थकृतं गुणभावमालोच्य उपपद्यते, तथा चेत् सर्वे धर्माः सर्वार्थाः भवन्ति।

## चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥ (उ०)

कर्मचोदनायाः शेषभूतो धर्मसमाम्नायः एकदेशभूतः इत्यर्थः, दर्शपूर्णमासाभ्यां यजेत, अनया अन्वान्वाधानादिकया इतिकर्त्तव्यतया इति। तस्यां चोदनायां यजेर्गुणभावः श्रूयते, दर्शपूर्णमासशब्दो यजिवचनः, करणभावोऽत्र

पूर्णमासशब्दः शक्नोति यागं विशेष्टुम्। अयं हि विधिर्वा स्यात् अनुवादो वा, यदा अनुवादः, तदा धर्मसम्बन्धार्थः, स च धर्मसम्बन्धो यागानुवादेनैव तयोः सिद्धः।

ननु निवृत्तिकरो भविष्यति, दर्शपूर्णमासौ एव इत्थं कुर्य्यात् न अन्यान् इति। नैवं शक्यं, यत्कारणं, न तस्य अन्यनिवृत्तिः अर्थः। ननु परिसङ्ख्यया करिष्यति। न अत्र परिसङ्ख्या युज्यते, यदि अन्येन वाक्येन यागमात्रे धर्मप्रसङ्गः कृतः स्यात्, तत एतत् पुनर्वचनं परिसङ्ख्यां कुर्य्यात्, अथ पुनः असति प्रसङ्गे अनेनैव प्रसङ्गो अनेनैव निवृत्तिः इत्यतिभारः एकस्यैव वाक्यस्य भवति।

एवं तर्हि, न अत्र यजेत इति शब्दो धर्मविधिभिः सम्बध्यते, यजेत इत्थमिति, केन तर्हि? दर्शपूर्णमासशब्देन, प्रत्यक्षो हि तेन अस्य संयोगः, दर्शपूर्णमासाभ्यां यजेत इति, परोक्षो धर्मविधिभिः। कः तदा वाक्यार्थः?। दर्शपूर्णमासौ कुर्य्यात् इति। नैवं शक्यम्, एवं सति धर्मा असम्बद्धाः पारिप्लवा भवन्ति। कथं कृत्वा?। येयमाख्यातिकी विभक्तिः यजेत इति, सा दर्शपूर्णमासयोः कर्त्तव्यतां विदधाति, तत्र कथं यागमात्रेण यागविशेषेण वा धर्मसम्बन्धः स्यात्, विधायिका विभक्तिर्नास्ति इत्यसम्बद्धा धर्मा भवन्ति।

नैष दोषः, न वयं वाक्येन धर्माणां सम्बन्धं करिष्यामः, केन तर्हि? प्रकरणेन। कथम्?। कर्त्तव्यतायां चोदितायाम् इतिकर्त्तव्यताकाङ्क्षा भवति, कथं कुर्य्यात्? इति। प्रकरणेन धर्माः सम्बध्यन्ते इत्थं कुर्य्यात् इति, नैवं शक्यं,

यदा हि दर्शपूर्णमासौ कर्त्तव्यतया चोद्यते, तदा इतिकर्त्तव्यताकाङ्क्षा एव नास्ति, प्रज्ञातेतिकर्त्तव्यतत्वात् तयोः, असत्याञ्च इतिकर्त्तव्यताकाङ्क्षायां प्रकरणमेव नास्ति, एवं हि उक्तम्, असंयुक्तं प्रकरणात् इतिकर्त्तव्यतार्थित्वात् इति।

एवं तर्हि, नैव अत्र यागे धर्मा विधीयन्ते, नापि दर्शपूर्णमासयोः कर्त्तव्यता उच्यते, किन्तर्हि ? दर्शपूर्णमासाभ्यां यजेत इति पदद्वयेन विशिष्टं यागमनूद्यात्र धर्मा विधीयन्ते, दर्शपूर्णमासाभ्यां यजेत इत्थम् इति। एवमपि दर्शपूर्णमासाभ्याम् इत्यनुवादो न युज्यते, तृतीयार्थस्य असिद्धत्वात्, पूर्ववान् अनुवादो भवति, अपूर्वश्च तृतीयार्थः, स अवश्यं विधातव्यः, तस्मिंश्च विधीयमानेऽन्यदेवासम्बद्धमापद्यते, दर्शपूर्णमासौ यजेः करणम् इति। तस्मात् स एव प्रथमः पक्षोऽस्तु, यागानुवादेन धर्माणां विधिः इति।

ननु तत्रापि दर्शपूर्णमासाभ्याम् इत्येतन्न सम्बध्यते। ननु सम्भंत्स्यते, कालवचनः सन् प्रायिको नित्यानुवादो भविष्यति,प्रायेण यागानां दर्शपूर्णमासकालत्वात्। तृतीया च कालस्य अर्थकृतं गुणभावमालोच्य उपपद्यते, तथा चेत् सर्वे धर्माः सर्वार्थाः भवन्ति।

## चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥ (उ०)

कर्मचोदनायाः शेषभूतो धर्मसमाम्नायः एकदेशभूतः इत्यर्थः, दर्शपूर्णमासाभ्यां यजेत, अनया अन्वाधानादिकया इतिकर्त्तव्यतया इति। तस्यां चोदनायां यजेर्गुणभावः श्रूयते, दर्शपूर्णमासशब्दो यजिवचनः, करणभावोऽत्र

यजिः श्रूयते, दर्शपूर्णमासाख्येन यागसमुदायेन अन्यत् कुर्य्यात् इति, यत् तत अन्यत्, तत् कर्त्तव्यतया चोद्यते, न यजिः, अपूर्वं च तत्। ननु फलम् अत्र वाक्ये श्रूयते, स्वर्गकामो यजेत इति, तत् कर्त्तव्यं स्यात्। सत्यं श्रूयते, न तु तत् यजिना क्रियते, विनष्टे यजौ तद्भवति, अपूर्वं तु तेन क्रियते। तस्मात् तस्य कर्त्तव्यता उच्यते, यस्य कर्त्तव्यता तत् इतिकर्त्तव्यतया सम्बध्यते। तस्मात् अपूर्वार्था धर्म्माः, तेषां च अपूर्वाणां भेदः। अतः तद्भेदात् यथाप्रकरणं व्यवतिष्ठन्ते धर्माः इति।

अथैतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागो विशेष्यते?। उच्यते, नैव अत्र यागो विशेष्यते, किन्तर्हि? अपूर्वभावनैव उभयपदविशिष्टा उच्यते, यथा अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति इति। विषम उपन्यासः, तत्र हि अन्यत् द्रव्यम्, अन्यो गुणः, तेन तत्र उभयविशेषणत्वं युज्यते, इह पुनर्यागः एव तौ दर्शपूर्णमासौ, तेन इह उभयविशेषणत्वं न युज्यते। उच्यते, इहापि यजेत इति सामान्यं, दर्शपूर्णमासौ इति विशेषः, अन्यच्च सामान्यमन्यो विशेषः।

एवमपि श्रुत्या सामान्येन भावना, वाक्यात् विशेषेण, न चैतत् युगपद्भवति इति। एवं तर्हि, नैव अत्र श्रुत्यर्थः परिगृह्यते, किन्तर्हि? वाक्यार्थः। किंकारणम्?। श्रुत्यर्थे परिगृह्यमाणे दर्शपूर्णमासशब्दोऽनर्थको भवति, यजतिश्च अनुवादः, यजत्यात्मकत्वात् दर्शपूर्णमासयोः, यजतिसामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य।

## सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥ ४ ॥ (आ० नि०)

यत्तु सत्त्ववत् इति, अत्र गवाकृतौ धर्म्मः श्रूयते, आकृतिः पदार्थत्वात्, न च तत्र सम्भवति, अतोऽसौ आकृतिः। सहचारिपिण्ड-लक्षणार्था विज्ञायते, यथा गङ्गायां गावः इति। तच्च साहचर्य्यं, सर्वपिण्डानामविशिष्टम् इति, सर्व-पिण्डेषु विहितं भवति। तस्मात् तत् सार्वत्रिकं प्रतीयेत, इह तु यजेर्गुणभावेन श्रवणात् नैव यजौ धर्म्माः श्रूयन्ते, किं तर्हि? अपूर्वः इत्येवम् अपदिष्टो हेतुः। तस्मात् अनु-पन्यासः सत्त्ववत् इति।

## अविभागात्तु नैवं स्यात् ॥ ५ ॥ (आ०)

अथ तुशब्दः पक्षव्यावृत्तौ। नैतदेवम्, अपूर्वप्रयुक्ता धर्म्माः इति, यजिप्रयुक्ता एव। कुतः?। अविभागात्, यजिना अविभागो धर्माणां, प्रत्यक्षं केचित् द्रव्ये श्रूयन्ते, केचित् देवतायां, केचिन्मन्त्रेषु, एष च यजिः, यत्, द्रव्यं देवताम् उद्दिश्य मन्त्रेण त्यज्यते, स एष प्रत्यक्षो यजिना सम्बन्धो धर्माणाम्, अपूर्वेण त्वानुमानिकः। फलेऽपि यजेः प्रत्यक्षश्रुतौ गुणभावः, स्वर्गकामो यजेत इति, आनुमानि-कोऽपूर्वेण, अनुमानाच्च प्रत्यक्षं बलीयः। तस्मात् यज्यर्थाः धर्माः। ननु यजिर्भङ्गित्वात् कालान्तरे फलं दातुम् अस-मर्थः, तत्र कृता धर्मा असमर्था एव भवति इत्युक्तम्। अत्र स्थितस्य न्यायस्य आक्षेपेण प्रत्याख्यानं क्रियते, तैलपानवत् एतद्भविष्यति, यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति

कालान्तरे मेधास्मृतिबलपुष्ट्यादीनि फलानि करोति एवं यजिरपि करिष्यति, किम् नः अदृष्टाश्रुतेन अपूर्वेण कल्पितेन इति ।

## द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥ (यु०)

एवं च सति सर्वे धर्माः सर्वार्था भवन्ति, तथा च ऐन्द्राग्नादिषु प्रयाजादयः सन्ति, तत्र सौर्ये कर्मणि प्रयाजानां दर्शनम् उपपद्यते, प्रयाजे प्रयाजे कृष्णलं जुहोति इति । इतरथा प्रयाजाश्च विधातव्याः, प्रयाजेषु च कृष्णलहोमः, तथा च द्व्यर्थं तत् स्यात्, द्व्यर्थत्वं च विप्रतिषिद्धम् । तस्मात् यजिप्रयुक्ता धर्मा इति ।

## उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्तत्र कर्मभेदः स्यात् ॥ ७ ॥ (आ० नि०)

नैतदेवं, यजिप्रयुक्ता धर्माः इति, चोदनायां प्रवृत्तिः स्यात्, चोदनेत्यपूर्वं ब्रूमः, चोदनार्थत्वात् अपूर्वार्थत्वात् अपूर्वप्रयुक्ता धर्माः, फलवत्त्वात् इत्युक्तो हेतुः । यत्तु, प्रयत्नो यजिसम्बन्धो धर्माणाम् इति, अत्र ब्रूमः, उत्पत्तौ विध्यभावात्, उत्पत्तिः इति यजिं ब्रूमः । उत्पत्तौ यजौ नास्ति विधिः, यज्यर्था धर्माः इति, केवलं यजौ श्रूयन्ते, क्रियन्ते च, नैतावता तदर्था भवन्ति । यथा, वाससि रागः श्रूयते, वासो रञ्जयति इति, वाससि च क्रियते, न चासौ तदर्थः, स्वार्थः पुरुषार्थो वा भवति । एवम् इहापि, यजौ श्रूयमाणाः क्रियमाणाश्च अपूर्वार्था भवेयुः, अर्थवत्त्वाय ।

ततश्च कर्मभेदः स्यात्, यतोऽपूर्वार्थाः इति। यत्तु, यज्ञिः प्रत्यक्षं, फले गुणभावः इति। न ज्ञात्वा अपूर्वं, भवति इति, प्राणालिको विज्ञायते, प्रणाड्यापि च येन क्रियते तत् कारणं भवति, यथा, गोमयैः पचति, तुषपक्का भवन्ति इति। यत्तु, तैलपानवत् यजितः फलं भवति इति। अत्र ब्रूमः, तैलपानस्यापि न कालान्तरे फलं भवति, धातुसाम्यं तस्य फलं, तच्च तत्कालमेव, यच्च फलं बलपुष्ट्यादि, तत् सम्यगाहारपरिणामाद्भवति। तस्मात् विषमः उपन्यासः।

यदि वाप्यभिधानवत्सामान्यात्सर्वधर्मः स्यात् ॥ ८ ॥ (आ०)

यदि अपि अपूर्वं प्रयोजकं धर्माणां, तथापि सर्वधर्मः स्यात् स स पदार्थः, अभिधानवत् सामान्यात्, अभिधानं तावदेतेषां समानम्, अपूर्वम् इत्यभिधानवत् धर्मेणापि अस्य समानेन भवितव्यं, वाह्नीकवत्। यथा, वाह्नीकोऽतिथिरागतः, यवान्नमस्मै प्रक्रियताम् इत्युक्ते, यो यो वाह्नीकस्तस्य तस्य यवान्नं क्रियते। यथा वा, अक्ष्यामये मुद्गौदनो भोक्तव्यः, उदरामये पयः पातव्यम् इति, सर्वत्र च हि अक्ष्यामये मुद्गौदनो भुज्यते, उदरामयेऽपि पयः पीयते। एवम् इहापि एकस्य अपूर्वस्य ये धर्माः श्रुतास्ते सर्वापूर्वाणां भवितुमर्हन्ति। अपि च, अरुणपराशरा नाम शाखिनः, तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति, ये दर्शपूर्णमासयोर्धर्माः, ते सर्वेष्टीनामग्नीषोमीयस्य च इत्यारभ्य, यावन्तः प्रकृतिविकृतयोऽनुक्रान्ताः इति। तच्च अनुक्रमणमत-

प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात् सोऽतिदेश: इति स्थिति: ॥ इति,

स च नाम्ना वचनेन वा, तत्र नाम त्रिविधम् अतिदेशकं, कर्मनाम, संस्कारनाम, यौगिकम् इति। वचनं पुनर्द्विविधं, प्रत्यक्षश्रुतम्, आनुमानिकं च । तयोरानुमानिकम् उपरिष्टात् वक्ष्यते, प्रत्यक्षश्रुतं तु इदानीमेव चिन्त्यते । (७ । १ २ अ०) ।

अस्ति इषुनामैकाहः, अपर: श्येन: । तौ द्वावप्याभिचारिकौ तत्र इषौ कांश्चित् धर्मान् विधाय आह, समानमितरच्छ्येनेन इति, एतच्चिन्त्यते, किम् अयम् अनुवाद: विधि: ? इति । यदि विधि:, ततोऽतिदेश:, श्येनधर्मान् इषौ अतिदिशति । अथ अनुवाद:, ततो न इति । तत्र किं प्राप्तम् ? । तत् सूत्रेणैव उपक्रम्यते,

समानमितरच्छ्येनेनेतिश्रुत्या इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम् ।

## समाने पूर्ववत्त्वादुत्पन्नाधिकार: स्यात् ॥ १३ ॥
(पू०)

समानम् इतरत् श्येनेन इति, अत्र उत्पन्नाधिकार: स्यात्, अनुवाद: इत्यर्थ: । कुत: ? । पूर्ववत्त्वात्, अयमिषु: पूर्ववान्, ज्योतिष्टोमपूर्वक:, ज्यौतिष्टोमिकोऽत्र विध्यन्त: इत्यर्थ: । अत्र चोदकेन उत्पन्ना ज्यौतिष्टोमिका धर्मा: सन्ति, श्येनोऽपि ज्योतिष्टोमपूर्वक:, तत्रापि ते सन्ति। ये इषौ श्येने च समाना भवन्ति, तान् अधिकृत्य अयं वादो युज्यते । तस्मात् उत्पन्नाधिकारत्वात् अनुवाद: ।

किञ्च इतरत् इति च अभावे न उपपद्यते, इतरशब्दश्च असन्निहितेऽनुपपन्नः, सन्निहित एव भवति, यथा, इतरः आधारो दीयताम्, इतरः कम्बलो दीयताम् इति सन्निहितो दीयते, न प्रावारमात्रं कम्बलमात्रं वा। ज्यौतिष्टोमिकाश्च सन्निहिताः। तस्मात् तेषां वादः। तेषां च इदमनुवादः, विहिता हि ते चोदकेन इति।

## श्येनस्येति चेत् ॥ १४ ॥ (पू० आ०)

इति चेत् पश्यसि, ज्यौतिष्टोमिकानामनुवादः इति, नैवं, श्येनस्य वैशेषिकाणां लोहितोष्णीषादीनां धर्माणां विधिः। कुतः?। श्येनग्रहणसामर्थ्यात्, एवं श्येनग्रहणम् अर्थवत् भविष्यति, धर्मान् विशेषयत्। इतरथा अनर्थकं स्यात्, सर्वेषां हि एकाहाहीनसत्राणां ते समानाः, तत्र यावत् उक्तं स्यात्, समानम् इतरत् इति तावदेव, समानम् इतरत् श्येनेन इति।

## नासन्निधानात् ॥ १५ ॥ (पू० आ० नि०)

न अयं श्येनवैशेषिकाणां वादो युज्यते। कस्मात्?। असन्निधानात्, अयम् इतरशब्दः सन्निहिते भवति, न च श्येनशब्देन वैशेषिका इषौ सन्निहिताः। यत्तु, श्येनशब्दो वैशेषिको भवति इति, विधिपक्षे अवैशेषिकत्वं दोषः स्यात्, अनुवादपक्षे तु नैव कश्चित् विधीयते, किं विशेषयिष्यति? ज्यौतिष्टोमिकास्तु सर्वसाधारणाः सन्तः श्येन-

स्यापि भवन्ति इत्यनुवादो युज्यते। तस्मात् ज्योतिष्टोमिकानामिव अनुवादः।

अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्योतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥
(सि०)

अपि वा इति पक्षान्तरपरिग्रहे। विधिरयं श्येनवैशेषिकाणां, ज्योतिष्टोमिकानाम् अनुवादः कुतः ?। अपूर्वत्वात्, एवम् अपूर्वम् अर्थं विधास्यति, तथा प्रवृत्तिविशेषकरो भविष्यति। अनुवादः सन् अप्रवृत्तिविशेषकरोऽनर्थकः स्यात्। ननु इतरशब्दोऽयं सन्निहिते भवति। उच्यते, इतरदधिकार्थे, समानम् इतरत्, समानमधिकम् इत्यर्थः।

ननु सन्निहितवचनोऽयं न अधिकार्थः इति। उच्यते, न केवलम् अयं सन्निहितवचन एव पूर्वोक्तसदृशम् असन्निहितमपि ब्रूते, अवशिष्टं च। यदा हि वस्त्राणि अनुक्रम्य इतरशब्दः प्रयुज्यते, देवदत्ताय कम्बलो दीयतां, विष्णुमित्राय कौशेयं, यज्ञदत्ताय क्षौमम्, इतरच्चैत्राय इति, तदा वस्त्रमेव प्रदीयते, न हिरण्यं रजतं वा, इह ज्योतिष्टोमिकेभ्योऽधिकान् धर्मान् अनुक्रम्य इतरशब्दः प्रयुक्तः, तेन अत्राप्यधिकानेव वक्तुमर्हति, तथा अधिकवचनो भवति।

अथ ज्योतिष्टोमिकान् ब्रूते, तथा सन्निहितवचनः, तत्र अवश्यम् अन्यतरत् हेयम्। यदि अधिकार्थतां हित्वा सन्निहितार्थता आश्रीयते, अनुवादमात्रम् अनर्थकं भवति, श्येनशब्दश्च अविवक्षितार्थः। अथ सन्निहितार्थतां हित्वा

अधिकार्थता गृह्यते, न कश्चिद्दोषो भवति। तस्मात् सूत्रकार आह, इतरत् अधिकार्थं इति। अतो ज्योतिष्टोमिकाद्विधेः अधिकाः श्येनवैशेषिका ये, ते इह अतिदिश्यन्ते, तद्वाचकं समानं स्यात्, समानशब्दः स्यात् इत्यर्थः। भवति श्येनशब्दश्च विवक्षितः। (७।१।२ अ०)।

चतुर्मास्यानां वैश्वदेवे आग्नेयादीनि हवींषि सार्थवादवाक्यैर्विहितानि, धर्माश्च तेषाम् उक्ताः, वरुणप्रघासेषु केवलानि हवींषि आम्नाय, यद्वैश्वदेविकानां ब्राह्मण, तत्तेषाम् अतिदिश्यते, एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानि इतराणि इति। तत्र किम् अर्थवादमात्रस्य अयम् अतिदेशः, उत सार्थवादकस्य सविधिकस्य काण्डस्य ? इति। कथं पुनरर्थवादमात्रस्य अतिदेशो भवति ?। यथा, पञ्चाकुलायप्रतिमाश्च वृक्षाः इति। के पुनर्विधयः, के अर्थवादाः ?। त्रेधा सन्नद्धं बर्हिर्भवति, त्रेधा सन्नद्धः इध्मः, नव प्रयाजा नव अनुयाजाः इत्येवमादयो विधयः; वार्त्रघ्नानि वा एतानि हवींषि इत्यर्थवादाः। तत्र इदम् उच्यते,

एतद्ब्राह्मणानीत्यादीनां पञ्चहविःषु सार्थवादविध्यतिदेशाधिकरणम्।

## पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात्॥ १७॥

(पू०)

पञ्च तानि हवींषि सर्वपर्वसु सञ्चरन्ति इति पञ्चसञ्चराणि इत्युच्यन्ते, तेषु पञ्चसञ्चरेषु अर्थवादमात्रस्य अतिदेशः

इति। कुतः?। सन्निधानात् हविषां सन्निहिता अर्थवादाः, विधिभिः एकवाक्यसम्बद्धत्वात्, न धर्म्मविषयः। किम् अतः?। अत एतद्भवति, यत् पूर्वेषां ब्राह्मणम् इति व्यपदेशो युज्यते, तद्धि तेषां ब्राह्मणं, येन विधीयन्ते, कोऽन्यो हविषां ब्राह्मणस्य च सम्बन्धोऽन्यत्र विधेयविधायकभावात्? अर्थवादैश्च एतानि विधीयन्ते, न धर्म्मविधिभिः, धर्म्मविधिभिस्तु यानि विधीयन्ते, न तानि हवींषि। तस्मात् अर्थवादानाम् अतिदेशो न धर्मविधीनाम्। अपि च वरुणप्रघासेषु अपि केचित् वैश्वदेविका धर्मा विधीयन्ते, यथा अग्निं मथ्नन्ति प्रसुवो भवन्ति इति, तेषाम् अतिदेशेन विहितानां पुनराम्नानम्, अनर्थकं स्यात्, यदि विधयोऽतिदिश्येरन्। तस्मात् अर्थवादातिदेशः इति।

## सर्व्वस्य वैकशब्द्यात् ॥ १८ ॥ (सि॰)

नैतदेवम्, अर्थवादमात्रस्य अतिदेशः इति, सविधिकस्य सार्थवादकस्य काण्डस्य अतिदेशः, इति। कुतः?। एकशब्द्यात्, समानशब्दत्वात् इत्यर्थः, समानोऽयं ब्राह्मणम् इति शब्दो विधीनाम् अर्थवादानां च, स यथा अर्थवादान् गृह्णाति एवं विधीनपि गृह्णाति चेत्, तानप्यतिदिशति। यत्तु विधीनां हविर्भिः सम्बन्धो नास्ति इति। विधेयविधायकसम्बन्धो नास्ति उपकारलक्षणः सम्बन्धो भविष्यति। कः उपकारः?। यदेषाम् अङ्गानि विदधाति। अस्ति चेत् सम्बन्धः, ब्राह्मणशब्दश्रुत्या सर्वाति-

## लिङ्गदर्शनाच्च ॥ १६ ॥ (यु॰)

लिङ्गं च विधीनाम् अतिदेशं दर्शयति । किं लिङ्गम् ? । वरुणप्रघासेषु त्रिंशदाहुतयो वाजिनो यजन्त्या-हुतीनां सम्पत्त्यै त्रिंशत्त्वाय इति वरुणप्रघासे त्रिंशतमा-हुतीर्दर्शयति, यदि विधयो न अतिदिश्येरन्, ता न स्युः । तस्मात् अतिदिश्यन्ते ।

## विहिताम्नानान्नेति चेत् ॥ २० ॥ (आ॰)

विहिताम्नानात् इति यदुक्तं, तस्य कः परिहारः ? आभाषान्तं सूत्रम् ।

## नेतरार्थत्वात् ॥ २१ ॥ (आ॰ नि॰)

अत्र उच्यते, विध्यतिदेशेऽपि सति न अग्निमन्थनादी-नाम् आम्नानम् अनर्थकम्, इतरस्य हविषोऽर्थेन भविष्यति, दक्षिणवैहारिकस्य मारुत्याः । तस्मात् नेतत् ज्ञापकं, विधीनाम् अनतिदेशस्य भविष्यति । (७।१।२ अ॰) ।

---

एतद्ब्राह्मण इत्यनेन एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाधिकरणम् ।

## एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

कपालः इति, वरुणप्रघासेष्वपि, काय एककपालः इति। तत्र अपरः, ऐन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा इति, तथा साकमेधेष्वपि एककपालैन्द्राग्नौ आम्नातौ, ऐन्द्राग्न एकादशकपाल इन्द्राय वृत्रघ्ने चरुः वैश्वकर्मण एककपालः इति। तत्र इदम् आम्नातम्। एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालो, यद्ब्राह्मण इतर इतरश्च इति। तत्र इदम् उच्यते, एककपालैन्द्राग्नौ च तद्वत्, यद्वत् पञ्च-सञ्चराणि अत्रापि सविधिकस्य सार्थवादकस्य काण्डस्य अतिदेशः, तेनैव न्यायेन इति प्राप्तिसूत्रमेतत् उत्तर-चिन्तार्थम्। (७।१।५ अ०)।

---

साकमेधे वारुणप्राघासिकैककपालातिदेशाधिकरणम्।

## एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्ध्याव-दानस्य वचनात्॥ २३॥

साकमेधे श्रूयते, एतद्ब्राह्मण एककपालः इति। तत्र चिन्त्यते, वैश्वदेविकस्य एककपालस्य इदं ग्रहणम्, उत वारुणप्राघासिकस्य? इति। किं प्राप्तम्? वैश्वदेविकस्य इति ब्रूमः। किं कारणम्?। तस्य विहिता धर्माः, अलङ्कृत्य अभिपूर्य्य उपांशु यष्टव्यः, आविः पृष्टः कार्य्यः इत्येवमादयः।

युज्यते वक्तुम्, तद्वत् इदं कर्त्तव्यम् इति। तस्मात् वैश्वदेविकस्य ग्रहणम्।

ननु ऐन्द्राग्नसमुच्चारणात् एककपालोऽपि वारुणप्राघासिक एव स्यात्। न, अवश्यमेकपर्वणोरेव समुच्चारणेन भवितव्यं, नानापर्वणोरपि समुच्चारणम् अविरुद्धम्। तस्मात् वैश्वदेविकस्य ग्रहणम्।

इति प्राप्ते उच्यते, वारुणप्राघासिकस्य एककपालस्य ग्रहणम् इति। कुतः?। ततः एककपालानां वैश्वदेविकः प्रकृतिः। कथं ज्ञायते?। आग्रयणे सर्वहोमापरिवृत्तिदर्शनात्, आग्रयणे द्यावापृथिवीयस्य एककपालस्य सर्वहोमम् अपर्य्यावृत्तिं च दर्शयति, यत् सर्वहुतं करोति, सा त्वेका परिचच्चा, हुतो हुतः पर्य्यावर्त्तते, सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत इति, आज्ययागविधिपरे वाक्ये एककपालस्य सर्वहोमम् अपर्य्यावृत्तिं च प्राप्तां दर्शयति, एतस्मात् दर्शनात् अवभृथे च सकृद्द्वयवदानस्य वचनात्, अवभृथे च अवधारणं भवति, इदमेव एककपालस्य द्विरवद्यति इति, तेन ज्ञायते, नूनम् अन्यत्र न द्विरवदानम् इति, तच्चेतत् सर्वं वैश्वदेविके एककपाले विहितम्। तस्मात् एककपालानां वैश्वदेविकः प्रकृतिः। किम् अतः?। साकमेधिकेऽप्येककपाले वैश्वदेविका धर्माः प्राप्ताः, तेषाम् अतिदेशोऽनर्थकः, वारुणप्राघासिकस्य ये धर्माः वैशेषिका अप्राप्ताः, तेषाम् अतिदेशोऽर्थवान्। तस्मात् वारुणप्राघासिकस्य एककपालस्य इदं ग्रहणम् इति। उच्यते, लिङ्गमेतत्, कुतः

कपालः इति, वरुणप्रघासेष्वपि, कार एककपालः इति।
तत्र अपरः, ऐन्द्राग्नो द्वादशकपालो मारुत्या मिक्षा इति।
तथा साकमेधेष्वपि एककपालैन्द्राग्नौ आम्नातौ, ऐन्द्राग्न
एकादशकपाल इन्द्राय वृत्रघ्ने चरुः वैश्वकर्मण एककपालः
इति। तत्र इदम् आम्नातम्। एतद्ब्राह्मण ऐन्द्राग्नः,
एतद्ब्राह्मण एककपालो, यद्ब्राह्मण इतर इतरय इति।
तत्र इदम् उच्यते, एककपालैन्द्राग्नौ च तद्वत्, यद्वत् पञ्च-
सञ्चराणि अत्रापि सविधिकस्य सार्थवादकस्य काण्डस्य
अतिदेशः, तेनैव न्यायेन इति प्राप्तिसूत्रमेतत् उत्तर-
चिन्तार्थम्। (७।१।५ अ०)।

---

साकमेधे वारुणप्राघासिकैककपालातिदेशाधिकरणम्।

**एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्‌द्वावदानस्य वचनात् ॥ २३ ॥**

साकमेधे श्रूयते, एतद्ब्राह्मण एककपालः इति। तत्र चिन्त्यते, वैश्वदेविकस्य एककपालस्य इदं ग्रहणम्, उत वारुणप्राघासिकस्य? इति। किं प्राप्तम्? वैश्वदेविकस्य इति ब्रूमः। किं कारणम्?। तस्य विहिता धर्माः, अलङ्कृत्य अभिपूर्य उपांशु यष्टव्यः, आविः पृष्टः कार्य्यः इत्येवमादयः। वारुणप्राघासिकस्त्वधर्मकः, यस्य विहिता धर्माः, तत्र एतत्

युज्यते वक्तुम्, तद्वत् इदं कर्त्तव्यम् इति। तस्मात् वैश्वदेविकस्य ग्रहणम्।

ननु ऐन्द्राग्नसमुच्चारणात् एककपालोऽपि वारुणप्राघासिक एव स्यात्। न, अवश्यमेकपर्वणोरेव समुच्चारणेन भवितव्यं, नानापर्वणोरपि समुच्चारणम् अविरुद्धम्। तस्मात् वैश्वदेविकस्य ग्रहणम्।

इति प्राप्ते उच्यते, वारुणप्राघासिकस्य एककपालस्य ग्रहणम् इति। कुतः?। ततः एककपालानां वैश्वदेविकः प्रकृतिः। कथं ज्ञायते?। आग्रयणे सर्वहोमापरिवृत्तिदर्शनात्, आग्रयणे द्यावापृथिवीयस्य एककपालस्य सर्वहोमम् अपर्य्यावृत्तिं च दर्शयति, यत् सर्वहुतं करोति, सा त्वेका परिचचा, हुतो हुतः पर्य्यावर्त्तते, सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत इति, आज्ययागविधिपरे वाक्ये एककपालस्य सर्वहोमम् अपर्य्यावृत्तिं च प्राप्तां दर्शयति, एतस्मात् दर्शनात् अवभृथे च सकृदद्वयवदानस्य वचनात्, अवभृथे च अवधारणं भवति, इदमेव एककपालस्य द्विरवद्यति इति, तेन ज्ञायते, नूनम् अन्यत्र न द्विरवदानम् इति, तच्चैतत् सर्वं वैश्वदेविके एककपाले विहितम्। तस्मात् एककपालानां वैश्वदेविकः प्रकृतिः। किम् अतः?। साकमेधिकेऽप्येककपाले वैश्वदेविका धर्माः प्राप्ताः, तेषाम् अतिदेशोऽनर्थकः, वारुणप्राघासिकस्य ये धर्माः वैशेषिका अप्राप्ताः, तेषाम् अतिदेशोऽर्थवान्। तस्मात् वारुणप्राघासिकस्य एककपालस्य इदं ग्रहणम् इति। उच्यते, लिङ्गमेतत्, कुतः प्राप्तिः? इति। प्राप्तिम् उत्तरत्र तस्मात्...

कपालाभिन्नं च इत्यत्र। के पुनः ते धर्माः ?। हिरण्मयश्च स्रुवः शमीमय्यो वा इत्येवमादयः। (७।१।६ अ०)।

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य प्रथमः पादः।

---

अथ रथन्तरादिशब्दस्य सामविशेषार्थताधिकरणम्।

## साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥ १ ॥ (१म पू०)

इदं श्रूयते, रथन्तरम् उत्तरयोर्गायति, कवतीषु रथन्तरं गायति इत्येवमादीनि समाम्नायन्ते। तत्र चिन्ता, किम् इह अतिदिश्यते ? इति। ननु यत् रथन्तरादिभिः शब्दैरुच्यते, तदतिदिश्यते। बाढं, तदेव तु न ज्ञायते, किम् एभिः शब्दैः उच्यते इति। ननु सिद्धमेतत्, गीतिषु सामाख्या (१।४।३ सू०) इति। तथा सिद्धस्य आक्षेपः करिष्यते, स एव तु निर्णयो भविष्यति। यदि स एव निर्णयः, किमर्थः आक्षेपः ?। दार्ढ्यार्थः, स्थूणानिखननवत्। तत्र किं प्राप्तम् ? तदुच्यते, सस्तोभस्वरकालाभ्यासविकारायां हिङ्कारप्रणवप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवत्यामृचि गीतौ सामशब्दोऽभियुक्तैः उपचर्य्यते, तस्मात् संशयः। उच्यते, ननु गीतौ सत्यां भावात् गानाख्यस्य संस्कारकर्मणो वाचका एते

शब्दाः इत्युक्तं, तदेवेदम् उक्तमाक्षिप्यते। न इमे संस्कारस्य वाचकाः। किंकारणम्?। अकर्मकाले प्रयोगात्, अकर्मकाले साम प्रयुज्यते, न च संस्कारकर्माणि प्रोक्षणावक्षेपणपर्य्यग्निकरणादीनि अकर्मकाले प्रयुज्यन्ते, प्रयोजनाभावात्। अथ तु मन्त्रा एते, ततोऽन्वहं स्वाध्यायोऽध्येतव्यः इति नियमात् अकर्मकाले प्रयोगो युज्यते। तस्मात् ऋचां नामानि।

किञ्च, संज्ञाभेदात्, संज्ञाभेदश्च भवति, रथन्तरं बृहत् इत्येवमादिः, स एकत्वात् संस्कारकर्म्मणः, अनर्थकः, एकेनैव हि तदा पर्य्याप्तं, यथा गीतिः इति। अथ ऋचां नामानि, ततः तासां भेदात् संज्ञा पृथक्त्वं युक्तम्।

अपि च, यदि गानं रथन्तरं गानं च बृहत्, इदं रथन्तरम् इदं बृहदिति पृथक्त्वेन संज्ञानिवेशो नोपपद्यते ऋङ्नामत्वे तूपपद्यते।

किञ्च, विकारपृथक्त्वात्तु, प्रतिसाम च विकारपृथक्त्वात्, प्रतिसाम च विकारपृथक्त्वं दृश्यते, तत् एकत्वात् गानस्य, अनुपपन्नम्। संस्कारभेदे हि विकारपृथक्त्वं दृष्टम्। तत् यथा, अवहन्तेः तण्डुलीभावः, पिषेश्चूर्णनं, न तु एकस्य तण्डुलीभावश्चूर्णनं च। अथ ऋङ्नामानि एतानि, तत ऋचां भेदाद्विकारपृथक्त्वं युज्यते। तस्मात् ऋङ्नामानि इति। तत उत्तरं पठति, साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् इति, साम्नोऽभिधानशब्देन यथाशिष्टं प्रवृत्तिः स्यात्, यच्छिष्टं प्रवक्तृभिः शिष्येभ्यः। किञ्च शिष्टम्?। स्तोभादिविशिष्टा ऋक् साम, सा प्रवर्त्तेत। किंकारणम्?

**शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात् पृथग्भावात् क्रियाया ह्यभिसम्बन्धः ॥ २ ॥ (१म पू० नि०)**

तुशब्दः पक्षनिवृत्तौ, न तु एवं स्यात्, ऋचः प्रवृत्तिः इति। कथम्?। इह कवतीषु रथन्तरं गायति इति कवतीनां वा कार्य्यं अभिवल्योऽतिदिश्येरन्, कवतीनां वा उपरि आधाराधेयभावेन? तत्र कार्य्यं तावत् अतिदेशो न घटते। कुतः?। शब्दैः अर्थविधित्वात्, शब्दानाम् अर्थविधानं कार्य्यं, न च, कवतीषु रथन्तरं गायति इति कवतीभिर्योऽर्थोऽभिधीयते, तमभिवल्यः शक्नुवन्ति वक्तुम्। तस्मात् न कार्य्यातिदेशः। आधेयत्वेऽपि न सम्भवति, पृथग्भावात्, न हि शब्दः शब्दे समवैति, पृथगेवावतिष्ठते, अभिल्वा, कया नः इति, क्रियाया हि गानक्रियायाः शब्देन अभिसम्बन्धो भवेत्, न शब्दस्य। तस्मात् आधेयत्वेनापि न अतिदेशः, अतो नायमृचः प्रदेशः इति।

**स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥ (२य पू०)**

स्वार्थे वा प्रवर्त्तमाना अभिवल्यः कवतीनामङ्गभावेन उपदिश्येरन्। कथं पुनः कवतीषु गायति इत्यङ्गभावः शक्य उपदेष्टुम्?। शक्यो, यथा, येन कर्मणेर्त्सेत्तत्र जयान् जुहुयात् इति। किं पुनः प्रयोजनं कवतीनामभिवल्यो निर्वर्त्यन्तीति?। उच्यते, प्रयोजनम् ...

कुतः ?। क्रियायाः, यस्मात् क्रिया श्रूयते, कवतीषु रथन्तरं गायति इति, यथा प्रयाजादीनां प्रयोजनं क्रियायाः।

उच्यते, अयमेव अस्मिन् पक्षे दोषः, यत् प्रयोजनं क्रियायाः कल्पयितव्यम्। तस्मात् अयमपि पक्षो दुःश्लिष्टः।

## शब्दमात्रमिति चेत् ॥ ४ ॥ (३य पू०)

इति चेत् पश्यसि, कवत्यङ्गभावेन अभिवतीनाम् उपदेशो दुःश्लिष्टः इति, तेन तर्हि शब्दमात्रं प्रदिश्यतां, रथन्तरशब्दं कवतीषु प्रयुञ्जीत, कवतीः रथन्तरशब्देन अभिलपेत् इति। किंकारणम् ?। शब्दे उच्चरिते, तत्र तावत् मुख्या प्रतिपत्तिः। शब्दे कार्य्यस्य असम्भवात्, अर्थे कार्य्यं विज्ञायते, यथा गामानय इति, इह तु शब्दे एव कार्य्यं सम्भवति, न अर्थे। अतोऽत्र शब्दं विज्ञास्यामः।

## नौत्पत्तिकत्वात् ॥ ५ ॥ (३य पू० नि०)

पूर्वस्मात् एष वादः पापीयान्। कस्मात् ?। औत्पत्तिकत्वात्, औत्पत्तिको हि नामिनाम्नोः सम्बन्धः, यः शब्दो यस्मिन् अर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धः, न स ततोऽन्यं प्रत्याययितुं शक्नोति, न हि गोशब्देन अश्वोऽभिधातुम् शक्यते।

## शास्त्रञ्चैवमनर्थकं स्यात् ॥ ६ ॥ (यु०)

एवं च सति अतिदेशशास्त्रम् अनर्थकं स्यात्, अशक्यार्थत्वात्। तस्मात् न शब्दस्यापि प्रदेशो युक्तः। युक्ति-

तस्य अभिप्रायः, सत्याङ्कृतौ नैतावान् प्रयासः शिष्टानाम् अफलोऽभ्युपगन्तुम् न्याय्यः इति ।

## स्वरस्येति चेत् ॥ ७ ॥ (४र्थं पू०)

इति, चेत् पश्यसि, नाम्नोऽतिदेशोऽयुक्तः इति, तेन तर्हि, स्वरस्य अतिदेशो भवतु, स्वरः सामशब्देन लोकेऽभिधीयते, सुसामा देवदत्तः इति, सुस्वरो देवदत्तः इति । स्वरो घोषो नादः इति समानार्थाः, स सामशब्देन उच्यते, साम च रथन्तरम् । तस्मात् तस्य अतिदेशः ।

## नार्थाभावाच्छ्रुतेरसम्बन्धः ॥ ८ ॥ (४र्थं पू० नि०)

नैतदेवं, स्वरस्यातिदेशः इति । कुतः ? । अर्थाभावात्, अर्थस्य अभावात्, अर्थस्य अभिवर्तीस्वरस्य कवतीषु अभावात् । ननु असन्नेव असौ अतिदेशेन भाव्यते । उच्यते, भावयितुमपि न शक्यते, न हि अभिवर्त्यक्षराणाम् अभिव्यञ्जको नादः कवतीषु भावयितुम् शक्यः यदि भाव्येत, न कवत्यो भवेयुः, न चेत् भाव्यते, न भूतः, कवतीषु रथन्तरं गायति इत्येतस्याः श्रुतेः, पदान्तरेणाभिसम्बन्धो न स्यात् । तस्मात् न स्वरस्यातिदेशः ।

## स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ९ ॥

## (५म पू०)

तुशब्दः पक्षान्तरपरिग्रहे । यद्यभिवर्तीस्वरस्य कवतीषु

गायति इति । कथम् ? । तदुच्यते, इह ऋक्तीषु रथन्तरं गायति इत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवतः, ऋक्तीषु यत् रथन्तरं, तत् गायति इत्येका, रथन्तरं यत्, तत् ऋक्तीषु गायति इत्यपरा । तयोरेषा द्वितीया, रथन्तरं यत्तत् ऋक्तीषु गायति इति, सा स्वरस्य सामत्वे न सम्भवति इत्युक्तं, न हि अभिवतीस्वरः ऋक्तीषु समावेशयितुं शक्यः इति, पूर्वा तु सम्भवति, ऋक्तीषु यत् रथन्तरम्, तत् गायति इति ।

ननु साऽपि न सम्भवति, न हि ऋक्तीषु रथन्तरम् अस्ति । अतः परम् उच्यते, स्वरस्तूत्पत्तिषु स्यात्, स्वरस्त्व-भिवतीस्वरः, ऋक्तीनाम् उत्पत्तिषु उच्चारणेषु स्यात् । कथम् ? । मात्रावर्णाविभक्तत्वात्, बहवो मात्रावर्णास्त्वाभि-वतीनां ऋक्तीनां च अविभक्ता अभिवतीष्वपि विद्यन्ते, ऋक्तीष्वपि । सोऽसावभिवतीस्वरः ऋक्तीषु साधारण-वर्णसमवेतो विद्यते, तस्य अनुवादोऽयं घटते, ऋक्तीषु रथन्तरं गायति इति । तस्मात् स्वरस्य अनुवादः ।

## लिङ्गदर्शनाच्च ॥ १० ॥ (यु०)

लिङ्गं च दृश्यते, एतस्मिन् अर्थे । अस्ति रथन्तरम् उत्तरयोः इति । किं तल्लिङ्गं भवति ? । एवम् आह, रथन्तरम् उत्तरयोः न पश्यामि इति विश्वामित्रः तप-स्तेपे, बृहत् उत्तरयोः न पश्यामि इति वसिष्ठः इति । यच्च विद्यमानं न दृश्यते

घटं न पश्यामि इति प्रदीपं करोति, न शशविषाणं न पश्यामि इति। तस्मात् अस्ति उत्तरयोः रथन्तरं बृहच्च। तयोः अनुवादः इति।

## अश्रुतेस्तु विकारस्योत्तरासु, यथाश्रुति ॥ ११ ॥

(५ म पू॰ नि॰)

तुशब्दः पक्षं व्यावर्तयति, नैतदेवं, स्वरस्य अनुवादः इति। कुतः?। एवं सति उत्तरासु विकारो न कश्चित् श्रुतो भवति तदा उत्तरा यथाश्रुताः प्रयोक्तव्याः, यथा स्वाध्यायकाले श्रुताः। तत्र रथन्तरम् उत्तरयोर्गायति इत्येतत् अनुवादमात्रम् अप्रवृत्तिविशेषकरम् अनर्थकमेवापद्यत। अतो न स्वरस्य अनुवादो युक्तः।

## शब्दानाञ्चासामञ्जस्यम् ॥१२॥ (यु॰ एवं ६ष्ठ पू॰)

रथन्तरादीनां च सामशब्दानाम् असामञ्जस्यं स्यात्, रथन्तरम् उत्तरयोः, बृहत् उत्तरयोः इति। कथम्?। तदुच्यते, अयं रथन्तरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्यां व्यवस्थिते स्वरविशेषे प्रयुक्तः, स एकदेशे भिन्नानुपूर्वे वा असमञ्जसो भवति। तस्मात् नैतत् युक्तं, स्वरस्य सामशब्दः, तस्य चानुवादः इति।

अत्र आह, एवं भवता सर्वे पक्षा निरुद्धाः, ततः किम्

लक्षणा भविष्यति, कवतीषु रथन्तरं गायति इत्युच्यते, न च शक्यते कवतीषु रथन्तरं गातुम्, तत्र देशलक्षणा भवति, कवतीदेशे इति, यथा, अग्नौ तिष्ठति, कूपे तिष्ठति इति। धर्मलक्षणा वा स्यात्, रथन्तरधर्मा वा कवतीषु रथन्तर-शब्देन अतिदिश्यन्ते, यथा रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत् इत्येवमादयः, यथा आचार्य्ये प्रोषिते, आचार्य्यानी भवताम् आचार्य्यः इति, आचार्य्यशुश्रुषा आचार्य्यान्याम् अतिदिश्यते।

## अपि तु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहण-त्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥ (सि॰)

अपि तु नैवं स्यात्, ऋचः सामशब्दः, तस्याश्च प्रदेशः इति, तथा देशलक्षणा धर्मलक्षणा वा आश्रयणीया, अगतिश्चैषा यल्लक्षणापरिग्रहः। किन्तर्हि? कर्मशब्दः स्यात्, रथन्तरादिर्गानाख्यस्य संस्कारकर्म्मणो वाचकः। कुतः?। उक्तः न्यायो गीतिषु सामाख्या (१।४।३सू॰) इत्यत्र, तत्र गीतिविशिष्टायाम् ऋचि एष शब्दो दृष्टः, न च अगृहीतविशेषणा विशेष्ये बुद्धिः उत्पद्यते। तस्मात् विशेषणं तावत् अभिधीयते, विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः। अतो नास्ति ऋचः शब्देन संस्पर्शः इति, तेनैव न्यायेन गीतिनामधेयम् इति ब्रूमः।

घटं न पश्यामि इति प्रदीपं करोति, न शशविषाणं न पश्यामि इति। तस्मात् अस्ति उत्तरयोः रथन्तरं बृहच्च। तयोः अनुवादः इति।

## अश्रुतेस्तु विकारस्योत्तरासु, यथाश्रुति ॥ ११ ॥

(५ म पू॰ नि॰)

तुशब्दः पक्षं व्यावर्तयति, नैतदेवं, स्वरस्य अनुवादः इति। कुतः ?। एवं सति उत्तरासु विकारो न कश्चित् श्रुतो भवति तदा उत्तरा यथाश्रुताः प्रयोक्तव्याः, यथा स्वाध्यायकाले श्रुताः। तत्र रथन्तरम् उत्तरयोर्गायति इत्येतत् अनुवादमात्रम् अप्रवृत्तिविशेषकरम् अनर्थकमिवापद्यत। अतो न स्वरस्य अनुवादो युक्तः।

## शब्दानाञ्चासामञ्जस्यम् ॥१२॥ (यु॰ एवं ६४ पू॰)

रथन्तरादीनां च सामशब्दानाम् असामञ्जस्यं स्यात्, रथन्तरम् उत्तरयोः, बृहत् उत्तरयोः इति। कथम् ?। तदुच्यते, अयं रथन्तरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्यां व्यवस्थिते स्वरविशेषे प्रयुक्तः, स एकदेशे भिन्नानुपूर्वे वा असमञ्जसो भवति। तस्मात् नैतत् युक्तं, स्वरस्य सामशब्दः, तस्य चानुवादः इति।

अत्र आह, एवं भवता सर्वे पक्षा निरुद्धाः, ततः किम् अप्रवृत्तिरेव ? इति उच्यते, ऋच एव प्रदेशो भवतु। ननु उक्तं, न शक्या ऋच ऋगन्तरे प्रदेष्टुम् इति। बाढं, देश-

लक्षणा भविष्यति, कवतीषु रथन्तरं गायति इत्युच्यते, न च शक्यते कवतीषु रथन्तरं गातुम्, तत्र देशलक्षणा भवति, कवतीदेशे इति, यथा, अग्नौ तिष्ठति, कूपे तिष्ठति इति। धर्म्मलक्षणा वा स्यात्, रथन्तरधर्मा वा कवतीषु रथन्तर-शब्देन अतिदिश्यन्ते, यथा रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत् इत्येवमादयः, यथा आचार्य्ये प्रोषिते, आचार्य्यानी भवताम् आचार्य्यः इति, आचार्य्यशुश्रूषा आचार्य्यान्याम् अतिदिश्यते।

**अपि तु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥ (सि०)**

अपि तु नैवं स्यात्, ऋचः सामशब्दः, तस्याश्च प्रदेशः इति, तथा देशलक्षणा धर्मलक्षणा वा आश्रयणीया, अगतिश्चैषा यल्लक्षणापरिग्रहः। किन्तर्हि? कर्मशब्दः स्यात्, रथन्तरादिर्गानाख्यस्य संस्कारकर्म्मणो वाचकः। कुतः?। उक्तः न्यायो गीतिषु सामाख्या (२।१।३सू०) इत्यत्र, तत्र गीतिविशिष्टायाम् ऋचि एष शब्दो दृष्टः, न च अगृहीतविशेषणा विशेष्ये बुद्धिः उत्पद्यते। तस्मात् विशेषणं तावत् अभिधीयते, विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः। अतो नास्ति ऋचः शब्देन संस्पर्शः इति, तेनैव न्यायेन गीतिनामधेयम् इति ब्रूमः।

किञ्च, प्रसिद्धग्रहणत्वात्, अयं च गायति इति शब्दो गानक्रियायां प्रसिद्धः। का पुनरसौ?। शब्दस्य उच्चा-रणविशेषः, गायति गानं करोति इति, तद्ग्रहणाच्च रथ-

न्तरादिशब्दः, तद्वचनः इत्यर्थः, तेन समुच्चारणात् द्वितीया-सामर्थ्याच्च। यथा, आसारितकं गायति इति, वर्द्धमाकं गायति इति।

ननु शब्दवचनेनापि समुच्चारणं भवति, गाथां गायति, ऋचं गायति इति। सत्यं, विपरिणम्य तु शब्दं, गानेन ऋचं संस्करोति इति, यथानिपतितेन अर्थेन न सम्बध्यते गानं करोति ऋचम् इति। तस्मात् गीतिवचनः।

इतश्च गीतिवचनः। कुतः? । विकारो हि अविशिष्टो-ऽन्यैः," विकारश्च अत्र ऋग्द्रव्यस्य दृश्यते, ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वत्वं, विवृतानां संवृतत्वं, संवृतानां विवृतत्वं, सोऽविशिष्टोऽन्यैः संस्कारकर्मभिः, यथा अवहन्तिना व्रीहीणाम् तण्डुलीभावः, पिषिणा तण्डुलानां पिष्टीभावः। तस्मात् शब्दानां संस्कारो गानाख्यः रथन्तरादिभिः शब्दैः उच्यते, तस्य अयं प्रदेशः, रथन्तरम् उत्तरयोर्गायति इत्येवमादिः।

## अद्रव्यश्चापि दृश्यते ॥ १४ ॥ (यु०)

अपि च अद्रव्यं साम दृश्यते, द्रव्यशब्दश्छन्दोगैः ऋचि आचरितः, अद्रव्यम् अनृचम् इत्यर्थः। अनृचं साम दृश्यते, प्रजापतेर्हृदयम् अनृचं गायति इति, प्रजापतिहृदयं नाम साम, तत् अनृचि उत्पन्नं, यदि ऋचि सामशब्दः, कथं प्रजापतिहृदयम् अनृचं स्यात्। अथ गीतिः सामशब्दः, ततो विनापि ऋचा गीतिर्भवति। तत्र एतत् उपपद्यते, प्रजापतेर्हृदयम् अनृचं गायति इति। तस्मात्

अपि गीतिः साम। ननु उक्तं, संस्कारकर्मत्वे ऽनर्थको- ऽकर्मकाले प्रयोगः इति। तत्र ब्रूमः,

तस्य च क्रिया ग्रहणार्था, नानार्थेषु विरूपित्वा- दर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥

(आ० नि०)

तस्य क्रिया अकर्मकाले ग्रहणार्था शिक्षितुम् अभ्य- सितुम् च, नानार्थेषु नानाभूतेषु अर्थेषु भिन्नेषु इत्यर्थः विरूपित्वात्, आश्रयभेदात् विविधरूपं यद्गानं भवति, तत् प्रत्यृचं शिक्षितव्यम् अभ्यसितव्यं च, प्रयोगप्राशु- भावाय, भूमिरथिकवत्, तत् यथा, भूमिरथिको भूमौ रथमालिख्य योग्यां करोति, सा तस्य योग्या प्रयोगकाले सौकर्य्यम् उत्पादयति। अर्थो हि आसां रथन्तरादिसं- ज्ञानां न लौकिके व्यवहारे सिद्धः, यथा अवहन्त्यादीनाम्। कुतः?। विधानात् विधीयते हि असौ शिष्योपाध्याय- सम्बन्धेन, एवंरूपं रथन्तरं भवति इति। न लौकिको विज्ञायते। तस्मात् न परिचोदनैषा, अकर्मकाले प्रयोगात् इति।

अथ यदुक्तं, संज्ञापृथक्त्वात् इति। तत्र उच्यते,

तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥ १६ ॥

(आ० नि० २)

तस्मिन् एकस्मिन् अपि गानाख्ये संस्कारे संज्ञा-

विशेषाः भवेयुः। कुतः?। विकारपृथक्त्वात् तुल्येऽपि गाने विशेषो भवति, गानविशेषाच्च संज्ञापृथक्त्वम्, यथा, आसारितकं, वर्द्धमानकम् इति, अन्यथालक्षणा आसारितकगीतिः, अन्यथालक्षणा वर्द्धमानकगीतिः, एवम् इहापि अन्यथालक्षणा रथन्तरगीतिः, अन्यथालक्षणा बृहद्गीतिः। तस्मात् संज्ञापृथक्त्वम्।

## योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥ १७ ॥

(यु० १)

योनिश्चासौ शस्या च, योनिशस्या, योनिशस्याश्च ऋचः तुल्यवत् इतराभिः अयोनिशस्याभिः विधीयन्ते, याम्याः शंसति, शिपिविष्टवन्तीः शंसति, रथन्तरस्य योनिमनुशंसति, बृहतो योनिमनुशंसति इति। का तत्र तुल्यता?। शंसतिशब्देनाभिधानम्। इह एतौ स्तौतिशंसतिशब्दौ समानेऽपि स्तुत्यर्थत्वे व्यवस्थितविषयौ। प्रगीतेषु मन्त्रवाक्येषु स्तौतिशब्दः, अप्रगीतेषु शंसतिशब्दः, यथा प्र उ गं शंसति, निष्केवल्यं शंसति इति, आज्यैः स्तुवते, पृष्ठैः स्तुवते इति। अतः शंसतिशब्देन विधानात् अप्रगीताम् ऋचं रथन्तरस्य योनिं दर्शयति, यदि च गीतिः रथन्तरं, ततः तस्य अप्रगीता ऋग् योनिः अन्यथाऽयं व्यपदेशो नोपपद्यते, रथन्तरस्य योनिम् इति। तस्मात् गीतिषु सामाख्या।

## अयोनौ चापि दृश्यते अतद्योनि ॥ १८ ॥

(यु० २)

अयोनौ च साम दृश्यते, स्वात्यां सन्नवधीयते इत्या-इयंत् बृहत् गायत्रीषु क्रियतेऽपि चैनां रुजति, न च अस्यां सम्भवति इति, बृहतो बृहती योनिः, तस्य गायत्रीषु प्राप्ति-र्नास्ति, यदि ऋचः सामशब्दः । अथ नु गीतिः, ततः सा बृहद्गीतिर्गायत्रीषु वचनात् प्राप्ता, तस्या अयम् अनुवादो घटते, यत् बृहत् गायत्रीषु क्रियते इति । अतथायोनि च साम दर्शयति, यादृशी यस्य योनिः, ततोऽन्यादृशे, यो वै विच्छन्दसि सामोहति, स ऋचं संशृणाति, साम वा विलि-शति, साम संशृणाति, ऋचं विलिशति इति यतरत् वर्षीयः, तस्य विलेशः, यतरत् वर्षीयः, तस्य संशयः, तच्च गीतौ एव साम्नि युज्यते, न ऋचि, ऊहतिशब्दश्च गीतावेव समर्थः, न ऋचि, ऋक चेत्, सैवं यथाम्नायं पठ्यते तत्र नास्त्यूहप्रसङ्गः । तस्मात् अपि गीतौ सामशब्दः ।

## ऐकार्थ्ये नास्ति वैरूप्यमितिचेत् ॥ १८ ॥ (आ०)

यदुक्तम्, तस्य क्रिया ग्रहणार्था इति । तत्र परिचोद्यते, ऐकार्थ्ये नास्ति वैरूप्यम् इति, रथन्तरगीतिः बृहद्गीतिः अर्थान्तरं, तेन रथन्तरगीतौ गृहीतायां बृहद्गीतिः अगृ-हीता भवति इति युक्तो रथन्तरे गृहीते बृहतः शिक्षार्थम् अकर्मकाले प्रयोगः, रथन्तरगीतिस्त्वेक एव अर्थः । तस्य योन्यां प्रयोगे शिक्षिते पुनरुत्तरासु न शिक्षितव्यं तासु अकर्मकाले प्रयोगः संस्कारकर्मत्वे न युक्तो भवति । तस्मात् न संस्कारस्य सामशब्दः इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ।

स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके ॥ २० ॥
(आ० नि०)

स्यात् वैरूप्यम्। कुतः एतत्?। अर्थान्तरेषु अनिष्पत्तेः, ऋगन्तरेषु आश्रयभेदात्, यथा पाके, यथा एक एव अयमर्थः पाको नाम, तस्य अर्थान्तरे वैरूप्यं भवति, अन्यथालक्षण ओदनस्य पाकः, अन्यथालक्षणो गुडस्य, येन ओदनपाको गृहीतः, न असौ अग्निज्ञित्वा गुडं पक्तुम् जानाति। तस्मात् तस्याप्यकर्मकाले प्रयोग उपपद्यते।

शब्दानाञ्च सामञ्जस्यम् ॥ २१ ॥ (यु०)

एवं च सामशब्दानामृक्शब्दानां च सामञ्जस्यं भवति, कवतीषु रथन्तरं गायति इति कवतीशब्दः ऋच एव वक्ति, रथन्तरशब्दश्च साम, इतरथा कवतीशब्दे वा देशलक्षणा स्यात्, रथन्दरशब्दे वा धर्मलक्षणा। तस्मात् गीतौ सामशब्दः इति। (७। २। १ अ०)।

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य द्वितीयः पादः।

---

सप्तमस्य अध्यायस्य तृतीयः पादः।

---

अग्निहोत्रादिनाम्ना धर्मातिदेशाधिकरणम्।

उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥ (सि०)

नाम्ना धर्म्मप्रदेशं वक्ष्यामः इत्यादौ प्रतिज्ञातं सोऽयम् उच्यते। कुण्डपायिनामयने श्रूयते, मासमग्निहोत्रं, जुह्वति इति। तत्र एतत् समधिगतं, नैयमिकादग्निहोत्रात् कर्म्मान्तरमेतत् इति। अधुना अग्निहोत्रशब्दश्चिन्त्यते, कथम् अयं प्रयुक्तः? इति, तदर्थमारभ्यते, उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् इति, उक्तम् आदौ, क्रियाभिधानं, कर्म्मनामधेयम्, अग्निहोत्रशब्दः इति, तत्प्रख्यं च अन्यशास्त्रम् (१।४।४सू०) इत्यत्र। तस्य अन्यत्र श्रुतौ कौण्डपायिनामयनीये जुहोतौ विधिप्रदेशः स्यात्, धर्म्मप्रदेशः, नैयमिकस्य अग्निहोत्रस्य ये धर्म्माः, तेऽस्मिन् अनेन नाम्नाऽतिदिश्येरन् किंकारणम्?। उच्यते, परशब्दोऽयं परत्र वृत्तः, परशब्दस्य परत्र वृत्तौ तद्भावो गम्यते, स यत्र विज्ञातो भवति, तत्रानूद्यते, यथा, सिंहो देवदत्तः इति। यत्र अविज्ञातः तत्र विधीयते, यथा, अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम् इति। इह च अविज्ञातोऽस्य जुहोतेः अग्निहोत्रवद्भावः, तस्मात् स विधीयते, मासमग्निहोत्रं जुहोति इति अग्निहोत्रवत् जुहोति इति। कथं पुनरसति वतिप्रत्यये वत्यर्थः शक्योऽवगन्तुम्? इति। उच्यते, साहचर्य्यात्, अग्निहोत्रशब्दोऽयं कर्मणा सम्बद्धः, तत्सहचरितदोहनादिधर्मवत्तां लक्षणया शक्नोति गमयितुम्, शक्नोति चेत् गमयितुम्, प्रदेष्टुम् अपि शक्नोति, एवमन्तरेणापि वतिं, वत्यर्थः शक्योऽवगन्तुम् इति।

अपूर्वं वापि भागित्वात्॥ २॥ (पू०)

वा अपि इति विपर्य्यासेन प्रयुक्ते, अपि वा इत्यर्थः। अपि वा अपूर्वे एते उभे अपि कर्मणी स्यातां, न कौण्डपायिनामयनीयो जुहोतिर्नैयमिकपूर्वः, साधारणं च नामधेयम् उभयोः। कुतः ?। भागित्वात्, अयमपि जुहोतिर्भागी एतस्य नामधेयस्य, यथैव तत्र अग्निहोत्रं जुहोति इति समुच्चारणम्, एवम् इहापि, तत्र तुल्ये समुच्चारणे तस्यैव एतत् नामधेयं, न अस्य इत्यत्र विशेषहेतुर्नास्ति तस्मात् उभयोः साधारणं नाम इति नास्ति धर्मप्रदेशः।

नैतत् युक्तं कुतः ?

## नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥ (उ०)

औत्पत्तिको हि नामिनाम्नोः सम्बन्धः, यन्नाम यस्मिन् अर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धं, तस्मिन् एव सदा विज्ञेयं, न अन्यत्र च, तथा अव्यवस्थायां शब्दार्थे विश्वासो न स्यात्। उक्तम्, अन्यायश्च अनेकार्थत्वम् इति, यदा च नोभयार्थः, तदा नैयमिकं तावत् आह, तत्सादृश्यविधानार्थं च इतरत्रापि प्रयोग उपपद्यते इति नास्ति इतराभिधानत्वे हेतुः। तस्मात् विधिप्रदेशः स्यात्।

अत्र आह, कस्मात् पुनः तन्नामधेयम् इदम् इह प्रयुक्तम् इत्युच्यते, न पुनः एतन्नामधेयं तत्र इति ?। तत आह,

## प्रत्यक्षाद्गुणसंयोगात् क्रियाभिधानं स्यात्तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥ (आ० नि०)

नैयमिकेऽग्निहोत्रे प्रत्यक्षो गुणसंयोगः, प्रत्यक्षविहिता धर्म्माः सन्ति, इत्थं दोग्धि इत्थं अपनयति, चतुरुन्नयति, खादिरी अग्निहोत्रसमिद्भवति, इत्थं जुहोति, एवं प्रत्यक्षाद्गुणसंयोगात्, नैयमिकस्य तत् नामधेयम् इह प्रयुज्यमानं,दोहनादि क्रियाभिधानं स्यात्, धर्मप्रदेशकम् इत्यर्थः । अस्य पुनः जुहोतेर्न केचित् धर्माः सन्ति, तदभावे तेषां धर्माणामभावे अप्रसिद्धं स्यात्, न प्रज्ञायेत, किमर्थम् अयम् अग्निहोत्रशब्दः इह प्रयुक्तः ? इति ।

एवं वा, प्रत्यक्षो गुणसंयोगो, नैयमिकस्य द्रव्यदेवतासंयोगः, दध्ना जुहोति, पयसा जुहोति, अग्नये च प्रजापतये च सायं जुहोति इति । एतस्मात् प्रत्यक्षाद्गुणसंयोगात् क्रियाभिधानं स्यात्, कर्मनामधेयं,इत्थंरूपो जुहोतिः अग्नि होत्राख्यः इति । अथ इतरजुहोतेः रूपं नास्ति, तदभावेऽप्रसिद्धं स्यात्, न ज्ञायेत, कीदृशं तदग्निहोत्रम् ? इति ।

ननु मासोऽस्य रूपं भविष्यति । न मासः कर्म्माङ्गं, कर्त्तृधर्मः सः । अपि च, अग्निहोत्रं तु मासे विधीयते, न मासेन अग्निहोत्रं रूप्यते । तस्मात् नैयमिकस्य, एतन्नामधेयम्, इतरत्र तद्वदतिदेशः इति । (७ । २ । १ अ०) ।

किम् एष एव उत्सर्गः, सर्वं कर्मनाम, अन्यत्र श्रूयमाणं धर्माणां ग्राहकम् ? इति । एवं खलु प्राप्तम् । एवं प्राप्ते इदम् आरभ्यते,



प्रायणीयेतिनाम्ना धर्म्मानतिदेशाधिकरणम्।

### अपि वा सत्रकर्म्मणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥ (सू०)

गवामयने श्रूयते, वैश्वानरो ज्योतिष्टोमः प्रायणीयम् अहर्भवति इति। अस्ति तु द्वादशाहे प्रथमम् अहः प्रायणीयं नाम, प्रायणीयोऽतिरात्रे इति। तयोर्नानात्वं तेनैव न्यायेन सिद्धं, प्रकरणान्तरे प्रयोजनान्यत्वम् (२।३।२४सू०) इति। तत्र अयं प्रायणीयशब्दः परत्रापि श्रूयमाणो न धर्म्माणां ग्राहकः, किन्तर्हि ? गुणार्थैषा श्रुतिः। कथम् ?। लक्षणया नामधेयं धर्म्माणां ग्राहकम् उक्तम्, असति च श्रुत्यर्थे लक्षणार्थो ग्राह्यः,' इह तु श्रुत्यर्थः एव सम्भवति, गुणार्थः एष शब्दः, गुणेन क्रियायोगेन, तस्मिन् कर्म्मणि श्रुत्यैव प्रयुज्यते, प्रयन्ति अनेन इति प्रायणीयं, प्रवर्त्ततेऽनेन सत्रम् इति। वाक्यशेषश्च अस्य, एतमेवार्थम् आह, ज्योतिरेव पुरस्तात् दधाति इति, येन ज्योतिः प्रायणीयं भवति, तेन ज्योतिः पुरस्तात् क्रियते इत्यर्थो, ज्योतिरेव पुरस्तात् दधाति इति। तस्मात् न अयमतिदेशः। (७।३।२अ०)

---

सर्व्वपृष्ठशब्देन षट्पृष्ठानामतिदेशाधिकरणम्।

### विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्योतिष्टोमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः ॥ ६ ॥ (पू०)

विश्वजित् सर्वपृष्ठो भवति इति श्रूयते। तत्र विचा-

ध्यते, किम् अयम् अनुवादः, विधिः ? इति । किं प्राप्तम् ? अनुवादः इति । कुतः ? । यो हि असर्वपृष्ठः, तस्य सर्वपृष्ठता विधेया, यस्तु सर्वपृष्ठ एव, तस्य तया किं विहितया ? अयं च सर्वपृष्ठ एव । कथम् ? । तत्पूर्वकत्वात्, ज्योतिष्टोमपूर्वकत्वात्, ज्यौतिष्टोमिकानि स्तोत्राणि अत्र प्राप्यन्ते, तेषु माहेन्द्रस्तोत्रादीनि चत्वारि सन्ति, तानि सर्वाणि अस्य, तैरयं सर्वपृष्ठो भवति । ननु न तानि पृष्ठानि । उच्यते, अस्ति च पृष्ठशब्दः, तेषु अस्ति पृष्ठशब्दः, समदशानि पृष्ठानि इति तस्मात् अनुवादः ।

षड़हाद्वा तत्र हि चोदनाः ॥ ७ ॥ (सि०)

न अयम् अनुवादः । किन्तर्हि ? विधिः । अनुवादोऽप्रवृत्तिविशेषकरोऽनर्थकः स्यात् । अपि च ज्योतिष्टोमे न पृष्ठबहुत्वम् अस्ति, यस्य अयम् अनुवादः स्यात् । षड़हे तु तदस्ति, तत्र हि चोदनाः, पृष्ठानां रथन्तरं पृष्ठं भवति इत्येवमाद्याः । तस्मात् षाड़हिकानामतिदेशको विधिः इति ।

लिङ्गाच्च ॥ ८ ॥ (यु०)

लिङ्गं चैतमर्थं दर्शयति, पवमाने रथन्तरं करोत्यार्भवे बृहत्, मध्ये इतराणि, वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्य इति विनिवेशपरे वाक्ये षाड़हिकानि पृष्ठानि दर्शयति ।

उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ९ ॥ (आ० नि०)

अथ यदुक्तम्, अस्ति च पृष्ठशब्दः, इति। तत्र ब्रूमः, न तु एष औत्पत्तिकः पृष्ठशब्दः, उत्पन्नानां स्तोत्राणाम् असौ अधिकारः, यान्येतानि पृष्ठानि इति, ज्ञाते च तेषां पृष्ठत्वे, तत् उपपद्यते, न च, तत्र ज्ञातम्। कथं तर्हि अयम् अनुवादः ?। लिङ्गसमवायात्, एकं तत्र पृष्ठं माहेन्द्रस्तोत्रम् इति, षाड़हिकानां पुनः पृष्ठत्वं ज्ञातम्। कथम् ?। तत्र हि चोदनेत्युक्तं, तेषां वादे, श्रौतः पृष्ठशब्दस्य अर्थः परिगृहीतो भवति, इतरथा लाक्षणिकः। तस्मात् षाड़हिकानां प्रदेशः इति।

द्वयोर्विधिरिति चेत् ॥ १० ॥ (आ०)

इति चेत् पश्यसि, षाड़हिकानां पृष्ठानां विधिः इति, नैतत् युक्तम्। किं कारणम् ?। द्विकर एवं सर्वपृष्ठशब्दः अभ्युपगम्यते, पृष्ठानि च विदधाति, तेषां च सर्वत्वम्। अस्तु, को दोषः ?। असम्भवः इत्याह, यदि पृष्ठशब्दः पृष्ठानि विदधाति, सर्वशब्देन न शक्यते विशेषयितुम्। अथ अनुवदति, तथा शक्यते। पृष्ठानि त्वविहितानि भवन्ति, तेषु असत्सु कस्य इदं सर्वत्वं विधीयते, उभयक्रियायाञ्च असम्भवः।

अथ अत्र, बृहद्रथन्तरयोर्विकल्पेन प्राप्तयोः सामस्त्यं केवलं विधीयते, सर्वपृष्ठो भवति इति। उभे अपि बृहद्रथन्तरे भवतः, नैकम् इति। ततोऽयं दोषो न भवति। तस्मात् द्वयोरधिकारः।

## न व्यर्थत्वात्सर्व्वशब्दस्य ॥ ११ ॥ (आ० नि०)

नैवमेतत्। कुतः?। व्यर्थत्वात् सर्वशब्दस्य, एवं सति सर्वशब्दो व्यर्थो भवति अर्थशून्यः, अयं हि बहुविषयो द्वयोर्न युज्यते। षाड़हिकानां तु विधाने न एष दोषः। ननु च तत्रापि द्विकरः शब्दो भविष्यति, उच्यते। न भविष्यति, सर्वत्वं केवलं पृष्ठानां विधास्यति, न पृष्ठानि। ननु उक्तं, पृष्ठेषु असत्सु कस्य इदं सर्वत्वं विधीयते? इति। उच्यते, पृष्ठानां सर्वत्वं हि विहितं, तत् सम्पादयितव्यं, न च पृष्ठानि अकुर्वता, तत् सम्पादयितुम् शक्यते, तत्र अर्थात् पृष्ठानि करिष्यति, एवं न द्वार्थः शब्दो भविष्यति, सर्वशब्दश्च समर्थितः तस्मात् षाड़हिकानाम् अतिदेशः इति। (७।३।२ अ०)।

---

अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम्।

## तथावभृथः सोमात् ॥ १२ ॥ (सि०)

वरुणप्रघासेषु श्रूयते, वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति इति। तत्र सन्देहः, किं दार्शपूर्णमासिके अपां व्युत्सेके तुषनिष्कासं विधीयते, उत सौमिकादवभृथात् धर्मातिदेशः? इति। किं युक्तम्? दार्शपूर्णमासिके गुणविधिः, एवं सन्निहितप्रत्ययोऽनुगृह्यते, सन्निहितो हि असौ चोदकेन प्रापितः। ननु न असौ अवभृथः। उच्यते, अस्ति तत्र अवभृथशब्दः इति, एष वै दर्शपूर्णमासयोरवभृथः इति

एवं प्राप्ते इदम् आह, तथा अवभृथः सोमात्, यथा षड्हात् पृष्ठानाम् अतिदेशः, एवं सौमिकात् अवभृथात् इह धर्मातिदेशः। कुतः?। अभिहितो न्यायः, उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्। (७। २। १सू०) इति।

## प्रकृतेरिति चेत् ॥ १३ ॥ (आ०)

अथ यदुक्तं, दार्शपौर्णमासिके अवभृथे गुणविधिर्भवतु इति, तस्य कः परिहारः? इत्याभाषान्तं सूत्रम्।

## न भक्तित्वात् ॥ १४ ॥ (आ० नि०)

नैतत् युक्तम्। कुतः?। यतो नास्ति दर्शपूर्णमासयोः अवभृथः। ननु, एष वै दर्शपूर्णमासयोरवभृथः इति श्रूयते। सत्यं श्रूयते,न तु एवम् अवभृथत्वम् अस्य भवति। कथम्?। उच्यते, एष वै दर्शपूर्णमासयोरवभृथः इत्येतस्य वाक्यस्य द्वयी वचनव्यक्तिः,निर्ज्ञातावभृथत्वस्य पदार्थस्य वा दर्शपूर्णमाससम्बन्धः उच्यते, यथा, देवदत्तो यज्ञदत्तस्य पुत्त्रः इति निर्ज्ञातपुत्त्रत्वस्य देवदत्तस्य यज्ञदत्तसम्बन्धः उच्यते निर्ज्ञातसम्बन्धस्य वा अनिर्ज्ञातावभृथत्वस्य अवभृथत्वं यथा, अयम् आम्नो यज्ञदत्तस्य पुत्त्रः इति, निर्ज्ञातयज्ञदत्तसम्बन्धस्य आम्नस्य पुत्त्रत्वम् उच्यते। तदस्य अपां व्युत्सेकस्य दर्शपूर्णमाससम्बन्धः प्रकरणात् निर्ज्ञातः, न अवभृथत्वम्। अतोऽस्य अवभृथत्वम् उच्यते, न च अयम् अवभृथः।

ननु अयम् अप्यवभृथो भवतु। नैतत् युक्तम्, अन्यायो

ह्नि अनेकार्थत्वम् । कथं तर्हि शब्दप्रयोगः ? । सादृश्यात् । किं सादृश्यम् ? । अप्सु सम्बन्धः, स एष भक्त्या प्रशंसावादः अपां व्युत्सेकस्य, अवभृथः इवायम् इति, यथा आस्ते मुक्तवादः । तस्मात् नास्ति दर्शपूर्णमासयोरवभृथः । अतो नात्र गुणविधिः ।

## लिङ्ग-दर्शनाच्च ॥ १५ ॥ (यु० २)

लिङ्गं चैतम् अर्थं दर्शयति । किं लिङ्गं भवति ? । एवम् आह, नायुर्दां जुहोति, न साम गायति, न वा गमनमन्त्रं जपति इति, सौमिकावभृथधर्म्माणां प्रतिषेधं ब्रुवन् तद्धर्म्मप्राप्तिं दर्शयति । तस्मात् सौमिकात् अवभृथात् धर्म्मप्रदेशः इति । (७ । ३ । ४ अ०) ।

---

वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकताधिकरणम् ।

## द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥

वारुणप्राघासिकोऽवभृथः, सौमिकात् अवभृथात् धर्म्माणां ग्राहकः इत्युक्तम् । तत्र इदं चिन्त्यते, किं पुरोडाशद्रव्यकः असौ, उत तुषनिष्कासद्रव्यकः ? इति । किं प्राप्तम् ? पुरोडाशद्रव्यकः इति । कुतः ? । नाम्ना पुरोडाशः प्राप्यते । ननु प्रत्यक्षश्रुतं तुषनिष्कासम् । सत्यं प्रत्यक्षश्रुतं, न तु शक्यते विधातुम् । अवभृथः अत्र विधीयते, अवभृथं

कुतः ?। कर्मणः अप्रवृत्तित्वात् तद्बन्धनत्वात् च फलादीनां कर्म्म तावत् न प्रवर्त्तते। किङ्कारणम् ?। विध्यन्तेन धर्म्माः प्रवर्त्तन्ते, न च कर्म्म विध्यन्तविहितं,विध्यादिविहितं तत्। तस्मात् न प्रवर्त्तते, तस्याप्रवृत्तित्वात् फल-नियम-कर्त्तृ-समुदायस्य अनन्वयः अप्रवृत्तिः इत्यर्थः। कुतः ?। तद्बन्धनत्वात्, फलं तावत्, दर्शपूर्णमासाभ्यां यजेत इति, दर्शपूर्णमाससंयुक्तं श्रुतं, तत् यत्र दर्शपूर्णमासौ, तत्र भवितुमर्हति, न च सौर्य्यादिषु तौ स्तः, अतः स्वर्गस्यापि तत्राभावः। एवं नियमोऽपि कर्मबन्धनः, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत इति, स दर्शपूर्णमासाभावे कथं स्यात्। तथा कर्त्ता कर्मबन्धनः, दर्शपूर्णमासाभ्यां स्वर्गकामः इति, सोऽपि कथं तयोरसतोः स्यात्। समुदायोऽप्याग्नेयादीनां, तानि सौर्य्यादिषु न सन्तीति तत्समुदायः कथं तत्र भवेत्। तस्मात् तेषाम् अप्रवृत्तिः।

## प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥ (यु०)

अपि च धर्माणां प्रवृत्तिः कर्मार्था, कर्मण उपकर्त्तुम्, न च फलादीनि कर्मण उपकुर्वन्ति, फलं तावत् पुरुषस्य उपकरोति, न कर्मणः, उक्तं हि फलं च पुरुषार्थत्वात् (३।१।५ सू०) इति। नियमोऽपि न कर्मधर्मः, कर्तृधर्मोऽसावित्युक्तं, कर्त्तुर्वा श्रुतिसंयोगात् (२।४।२सू०) इति। तथा कर्त्ता स्वर्गकामो न कर्मार्थः, कर्म स्वर्गकामार्थं, न हि स्वर्गकामः कर्मण उपदिश्यते, स्वर्गकामो यजेत इति, किन्तर्हि, कर्म स्वर्गकामस्य उपदिश्यते, स्वर्गकामो यजेत,

नान्यत् कुर्यात् इति । तथा समुदायो न कर्मार्थः, फलार्थोऽसौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति । एवम् एतेषां कर्मणोऽनुपकारकत्वात्, प्रवृत्तिः अनर्थिका स्यात् । तस्मात् न प्रवर्त्तेरन् ।

अश्रुतित्वाच्च ॥ २२ ॥ (आ॰ नि॰)

अत्राह, यदि दर्शपूर्णमाससंयोगात् फलादीनामप्रवृत्तिः, प्रयाजादीनामपि तत्सम्बन्धात् अप्रवृत्तिः प्राप्ता, तान्यपि हि तत्संयुक्तानि इति । उच्यते, यद्यपि तानि दर्शपूर्णमासयोः श्रुतानि, विध्यन्तेन तु सौर्यादिष्वपि अतिदिष्टानि । फलादीनि तु न विध्यन्तेन अतिदिश्यन्ते, तेषां यदि प्रत्यक्षा प्रवर्त्तिका श्रुतिः स्यात्, ततः प्रवर्त्तेरन्, न च असावस्ति । तस्मात् अश्रुतित्वात् न प्रवर्त्तन्ते । (८।१।१२ अ॰) ।

---

गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम् ।

गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥२३॥ (पू॰)

इह गुणकामा उदाहरणम्, गोदोहनेन प्रणयेत् पशुकामस्य, उपास्मै गायता नरः इति, ग्रामकामाय प्रतिपदं कुर्यात् इत्येवमादयः । तत्र विचार्यते, किं गुणकामानां वैकृतेषु प्रवृत्तिः, उत न ? इति । ततः सूत्रेणैव उपक्रमः, गुणकामेषु आश्रितत्वात्, प्रवृत्तिः स्यात्, प्रवृत्तिः गुणकामानाम् । कुतः ? । आश्रितत्वात्, गोदोहनं प्रणयनाश्रितं, गोदोहनेन प्रणयेत् इति । तच्च प्रणयनं प्रवर्त्तते,

आश्रये च प्रवर्त्तमाने तदाश्रितमपि प्रवर्त्तते। यथा पटे आकृष्यमाणे तदाश्रितं चित्रमप्याकृष्यते, यथा च चमसः प्रवर्त्तते, यथा च खादिरं वीर्य्यकामाय यूपं कुर्य्यात्, इति एवं गोदहनम् अपि प्रवर्त्तेत। गोदोहने च प्रवर्त्तमाने तदाश्रितः कामोऽपि प्रवर्त्तितुमर्हति। तस्मात् गुणकामानाम् प्रवृत्तिः।

## निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥ (सि०)

निवृत्तिर्वा गुणकामानाम् अप्रवृत्तिः। कुतः?। कर्मभेदात्, कार्य्यभेदात् इत्यर्थः। अन्यत् कार्य्यं गोदोहनस्य, अन्यत् चमसस्य, चमसः क्रत्वर्थो, गोदोहनं तु पुरुषार्थः। तदुक्तम्, यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् (४।१।२ सू०) इत्यत्र। अक्रत्वर्थः, किमर्थं प्रवर्त्तेत? क्रतूपकाराय हि तस्य प्रवृत्तिः। एवं प्रतिपदः। तस्मात् न प्रवर्त्तेरन् गुणकामाः।

यत्तु उपन्यस्तं, यथा खादिरं वीर्य्यकामाय यूपं कुर्य्यात् इत्यत्र प्रवृत्तिरेवम् अत्रापि इति, तत्र ब्रूमः,

## अपि वाऽतद्विकारत्वात् क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥ (पू० यु० नि०)

अपि वा, एवंविधेषु प्रवृत्तिः स्यात्। कुतः?। अतद्विकारत्वात्, न खादिरः क्रत्वर्थविकारः, अयम् अपि क्रत्वर्थ एव, तदुक्तम्, एकस्य तु उभयत्वे संयोगपृथक्त्वम् (४।३।५ सू०) इति, क्रत्वर्थश्चेत् पलाशवत् प्रवर्त्तेत, तस्मिंश्च प्रवर्त्तमाने तदाश्रितः कामोऽपि प्रवर्त्तते, खादिरेण हि स

सिध्यति, स च खादिरोऽस्ति, तस्मात् कामं साधयिष्यति। (८।१।१४ अ०)।

———

सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम्।

## एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः इति श्रूयते। अस्ति तु प्रकृतावभिमर्शनद्वयं, चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्याम् इति, तत् इह चोदकेन प्राप्यते। तत्र संशयः, किं सौर्यो यदा पौर्णमास्यां प्रयुज्यते, तदा चतुर्होत्राऽभिमृष्टव्यः। यदाऽमावास्यायां, तदा पञ्चहोत्रा। उत उभयत्र विकल्पः, चतुर्होत्रा वा पञ्चहोत्रा वा? इति। किं प्राप्तम्? व्यवस्था इति। कुतः?। चोदकानुग्रहात् प्रकृतौ व्यवस्था कृता, इहापि चोदको व्यवस्थां प्रापयति।

एवं प्राप्ते उच्यते, एकस्मिन् कर्मणि अत्र सौर्यविकल्पः। कुतः?। अविभागो हि चोदनैकत्वात्, एकैषा चोदना, सौर्यं चरुम् निर्वपेत् ब्रह्मवर्चसकामः इति, तत्र अविभागो भवतु उभावपि अभिमर्शने प्राप्येते, तयोरेकार्थत्वात् समुच्चयो न सम्भवति, तस्मात् विकल्पः। यत्तु, प्रकृतौ व्यवस्था इति। न असौ कालकृता, किं तर्हि समुदायकृता, न च, सौर्ये तौ समुदायौ स्तः।

यद्येवम् अभिमर्शनमेव तर्हि न प्राप्नोति, तयोः

समुदाययोरभावात् इति । अत्र उच्यते, न प्राप्नोति, यदि समुदाययोः अभिमर्शनम् उच्येत, तयोस्त्वनभिमृष्टव्यत्वात्, समुदायिनां तदुच्यते लक्षणया, समुदायिविकारश्च सौर्य्यः । तस्मात् तत्रापि चोदकः प्रापयति तत् । (८।१।१५ अ०) ।

—:०:—

सौर्य्ये चरावाग्नेयधर्म्मातिदेशाधिकरणम् ।

लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥ (पू०)

सौर्य्ये कर्मणि दार्शपौर्णमासिकी विध्यन्तः इत्युक्तम्, इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः (८।१।११ सू०) इति, सन्ति तु तत्र कर्माणि आग्नेयादीनि । तत्र विचारः, किं यस्य-कस्यचित् दार्शपौर्णमासिकस्य कर्मणः सौर्य्ये विध्यन्तः, उत आग्नेयस्य ? इति । किं प्राप्तम् ? विकल्पः । कुतः ? । लिङ्गसाधारण्यात्, सौर्य्ये दार्शपौर्णमासिकविध्यन्तप्राप्तौ यल्लिङ्गम् उपदिष्टं, प्रयाजे-प्रयाजे कृष्णलं जुहोति इति, तत् साधारणं सर्व्वेषां विध्यन्ते सम्भवति । न च समुच्चयः, तस्मात् विकल्पः ।

ऐकार्थ्याद्वा नियम्येत पूर्व्ववत्त्वात् विकारो हि ॥ २८ ॥ (सि०)

आग्नेयस्य विध्यन्तो नियम्येत । कुतः ? । ऐकार्थ्यात्, एकदेवतत्वात् इत्यर्थः, आग्नेय एकदेवत्यः, सौर्य्योऽपि । तेनैकदेवतत्वेन लिङ्गेन आग्नेयविध्यन्तो नियम्येत, पूर्व्ववत्त्वात्, पूर्व्ववानयं सौर्य्यः, पूर्व्वत्र अभिहितं विध्यन्तम् अपेक्षते, विकारो हि, विकृतिः एषा, सर्व्वाश्च विकृतयः

पूर्ववत्त्वः चोदनावाक्यानामसमाप्तत्वात्। तत्र लिङ्गेन विध्यन्तनियमो भवति इत्युक्तम्। अस्ति च एकदेवतत्वं लिङ्गम्। तेन आग्नेयविध्यन्तः।

## अश्रुतित्वान्नेति चेत् ॥ २९ ॥ (आ०)

अत्र आह, स्यात् एतदेवं, यदि अनेकत्वं श्रूयते, न तु श्रूयते। कथम्?। तद्धितेन अयं निर्देशः, सौर्यम् इति, तथा, आग्नेयम् इति। तत्र वचनव्यक्तिर्न ज्ञायते, किं सूर्यो देवता अस्य, उत सूर्यौ च सूर्याश्च इति, तथा आग्नेयेऽपि।

## स्यात् लिङ्गभावात् ॥ ३० ॥ (आ० नि०)

स्यात् व्यवस्थितिः एकत्वस्य। कुतः?। लिङ्गभावात्, लिङ्गम् अत्रास्ति। किम्?। वाक्यशेषे एकत्वं श्रूयते, सौर्यं तावत् अमुमेव आदित्यं स्वेन भागधेयेन उपधावति, स एवैनं ब्रह्मवर्चसङ्गमयति इति। आग्नेयेऽपि, अङ्गिरसो वा इत उत्तमाः स्वर्गमायंस्ते यज्ञवास्त्वभ्यायंस्ते पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तमपश्यंस्तमब्रुवन् इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति, स तानाह न ध्रिये, तमब्रुवन् अग्नये ध्रियस्वेति, सोऽब्रवीत्, ध्रियेऽहं, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पूर्णमास्यां चाच्युतो भवति अग्निमेव स्वेन भागधेयेन समर्द्धयति इति।

## तथा चान्यार्थदर्शनम् ॥ ३१ ॥ (नि०)

अनुवाक्यायाम् एकत्वश्रवणं, अग्निर्मूर्द्धा दिवः

त्याग्नेये, उदुत्यञ्जातवेदसम् इति सौर्ये। ननु पुनरुक्तं एतल्लिङ्गद्वयोपदर्शनम् इति। तदुच्यते। नैतत् पुनरुक्तं एकमत्र चोदनागतम्, एकं मन्त्रगतम्। चोदनागतं प्रापकं, मन्त्रगतं प्राप्तस्य द्योतकम् इति। (८।१।१६ अ०)।

---

हविर्देवतयोः सन्निपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम्।

## विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥ (मि०)

इदं श्रूयते, ऐन्द्रमेकादशकपालं निर्वपेत् इति, आग्नेयं पयः इति। तत्र सन्देहः, किं देवतासामान्यात् ऐन्द्रपुरोडाशसान्नाय्यस्य विध्यन्तः, आग्नेये च पयसि औषधस्य, देवतासामान्यं बलवत्तरम्। अथ हविःसामान्यात् उत्तरत्र सान्नाय्यस्य, पूर्वत्र औषधस्य, हविःसामान्यं बलीयः? इति।

किं प्राप्तम्? उच्यते, देवतासामान्यं बलीयः, इति। कुतः?। मुख्यत्वात्, मुख्यनियन्त्रिता देवता, ऐन्द्रम् आग्नेयम् इति। जघन्यनियन्त्रितं हविः। तयोर्विरोधे मुख्यानुग्रहो न्याय्यः, मुख्यस्य अविरुद्धप्रवृत्तित्वात्, जघन्यस्य तु मुख्येन विरुद्धा प्रवृत्तिः। तस्मात् देवतासामान्यं बलीयः।

इति प्राप्ते ब्रूमः, विप्रतिपत्तौ हविषा नियम्येत, विप्रतिपत्तौ एतस्यां हविर्देवतयोः, हविषा विध्यन्तो नियम्येत। कुतः?। कर्मणस्तदुपाख्यत्वात्, कर्म देवतां प्रति

द्रव्यस्य उत्सर्गः, स च हविःषु उपाख्यायते, उपलभ्यते इत्यर्थः। हविः त्यज्यमानं दृश्यते। किमतः ?। अतो हविः कर्मणः प्रत्यासन्नं, प्रत्यासत्तिश्च लिङ्गम्। ननु देवतापि यागेन सम्बद्धा, न तया विना, यागो भवति। उच्यते, सत्यं सम्बद्धा, आरादुपकारिणी तु सा, नासौ त्यज्यते, तस्मात् बहिरङ्गम्। अतो हविःसामान्यं बलीयः।

तेन च कर्मसंयोगात् ॥ ३३ ॥ (यु०)

तेन च हविषा संयुज्य कर्म्म चोद्यते, ऐन्द्रम्, आग्नेयम् इति हविःप्रधानः शब्दः। किमतः ?। अतो हविरत्र बुद्धौ सन्निहितं, तल्लिङ्गं भवति। यथा धूमो बुद्धिविषयतामापन्नोऽग्नेर्लिङ्गं, न विद्यमानः।

ननु देवताऽपि अत्र श्रूयते, ऐन्द्रम्, आग्नेयम् इति। उच्यते,

गुणत्वेन देवताश्रुतिः ॥ ३४ ॥ (आ० नि०)

विशेषणत्वेन देवता श्रूयते, हविर्विशेष्यत्वेन, विशेष्यं च बुद्धौ सन्निहितं भवति, न विशेषणं, तद्विशेष्यं विशेष्य निवर्त्तते। कथं ज्ञायते ?। विशेष्यानुबन्धसंयोगात्, यथा, राजपुरुषः पूज्यः इत्युक्ते पुरुषः पूज्यो गम्यते, न राजा। एवम् इहापि ऐन्द्रं पयः इत्युक्ते हविः बुद्धौ सन्निधीयते, न देवता। यच्च बुद्धौ सन्निहितं, तल्लिङ्गम् इत्युक्तम्। तस्मात् हविःसामान्यं बलीयः। अतः ऐन्द्रे पुरोडाशे आग्नेयस्य विध्यन्तः, आग्नेये च पयसि सान्नाय्यस्य इति।

गुणत्वेन देवताश्रुतिः इत्येतस्य सूत्रस्य अपरा

व्याख्या। इदं पदोत्तरं सूत्रम्। यदुक्तं हविःसामान्यं बलीयः इति, नैतत् युक्तं, देवतासामान्यं बलीयः इति। कुतः ?। सर्वोऽयं प्रयासो देवताराधनार्थं एव, साऽस्य प्रसन्ना फलं ददाति। एवं श्रूयते, तृप्त एवैनम् इन्द्रः प्रजया पशुभिस्तर्पयति इति, यश्चेन्द्रस्य प्रसादनोपायः इति ज्ञातः, पुनरपि इन्द्रे प्रसादयितव्ये स एवाश्रेयो भवति, तस्मात् देवतासामान्यं बलीयः इति।

अत्र ब्रूमः, स्यात् एतदेवं, यदि देवतातः फलं स्यात्, यागात्तु फलं, स्वर्गकामो यजेत इति श्रूयते। यत्तु, तृप्त एवैनम् इन्द्रः इति, तत्र इदम् उच्यते, गुणत्वेन देवता-श्रुतिः, यागे गुणभूता देवता, तस्या दातृत्वं स्तुत्या उच्यते, यथा, अमात्येन मे ग्रामो दत्तः, सेनापतिना मे ग्रामो दत्तः इति, न च अमात्यः सेनापतिर्वा ग्रामस्य प्रभवति, राजैव प्रभवति, इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः। तस्मात् यथोक्तेनैव न्यायेन हविःसामान्यमेव बलीयः इति। (८। १। १७ अ०)।

---

शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशाधिकरणम्।

## हिरण्यमाज्यधर्म तेजस्त्वात् ॥ ३५ ॥ (पू०)

प्राजापत्यं घृते चरुम् निर्वपेत्, शतकृष्णलमायुःकामः इति श्रूयते। तत् हिरण्यमाज्यधर्म्मं स्यात्, उपांशुयाज-विध्यन्तः तत्र भवेत्। कुतः ?। तेजस्त्वसामान्यात्, तेजस्त्वं

इत्यर्थः। अथ वा हिरण्यमपि तेजस्वित्वात् उज्ज्वलम्, आज्यमपि स्निग्धत्वात् उज्ज्वलमिव। तस्मात् सामान्यात् उपांशुयाजधर्मा अतत्प्रकरणस्थस्य:।

धर्मानुग्रहाच्च ॥ ३६ ॥ (यु०)

हिरण्ये च बहवः, आज्यधर्माः अनुष्ठीयन्ते अवेक्षणादयः, औषधधर्म्मास्तु हीयेरन् अवहन्त्यादयः। तस्मात् अपि आज्यधर्म्माः।

औषधं वा विशदत्वात् ॥ ३७ ॥ (सि०)

अथ वा औषधस्य हिरण्ये विध्यन्तः। कुतः ?। विशदत्वात्. हिरण्यमपि विशदम्, औषधमपि विशदम्। कः पुनरनयोः सामान्ययोर्विशेषः ?। न खलु कश्चित्, किन्तु विशदत्वस्य कारणद्वयम् उपोद्बलकं, तेजस्वितायास्तद्धर्म्मानुग्रह एकः।

चरुशब्दाच्च ॥ ३८ ॥ (यु० १)

चरुशब्दश्च भवति, प्राजापत्यं चरुम् इति। चरुशब्दश्च औषधस्य वक्ता, तत् बलवत् औषधस्य लिङ्गम्।

तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥ (यु० २)

तस्मिंश्च आज्ये श्रपणं श्रूयते, घृते श्रपयति इति। किमतः ?। अत एतद्भवति, औषधविध्यन्तेन श्रपणं प्राप्यते। तत्र केवलम् आज्यं विधायिष्यते, आज्यविध्यन्ते तु श्रपणम् आज्यं च विधीयेयातां, तथा वाक्यम्भिद्येत।

तस्मिंश्च श्रपणश्रुतेः इत्येतस्य अपरा व्याख्या। अत्र

आह, साक्षाद्देवेहाज्यं श्रूयते, तस्मात् तस्य विध्यन्तः इति। ततः उत्तरम् इदं, तस्मिंश्च श्रपणश्रुतेः, दार्शपौर्णमासिकं श्रपणं तस्मिंश्च आज्ये श्रूयते, गुणगतं तत्सामान्यं, हविर्गतं तु वैगुण्यं, चरुशब्दश्च। तस्मात् ते बलवती। (८। १। १८ अ०।

---

मधूदके उपांशुयाजीयाज्यधर्मातिदेशाधिकरणम्।

## मधूदके द्रवसामान्यात्पयोविकारः स्यात् ॥४०॥ (पू०)

चित्रायाम् इष्टौ श्रूयते, दधि मधु घृतं धाना उदकं तण्डुलाः, तत्संसृष्टं प्राजापत्यं भवति इति। तत्र, मधूदके पयोविकारः स्यात्। कुतः?। द्रवसामान्यात्, द्रवे च मधूदके पयोऽपि द्रवम्।

## आज्यं वा वर्णसामान्यात् ॥ ४१ ॥ (सि०)

आज्यं वा इमे विकुर्य्याताम्, उपांशुयाजस्य तयोर्विध्यन्तः स्यात्। कुतः?। वर्णसामान्यात्, समानवर्णे मधूदके आज्येन।

## धर्मानुग्रहाच्च ॥ ४२ ॥ (यु०)

आज्यधर्माश्च बहवः मधूदकयोः शक्याः कर्त्तुम् उत्पवनादयः, न तु पयोधर्मा दोहनादयः।

पूर्वस्य चाविशिष्टत्वात् ॥ ४३ ॥

यत्तु, पूर्वं कारणम् उक्तं, द्रवत्वसामान्यं तदविशिष्टं, आज्यमपि अग्निसंयोगात् द्रवीभवति तस्मात् उपांशुयाजविध्यन्तः मधूदकयोः इति । (८।१।१९ अ०) ।

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमस्याध्यायस्य प्रथमः पादः ।

---

अष्टमस्य अध्यायस्य द्वितीयः पादः ।

---

ऐष्टिक-सौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् ।

वाजिने सोमपूर्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ (पू०)

चातुर्मास्येषु वाजिनेज्या श्रुताः, वाजिभ्यो वाजिनम् इति, सौत्रामण्यां च सुरा ग्रहाः, आश्विनं ग्रहं गृह्णाति, सारस्वतम् ऐन्द्रम् इति । तत्र संशयः, किम् उभयोः सौमिको विध्यन्तः, उत दार्शपौर्णमासिकः? इति । तदुच्यते, वाजिने सौत्रामण्यां च ग्रहेषु सोमपूर्वत्वं, सौमिको विध्यन्तः । कुतः?। ताच्छब्द्यात् सोमशब्दत्वात् । सोमशब्दस्तत्र श्रूयते, सोमो वै वाजिनं सुरा सोमः इति, न तावत् वाजिनं सोमः, न सुरा । न च,

तयोः सोमेन सादृश्यम् अस्ति । सादृश्याच्च परशब्दः परत्र प्रवर्त्तते । तस्मात् सादृश्यम् अत्र विधीयते, सादृश्यं च अत्र सोमधर्म्मलक्षतं शक्यं विधातुम्, न अन्यत्, स एष नाम्ना धर्म्मातिदेशो न विध्यन्तेन, यथा, कौण्डपायिनामयने अग्निहोत्रे ।

अनुवषट्काराच्च ॥ २ ॥ (यु॰ १)

अनुवषट्कारं च सोमधर्मं दर्शयति, वाजिनस्य अग्ने वीहीत्यनुवषट्करोति, सुराया वीहीत्यनुवषट्करोति इति ।

समुपहूय भक्षणाच्च ॥ ३ ॥ (यु॰ २)

समुपहूय भक्षणं च सोमधर्मः, तत्र दृश्यते, शेषं समं वा विभज्य समुपहूय भक्षयन्ति इति ।

क्रयण-श्रयण-पुरोरुगुपयाम-ग्रहणासादनवासोपनहनञ्च तद्वत् ॥ ४ ॥ (यु॰ ३)

क्रयणादींश्च सोमधर्मान् सुरायां दर्शयति, सीसेन क्लीबात्, क्रय्या कुवलसक्तुभिराश्विनं क्रीणाति इति । एका पुरोरुक् एका याज्या, उपयामगृहीतोऽस्य अच्छिद्राय त्वाऽच्छिद्रेणाश्विनं ग्रहं गृह्णाति, गृहीत्वा आसादयति त्रिरात्रं संहता वसन्ति, क्षौमे वाससी उपनद्धानि तोक्मानि शष्पाणि भवन्ति इति, विधौ सति अनेकार्थानि वाक्यानि स्युः, क्रयादीन् सौमिकादींश्च विदधति । तस्मात् उभयोः सौमिको विध्यन्तः ।

हविषा वा नियम्येत तद्विकारत्वात् ॥५॥ (सि०)

हविःसामान्येन वा, अत्र दार्शपौर्णमासिको विध्यन्तो नियम्येत। कुतः?। तद्विकारत्वात्, दार्शपौर्णमासिकस्य हविषो विकारः सुरा वाजिने, औषधविकृतिः सुरा, सान्नाय्यविकृतं वाजिनम्।

प्रशंसा सोमशब्दः ॥ ६ ॥ (पू० यु० नि०)

अथ यदुक्तं, ताच्छब्द्यात् इति। तत्र ब्रूमः,प्रशंसार्थोऽयं सोमशब्दः, न विध्यर्थः, विधायकस्य अभावात्, सोमो वै वाजिनं, सुरा सोमः इति प्रकृष्टफलवत्त्वात् सोमस्य, तद्भावेन सुरा-वाजिनयोः प्रशंसा, यथा, सिंहो देवदत्तः इति पुरुषस्य। तस्मात् नायं नाम्ना धर्मातिदेशः।

वचनानीतराणि ॥ ७ ॥ (पू० लि० नि०)

इतराणि तु सीसक्रयादीनि वाचनिकानि, प्राप्तेरभावात्। अगत्या च वाक्यानाम् अनेकार्थता, सगुणकर्मविधानेन।

व्यपदेशश्च तद्वत् ॥ ८ ॥ (यु०)

शष्पैरेव दीक्षणीयामाप्नोति, तोक्मभिः प्रायणीयां, सिंहलोमभिरातिथ्याम् इति, सोमविकारत्वे प्रत्यक्षमेव दीक्षणीयादीनि प्राप्नुयुः। प्राप्तानाम् शष्पादिभिस्तदाप्तिवचनं नोपपद्यते।

पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥ (लि०)

पशुपुरोडाशता च ग्रहाणां श्रूयते, नैतेषां पशूनां

पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशव: इति। तत्र तावत् अत्र ग्रहाः पुरोडाशाः, ग्रहा एव ते, यदि तु पुरोडाशधर्मकाः, तत एतदुपपद्यते। तस्मात् पौरोडाशिकस्तेषु विध्यन्तः। (८।२।१ अ०)।

---

पशौ सान्नाय्यधर्मातिदेशाधिकरणम्।

## पशुः पुरोड़ाशविकारः स्याद्देवतासामान्यात् ॥ १० ॥ (पू०)

अस्ति ज्योतिष्टोमे पशुः अग्नीषोमीयः, यो दीक्षितो, यत् अग्नीषोमीयं पशुमालभते इति। तत्र सन्देहः, किं पशुः पुरोडाशविकारः, उत सान्नाय्यविकारः? इति। किं प्राप्तम्? पशुः पुरोडाशविकारः स्यात्। कुतः?। देवतासामान्यात्, अग्नीषोमीयः पशुः, पुरोडाशोऽपि तद्देवत्य एव।

## प्रोक्षणाच्च ॥ ११ ॥ (हे० १)

प्रोक्षणं पुरोडाशधर्मः पशौ दर्शयति, अग्नयेत्वौषधीभ्यो जुष्टं प्रोक्षामि इति पशुं प्रोक्षति इति।

## पर्य्यग्निकरणाच्च ॥ १२ ॥ (हे० २)

पर्य्यग्निकरणम् अपि पुरोडाशधर्म्मः, तदपि पशौ दृश्यते आहवनीयात् उल्मुकेन पशुं पर्य्यग्निकरोति इति। तस्मात् पुरोडाशविकारः।

**सान्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ (सि०)**

सान्नाय्यं वा पशुर्विकुर्य्यात्, न पुरोडाशम्। कुतः?। तत्प्रभवत्वात्, पशुतः सान्नाय्यं प्रभवति, पशुश्च। तत् मिथः-प्रत्यासन्नं, प्रत्यासत्तिश्च लिङ्गं, हविःसामान्यं च देवता-सामान्यात् बलीयः इत्युक्तम्। (८।१।१७ अ०)।

**तस्य च पात्रदर्शनात् ॥ १४ ॥ (यु०)**

तस्य च सान्नाय्यस्य यत् पात्रम् उखा, सा पशौ दृश्यते, यदि पशुरुखायां पचेत् इति। (८।२।२ अ०)।

---

पशौ पयोधर्मातिदेशाधिकरणम्।

**दध्नः स्यान्मूर्त्तिसामान्यात् ॥ १५ ॥ (पू०)**

सान्नाय्यविकारोऽपि दध्नः विकारः स्यात् पशुः, न पयसः। कुतः?। मूर्त्तिसामान्यात्, घनत्वं मूर्त्तिः।

**पयो वा कालसामान्यात् ॥ १६ ॥ (सि०)**

पयो वा पशुर्विकुर्य्यात्, न दधि। सद्यःकालः पशुः, पयोऽपि सद्यःकालम्। दधि तु द्व्यहकालं, पयोऽन्तरितं, तद्बहिरङ्गम्।

**पश्वानन्तर्य्यात् ॥ १७ ॥ (यु० १)**

पशोश्च पयः अनन्तरं, तत्प्रत्यासन्नं, न दधि।

द्रवत्वं चाविशिष्टम् ॥ १८ ॥ (यु० २)

द्रवत्वं पशुपयसोः समानं, पशुरपि द्रवति, पयोऽपि । तस्मात् पयोविकारः पशुः । (८ । २ । ३ अ०) ।

——

आमिक्षायां पयोधर्मातिदेशाधिकरणम् ।

आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥१९॥ (१म पू०)

वैश्वदेवी आमिक्षा उभयोः दधिपयसोर्विकारः स्यात्, उभयभाव्यत्वात्, उभाभ्यां हि सा भाव्यते, तत्र न युज्यते, विशेषोऽस्यैव, न इतरस्य इति । तस्मात् उभयोः ।

एकं वा चोदनैकत्वात् ॥ २० ॥ (सि०)

एकं वा विकुर्य्यात् दधि पयो वा, नोभे, चोदनैकत्वात्, एकैषा चोदना, वैश्वदेव्यामिक्षा इति, सा एकेन विध्यन्तेन निराकाङ्क्षीक्रियते । तस्मात् एकं विकुर्य्यात् ।

यत्तु, न युज्यते विशेषः इति । तत्र उच्यते,

दधिसङ्घातसामान्यात् ॥ २१ ॥ (२य पू०)

संहतं दधि, आमिक्षाऽपि संहता, पयो द्रवम् । एष विशेषः । तस्मात् दध्नो विकारः इति ।

पयो वा तत्प्रधानत्वाल्लोकवत् दध्नस्तदर्थत्वात् ॥२२॥ (सि०)

पयो वा आमिक्षया विक्रियते, न दधि, पयःप्रधान-

त्वात्, अस्य च संसर्गस्य। किं प्राधान्यम् पयसः ?। भूयस्त्वं, प्रभूतं तत्र पयः, अल्पं दधि। दध्नः च तदर्थत्वात्, दधि च तत्र पयो घनीभावयितुम् उपादीयते। लोकवत्, लोकेऽपि-पय एव घनीभावयितुम् दधि उपादीयते। कथम् ?। दध्य-भावे अन्येन अम्लेनापि काञ्जिकादिना क्रियते, तत्रापि च आमिक्षाशब्दो भवति, दधिनियमः अम्ले हि अदृष्टार्थः तस्मात् पयः एव अम्लसंयोगेन घनीभूतम् आमिक्षा इत्युच्यते। पयश्चेत् आमिक्षा, पयस एव विकारो न्याय्यः।

धर्मानुग्रहाच्च॥२३॥ (यु०)॥

सद्यःकालता धर्मः पयोविकारत्वेन अनुगृह्यते, वैश्वदेवस्य सद्यःकालत्वात्, दधिविकारत्वे बाध्येत। वैश्वदेवोऽपि द्व्यहकालः क्रियेत। तथा तस्य धर्मो बाध्येत, सद्योभावं च दर्शयति, जुषन्तं युज्यं पयः इति, यदि दध्नो विकारः स्यात्, तथा द्व्यहकालभावे दातव्यं, न कथञ्चन पयः स्यात्। तत्र एतद्दर्शनं नोपपद्यते। तस्मात् पयोविकारस्य आमिक्षा, दध्नस्य अधर्मकत्वम्। (८।२।४अ०)।

———

द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम्।

सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात्॥ २४ ॥ (पू०)॥

द्वादशाहोऽहर्गणः, प्रायणीयोऽतिरात्रः, पृष्ठ्यः षडहः, त्रयश्छन्दोमा अविवाक्यम् अहः, उदयनीयोऽतिरात्रः इति, स उभयसंज्ञकः, सत्रमहीनश्च। कथं ज्ञायते ?। अभियुक्ता-

नाम् उपदेशात्, एवं हि उपदिशन्ति, सवमहीनश्च द्वादशाहः इति, शब्दार्थाधिगमे च अभियुक्तोपदेशः प्रमाणम् । संज्ञाव्यवस्थया च तस्य धर्माः आम्नाताः, एको द्वौ बहवोऽपि वा अहीनेन यजेरन्, तान् दीक्षिता याजयेयुः, गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रम् उपेयुः इत्येवमादयः । धर्मभेदाच्च संज्ञाव्यवस्था, यथा, ब्राह्मणः, परिव्राट्, वानप्रस्थः इति, तत् दशमेऽध्याये (६ पा०) वक्ष्यते द्वादशाहस्य सत्रत्वमासनोपायिचोदने यजमानबहुत्वे सत्रशब्दाभिसंयोगात् (५० ॥) यजतिचोदनात् अहीनत्वं, स्वामिनां च अस्थितपरिमाणत्वात् । (५१ ॥) इति, स द्विरात्रादिषु अहर्गणेषु प्रवर्त्तते इत्युक्तम्,गणेषु द्वादशाहस्य (८।१।१७सू०)इति । तत्र सन्दिह्यते, किम् उभयप्रकारोऽसौ विकृतौ प्रवर्त्तते, उत व्यवस्थया, क्वचित् अहीनभूतः, क्वचित् सत्रभूतः ? इति । किं प्राप्तम् ? तस्य उभयथा प्रवृत्तिः स्यात्, एककर्म्यात्, उभयविधस्तत्र प्रवर्त्तेत । कुतः ? । ऐककर्म्यात्, एकम् इदं कर्म्म उभयविधम् इत्युक्तम्, न तस्य प्रवृत्तौ विशेषो गृह्यते,इह एवंविधः, इह न इति । तस्मात् उभयविधः प्रवर्त्तेत । ननु एका चेद्विधा प्रवृत्ता, द्वितीयया कार्य्यं नास्ति । ऐककर्म्यात् विकल्पो भविष्यति, यथा आग्नेयविकारेष्वभिमर्शनस्य ।

अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात्, प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥ (सि०) ॥

अपि वा नैतदेवं, सर्वत्र उभयथा प्रवृत्तिः इति, यत्र

यजतिः श्रूयते, तत्र अहीनभूतस्य प्रवृत्तिः, पारिशेष्यात्। यत्र आसनोपायिचोदना, तत्र सत्त्रभूतस्य। कस्मात्?। प्रकृत्या तुल्यशब्दत्वात्, प्रकृत्या हि विकृतिः तुल्यशब्दा भवति। तस्मात् चोदनासामान्यात् प्रकृतिनियमः। अहीनभूतश्च यजतिचोदनः, द्वादशाहेन प्रजाकामो यजेत इति। सत्त्रभूत आसनोपायिचोदनः, द्वादशाहम् ऋद्धिकामा उपेयुः, द्वादशाहम् ऋद्धिकामा उपासीरन् इति।

**द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात्॥ २६॥ (आ० नि० १)**

अत्र आह, के पुनस्ते अहर्गणाः यजतिचोदनाः, येषु अहीनभूतः प्रवर्त्तते। के वा आसनोपायिचोदनाः, येषु सत्त्रभूतः? इति। तदुच्यते, द्विरात्रादीनाम् ऐकादशरात्रात् अहीनत्वम्, तत्र अहीनभूतः प्रवर्त्तते। तेषां यजतिशब्देन चोदनात्, द्विरात्रेण यजेत इति।

**त्रयोदशरात्रादिषु सत्त्रभूतस्तेष्वासनोपायिचोदनात्॥ २७॥ (आ० नि० २)**

त्रयोदशरात्रम् ऋद्धिकामा उपेयुश्चतुर्दशरात्रं प्रतिष्ठाकामा उपासीरन् इति सुहृद्भूत्वा आचष्टे।

एवं वा, यस्मात् यजतिचोदनोऽहीनः, तस्मात् द्विरात्रादीनामप्यहीनत्वम्, तेऽपि हि यजतिचोदनाः। यस्मात् आसनोपायिचोदनं सत्त्रं, तस्मात् त्रयोदशरात्रादीनि सत्त्राणि, तानि अपि तच्चोदनानि इति।

लिङ्गाच्च ॥ २८ ॥ (यु०)

अग्निष्टोमो वै प्रजापतिः स उत्तरानेकाहानसृजत तमेतं द्विरात्रादयोऽहर्गणा जघुस्त्वम् अस्मान् मा हासी-रिति, तदेषाम् अहीनत्वम् इति द्विरात्रादीनाम् अहीनत्वं दर्शयति । (८ । २ । ५ अ०) ।

---

पञ्चदशरात्रादिषु सवधर्मातिदेशाधिकरणम् ।

अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥ (पू०)

पञ्चदशरात्रं, कुण्डपायिनामयनं च उभावपि अहीनौ । कस्मात् ? । अन्यतरतोऽतिरात्रत्वात्, उभावपि एतौ अन्यतरतोऽतिरात्रौ तेन अहीनौ इति, पञ्चदशरात्रस्तावत्, त्रिवृत् अग्निष्टुदग्निष्टोमः त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः इति । कुण्डपायिनामयनमपि, मासमग्निहोत्रं जुह्वति इत्यारभ्य, यावत् दशरात्रो महाव्रतम् उदयनीयोऽतिरात्रः इति । यश्च अन्यतरतोऽतिरात्रः, स अहीनः । कथम् ज्ञायते ? । तद्भूतेषु अहीनत्वस्य दर्शनात्, तद्भूतेषु अन्यतरतोऽतिरात्रभूतेषु, अहीनत्वं श्रूयते, यत् अन्यतरतोऽतिरात्रः, तेन अहीनः इति ।

अहीनवचनाच्च ॥ ३० ॥ (यु०)

अहीनः इति च अयम् पञ्चदशरात्रः प्रत्यक्षम् उक्तः,

यदन्यतरतोऽतिरात्रः, तेन अहीनः इति। तस्मादपि अहीनः इति।

सत्रे वोपायिचोदनात् ॥ ३१ ॥ (सि०)

सत्रे वा एते, न अहीनौ। कुतः ?। उपायिचोदनात्, ये एव भूतिकार्थमिच्छन्तः, ते एनं पञ्चदशरात्रम् उपेयुः, कुण्डपायिनामयनेऽपि, भूतिकामा उपेयुः इति। कः पुनरेतयोर्लिङ्गयोर्विशेषः ?। चोदनागतमेकं, वाक्यान्तरगतम् अन्यच्च। चोदनागतं, यत् तदन्तरङ्गं भवति, वहिरङ्गम् इतरत्। अयम् च अपरो विशेषः, अहीनलिङ्गेन च नित्येन अहीनस्य संस्तुतिर्नोपपद्यते, उपपत्त्या एतत् अहीनत्वम् उच्यते, यत् अन्यतरतोऽतिरात्रः, तेन अहीनः इति। सा यदि तावत् उपपत्तिः साधिका, ततोऽन्तरेणापि वचनं, सिद्धम् अहीनत्वम्। अथ न साधिका, उच्यमानमपि न सिध्यति। तस्मात् न एतत् वचनं, किन्तर्हि अनुवादोऽयं स्तुत्यर्थः। स्तुतिश्च, नित्येन अहीनलिङ्गेन अन्यतरतोऽतिरात्रत्वेन अहीनस्य नोपपद्यते, यत्कारणं, सर्वं एव अहीनः अन्यतरतोऽतिरात्रः। सत्रस्य तु उपपद्यते येन तावत् अयम् अन्यतरतोऽतिरात्रः, तेन अहीनः, आत्मना च सत्रम्, अत उभयात्मा विशिष्टोऽयम् अन्येभ्यः सत्रेभ्यः इति।

सत्रलिङ्गञ्च दर्शयति ॥ ३२ ॥ (यु०)

सत्रलिङ्गं च कुण्डपायिनामयने दर्शयति, गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यः इति, गृहपतिर्हि सत्रे आम्नातः,

गृहपतिसप्तदशाः सत्रम् उपेयुः इति । सत्रे च तेनार्थः क्रत्वर्थान् याजमानान् कर्त्तुम्, अन्येषां यजमानानाम् व्यापृतत्वात् । तस्मात् सत्रे एवैते इति । (८ । २ ।६ अ०) ।

इति श्रीभट्टशवरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमस्याध्यायस्य द्वितीयः पादः ।

---

## अष्टमस्य अध्यायस्य तृतीयः पादः ।

—:०:—

शुचिदेवते आग्नेयस्याग्नावैष्णवे च आग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ।

**हविर्गणे परमुत्तरस्य देशसामान्यात् ॥१॥ (पू०)**

इह हविर्गणा उदाहरणम्, आग्नावैष्णवम् एकादशकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम्, अग्नये पावकाय अग्नये शुचये इत्येवमादयः । तत्र चिन्त्यते, किं शुचिदेवतस्य अग्नीषोमीयविध्यन्तः, आग्नावैष्णवस्यापि आग्नेयविध्यन्तः, उत विपर्य्ययः ? इति । किं प्राप्तम् ? हविर्गणे परम् शुचिदेवतं, उत्तरस्य अग्नीषोमीयस्य विकारः, पूर्वमपि आग्नावैष्णवं, पूर्वस्य आग्नेयस्य विकारः । कुतः ? । देशसामान्यात्, क्रमसामान्यात् इत्यर्थः । इह शुचिदेवतो द्वितीयः, प्रकृतावपि अग्नीषोमीयो द्वितीयः, इतरत्रापि आग्नावैष्णवः प्रथमः, प्रकृ-

तावपि आग्नेयः प्रथमः। देशसामान्येन लिङ्गेन परम् उत्तरस्य, पूर्वं पूर्वस्य विकारः।

देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥ (सि०)

न वा देशनियमः स्यात्, किन्तर्हि ? देवतया, देवतासामान्यात्। कुतः ?। शब्दवती देवता, आग्नावैष्णवम्, अग्नये शुचये इति। इतरस्य देशस्य, अश्रुतित्वात्, देशो न श्रूयते, किन्तर्हि प्रचयात् गम्यते। किम् अतः ?। एतद्तो भवति, देवताप्रत्ययः कर्म्मचोदनायाम् अनन्तरत्वात् मुख्यः, इतरस्तु पौर्वापर्य्यापेक्षया उत्पद्यते। तस्मात् जघन्यः। मुख्यानुग्रहश्च न्याय्यः। अतः शुचिदेवत्ये आग्नेयस्य विध्यन्तः आग्नावैष्णवे च आग्नीषोमीयस्य। (८। ३। १ अ०)।

---

जनकसप्तरात्रे त्रिवृद्हःसु द्वादशाहधर्म्मातिदेशाधिकरणम्।

गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ (पू०)

जनकसप्तरात्रे श्रूयते, चत्वारि त्रिवृन्ति अहानि भवन्ति इति, तथा अन्यत्र श्रूयते, नव त्रिवृन्ति अहानि भवन्ति इति। तत्र सन्देहः, किं पाष्ठिकस्य प्रथमस्य अयमभ्यासः, उत नानाङ्गां द्वादशाहिकानाम् स्तोम-

विधिः ? इति। किं प्राप्तम् ? गणचोदनायां यस्य लिङ्गं, तदावृत्तिः प्रतीयेताग्नेयवत्, गणचोदनायाम् एवंविधायां यस्य लिङ्गं पार्ष्ठिकस्य प्रथमस्य अह्नः त्रिवृत्त्वं, तस्य एव आवृत्तिः प्रतीयेत, चोदनासामान्यात्, आग्नेयवत्। तत् यथा, अग्नये पावकाय, अग्नये शुचये इति देवतैक्यात् चोदनासामान्यात् आग्नेयस्य विध्यन्ताभ्यासः एवम् इहापि।

नानाहानि वा सङ्घातत्वात् प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥ (सि०)

नानाहानि वा द्वादशाहिकानि प्रवर्त्तेरन् न पार्ष्ठिकं प्रथमम् अहः। कस्मात् ?। सङ्घातत्वात्, सङ्घात एष उच्यते, चत्वारि त्रिवृन्ति अहानि इति। पृथक्त्वनिवेशिनी हि चत्वारि इति सङ्ख्या, पृथक्त्वेन अङ्गं भवति इति। सन्ति च तत्र सप्तरात्रे चोदनया प्रवृत्तानि नानाहानि द्वादशाहिकानि चत्वारि, तानि अनूद्य त्रिवृत्त्वं विधातुम् शक्यते, न तु त्रिवृन्ति बहूनि अहानि अनूद्य, तत्र चतुःसङ्ख्या विधीयते।

तथा चान्यार्थदर्शनम् ॥ ५ ॥ (यु०)

चत्वारि त्रिवृन्ति अहानि अग्निष्टोममुख्यानि इति, येषाम् अग्निष्टोमः प्रथमः, इतरेऽनग्निष्टोमाः, ते एवमुक्ते प्रतीयन्ते, न ये सर्वे अग्निष्टोमाः, यथा, अयोमुख्यं पिण्डच्छेदनम् इत्युक्ते न सर्वायसं प्रतीयते। यदि च त्रिवृतोऽभ्यासः स्यात्, सर्वे अग्निष्टोमा भवेयुः, अग्निष्टोमो हि

असौ। तस्मात् द्वादशाहिकानाम् चोदकप्राप्तानाम् अङ्गां त्रिवृता विधीयते। एवं नव त्रिवृन्ति अहानि भवन्ति इति। (८।३।२ अ०)।

---

षटत्रिंशदावि षड़हधर्मातिदेशाधिकरणम्।

कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥(पू०)

क्वचित् कर्म्मविशेषे श्रूयते, षड़हा भवन्ति चत्वारो भवन्ति, पञ्चहा भवन्ति। तत्र सन्देहः, किं द्वादशाहिकानाम् अङ्गां प्रवृत्तिः, उत षड़हस्य ? इति। किं प्राप्तम् ? कालाभ्यासेऽपि बादरिः, षड़हकालाभ्यासेऽप्येतस्मिन् श्रूयमाणे बादरिः आचार्यो द्वादशाहिकानाम् अङ्गां प्रवृत्तिं मन्यते स्म। कुतः ?। कर्म्मभेदात्, षड़हशब्देन अत्र अहर्मितानि षट्सौत्यानि कर्म्माणि उच्यन्ते, तेषां च षट्कानां भेदो गम्यते, चत्वारः षड़हाः इति पृथक्त्वनिवेशात् सङ्ख्यायाः। यदि एकस्यैव कर्मषट्कस्य पाष्ठिकस्याभिप्लविकस्य वा अभ्यासः कल्प्येत, ततः, चतुःषड़हाः इति स्यात्। अथ पुनः चत्वारः षड़हाः इत्युक्ते चतुर्विंशत्यहानि प्रतीयन्ते, सा अहःसङ्घातचोदना प्रकृतिलिङ्गत्वात् द्वादशाहिकीम् अहःप्रवृत्तिं गृह्णाति। तस्मात् नानाङ्गां द्वादशाहिकानां प्रवृत्तिः।

तदावृत्तिं तु जैमिनिरङ्गामप्रत्यक्षसङ्ख्यत्वात् ॥ ७ ॥ (सि०)

तदावृत्तिं, पाष्ठिकस्य एव प्रज्ञातस्य षड़हस्य आवृत्तिं

जैमिनिः आचार्य्यो मेने। कुतः?। अङ्काम् अप्रत्यक्ष-सङ्ख्यत्वात्। चतुर्विंशतिः अङ्काम् अप्रत्यक्षा सङ्ख्या अनुमानात् गम्यते, तस्याश्च षड़हचतुष्टयेनैव अनुमानं, तेन पूर्वं तावत् षड़हचतुष्टयमेव प्रत्येति, तत् समाहृत्य चतुर्विंशतिसङ्ख्यां, यथा, पूर्वं धूमं प्रतिपद्यते, पश्चात् अग्निम्, यश्च धूमप्रत्ययेनैव कृतार्थो भवति न असौ अग्निप्रत्ययमाद्रियते। इहापि षड़हप्रत्ययात् एव तत्प्रवृत्तिः प्रसज्यते, तया च कृतार्थः किं चतुर्विंशतिसङ्ख्यया प्रतीतया करिष्यति?। तस्मात् षड़हाभ्यासः।

अथ यदुक्तं, पृथक्त्वनिवेशिनी सङ्ख्या आवृत्तौ बाध्येत इति। तत्र ब्रूमः षड़हः इति प्रज्ञातः षड़हः सन्निहितो गृह्यते, तस्य चतुःसङ्ख्यासम्बन्धः साक्षान्नास्ति इत्यावृत्त्या भविष्यति, यथा, उपसदां प्रयाजानुयाजानां च। यस्यापि चतुर्विंशतिरात्रः चत्वारः षड़हाः इत्येवं चोद्यते, तस्यापि दशरात्रे प्रवर्त्तमाने आवृत्त्यैव सङ्ख्यापूरणं, भिन्नानां षड़हानामभावात्। यश्च उभयोर्दोषो न असौ एकं पक्षं निवर्त्तयति। (८।३।३। अ०)।

---

संख्यागणेषु द्वादशाहिकधर्म्मातिदेशाधिकरणम्।

**संख्यागणेषु तदभ्यासः प्रतीयेत कृतलक्षण-ग्रहणात्॥ ८॥ (पू०)**

इह संख्यागणा उदाहरणम्, अग्निष्टोमः पञ्चोक्थ्यः,

शताग्निष्टोमं भवति, शतातिरात्रं भवति इत्येवमादयः। अत्र चिन्त्यते, किं ज्योतिष्टोमस्य अयम् अभ्यासः, उत एवंसङ्ख्यानां संख्याविशिष्टानाम् अह्नां वादः? इति। किं प्राप्तम्? संख्यागणेषु तदभ्यासः प्रतीयेत, तस्य एव प्राकृतस्य ज्योतिष्टोमस्य अयम् अभ्यासः। कुतः?। कृतलक्षणग्रहणात् तस्य एतत् कृतं लक्षणं, अग्निष्टोमः उक्थ्यः षोडशी अतिरात्रः इति, तत्संयोगेन एताः संस्थाः उत्पन्नाः, स ताभिः शक्यते लक्षयितुम्, तञ्च लक्षयित्वा सङ्ख्यां केवलां विधास्यति, नानाह्नां तु वादे संस्थां सङ्ख्या च उभयं विधीयते, उक्थ्या संस्था भवन्ति इति, ते च पञ्च भवन्ति इति, तथा वाक्यं भिद्यते। तस्मात् ज्योतिष्टोमाभ्यासः।

## अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥ ८ ॥ (सि०)

नैतदेवं ज्योतिष्टोमाभ्यासः इति, कथं तर्हि? प्रकृतिः तद्विशिष्टा स्यात्, द्वादशाहिकानि अहानि संख्याविशिष्टानि स्युः। कस्मात्?। अधिकारात्, तानि अत्र चोदकेन अधिकृतानि, एवं चोदकानुग्रहो भविष्यति।

ननु प्रत्यक्षविहितो ज्योतिष्टोमोऽग्निष्टोमादिभिः शब्दैः। न इत्याह। कथम्?। अभिधानस्य तन्निमित्तत्वात्, अग्निष्टोमाभिधानं संस्थानिमित्तं, न ज्योतिष्टोमाभिधायकं, तत्संस्थं क्रतुम् वदितुम् शक्नोति न ज्योति-

ष्टोममेव। यत्तु, अनेकार्थम् इति। न अनेकार्थं भविष्यति। गणचोदनया प्राप्तानाम् अह्नां पञ्चानां संस्थामात्रं विधायिष्यते, शताग्निष्टोमम् इत्यपि समासः उभयविशेषणविशिष्टं गणम् आह, स एक एवार्थः, यथा, लोहितोष्णीषा ऋत्विजः प्रचरन्ति इति, पृथक्त्वनिवेशिनी च एवं सङ्ख्या अनुगृहीता भविष्यति। तस्मात् द्वादशाहिकानाम् नानाह्नां वादः। (८।३।४ अ०)।

---

शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम्।

गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥ (पू०)

शतोक्थ्यं भवति शतातिरात्रं भवति इति श्रूयते। तत्र द्वादशाहिकानि अहानि प्रवर्त्तन्ते, तानि च प्रायेणोक्थ्यसंस्थानि, द्वौ अग्निष्टोमौ शतोक्थ्यं भवति इत्युक्तेः अग्निष्टोमयोः उक्थ्यस्तोत्रोपचयः प्राप्तः। शतातिरात्रं भवति इति सर्वेषु रात्रिपर्य्यायोपचयः। तत्र चिन्त्यते, किं द्वादशाहादुपचयः कर्त्तव्यः, उत ज्योतिष्टोमात्? इति। किं प्राप्तम्? गणात् उपचयः। कुतः?। तत्प्रकृतित्वात्, द्वादशाहप्रकृतयः एते अहर्गणास्तेषु द्वादशाहिको विध्यन्तः प्राप्यते, यदि द्वादशाहात् उपचयः, एवं चोदकानुग्रहो भविष्यति। तस्मात् गणात् उपचयः।

एकाहाद्वा तेषां समत्वात् स्यात् ॥ ११ ॥ (सि०)

एकाहाद्वा ज्योतिष्टोमात् उपचयः, न द्वादशाहात्।

कस्मात् ?। तेषां समत्वात्, द्वादशाहिकानाम् अह्नाम् इतरैर्वैकृतैः समत्वं भवति, तान्यपि अन्यतः संख्याम् आकाङ्क्षन्ति, इमान्यपि। न च, भिक्षुका भिक्षुकात् आकाङ्क्षन्ति, सति अन्यस्मिन् प्रसवसमर्थेऽभिक्षुके ?। किम् एतत् उक्तं भवति ?। द्वादशाहे संख्यास्तोत्राणि अनाम्नातानि इत्यतः यत्र आम्नातानि, ततः आकाङ्क्षन्ति। वैकृतेषु अहःसु तानि न आम्नातानि इति, तस्मात् वैकृतान्यपि अहानि, यत्र विहितानि ततः एव आकाङ्क्षितुमर्हन्ति, ज्योतिष्टोमे च तानि आम्नातानि। तस्मात् ज्योतिष्टोमात् उपचयः। (८। २। ५ अ०)।

---

गायत्रमेतदहर्भवति इत्यादावुत्पत्तिगायत्रीणामागमाधिकरणम्।

**गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात् सङ्ख्यात्वादग्निष्टोमवद्व्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥ (पू०)**

उपचयश्चिन्तितः, अपचयः इदानीं चिन्त्यते। इदं श्रूयते, वाजपेयेन इष्ट्वा बृहस्पतिसवेन यजेत इति। तत्र इदं समाम्नातं, गायत्रमेतत् अहर्भवति इति। अत्र विचार्यते, किं प्राकृतीनाम् त्रिष्टुब्जगतीनाम् अक्षरावलोपं कृत्वा गायत्रं तदहः कर्त्तव्यम्, उत उत्पत्तिगायत्रीणाम् दाशतयीभ्य आगमं कृत्वा ? इति। अत्र सूत्रेणैव उपक्रमः, गायत्रीषु प्राकृतीनाम् अवच्छेदः, गायत्रीषु श्रूय-

आणासु गायत्रमेतत् अहर्भवति इति, प्राकृतीनाम् त्रिष्टु-जगतीनाम् अवच्छेदः अक्षरावलोपः कर्त्तव्यः । कुतः ? । प्रकृत्यधिकारात्, चोदकेन अत्र प्राकृत्यः त्रिष्टुजगत्यः प्राप्ताः अधिकृता विद्यन्ते, यदि अन्यासामृचाम् आगमः क्रियेत, प्राकृतः प्रत्ययो बाध्येत ।

ननु प्रत्यक्षश्रुताः गायत्र्यः, ताभिश्चोदकप्राप्ता इतरा बाधितव्याः । न इत्याह । कस्मात् ? । सङ्ख्यात्वात्, अयं गायत्रीशब्दः सङ्ख्यावाचकः । कथं ज्ञायते ? । अव्यति-रेकात् चतुर्विंशतिसङ्ख्याम् एष न व्यभिचरति, न क्वचित् चतुर्विंशतिसङ्ख्यया विना दृष्टः, चतुर्विंशतिसङ्ख्याहीनासु त्रिष्टुजगतीषु न कदाचित् भवति । तस्मात् सङ्ख्याशब्दो-ऽयं, सङ्ख्याशब्दश्चेत् अक्षरावलोपः कर्त्तव्यः । अग्निष्टोम-वत्, यथा, शताग्निष्टोमं भवति इत्युक्ते द्वादशाहिकानाम् अह्नाम् उक्थ्यावलोपः क्रियते, एवम् इहापि ।

## तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥१३॥ (यु०)

तन्नित्यवत् सङ्ख्यामात्रं ब्रुवन्तं गायत्रीशब्दं मत्वा, पृथक्सतीषु पृथग्भूतासु गायत्रीभ्यः जगतीषु अगायत्रीषु तद्वचनम् भवति गायत्रीवचनं भवति, ये हि द्वे गायत्र्यौ, सा एका जगती इति । यदि सङ्ख्यायां गायत्रीशब्दः, ततो जगत्यां द्वे चतुर्विंशतिसङ्ख्ये इत्येतद्वचनम् उपपद्यते । अथ ऋचः, ततो द्वे ऋचौ जगत्यां न स्तः इति, एतद्वचनम् अनुपपन्नं स्यात् । तस्मादपि सङ्ख्यायां गायत्रीशब्दः ।

तथा, इदम् अपरं च दर्शनं, तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति इति।

न विंशतौ दशेति चेत् ॥ १४ ॥ (आ०)

अथ कश्चित् ब्रूयात्, न विंशतौ दशसङ्ख्याऽस्ति, न संख्या सङ्ख्यान्तरे वर्त्तते, गुणो हि सङ्ख्या, न च, गुणा गुणेषु वर्त्तन्ते। एवम् अष्टाचत्वारिंशत्सङ्ख्यायां चतुर्विंशति-सङ्ख्या नास्ति। तस्मात् सङ्ख्यार्थेऽपि गायत्रीशब्दे एका जगती द्वे गायत्र्यौ इत्येतत् अनुपपन्नमेव। यश्च उभयो-र्दोषो न असौ एकस्य वाच्यः।

ऐकसङ्ख्यमेव स्यात् ॥ १५ ॥ (आ० नि०)

अत्र उच्यते, न ब्रूमः, सङ्ख्यायां सङ्ख्या वर्त्तते इति, किन्तर्हि, अष्टाचत्वारिंशत्सङ्ख्या-परिच्छिन्नेषु अक्षरेषु अवयवभूते द्वे चतुर्विंशतिसङ्ख्ये, न तु द्वे ऋचौ इति। न च, सङ्ख्या सङ्ख्यान्तरं निवर्त्तयति, यदि निवर्त्तयेत्, ऐक-सङ्ख्यमेव स्यात्, यस्य दश गावः, तस्य द्वौ पञ्चकौ गवाम् इत्येतद्वचनं न स्यात्। भवति च तत्। तस्मात् न सङ्ख्या सङ्ख्यान्तरं निवर्त्तयति।

एवं वा, न विंशतौ दशेति चेत् (१४ सू०), यद्यपि सङ्ख्यायां गायत्रीशब्दः, एवमपि न अक्षरावलोपः कर्त्तव्यः। किंकारणम्?। विंशतौ दश विद्यन्ते। किमतः?। इदं तावदतः, येन विंशतिः उपात्ता, उपात्ताः तेन दश भवन्ति। एवं येन त्रिष्टुब्जगत्यः प्रयुक्ताः, प्रयुक्ताः तेन तदन्तर्गता

गायत्र्यो भवन्ति। तस्मात् अविकारेण प्रयोगः, एवं चोदकानुग्रहश्च भवति, गायत्रं च ग्रहः कृतं भवति। एकसङ्ख्यमेव स्यात्, अत्र आह, जगत्यां त्रिष्टुभि च उपात्तायां न गायत्र्य उपात्ताः भवन्ति। कथम्?। साधनं परिच्छिन्दती सङ्ख्या कर्म्मणि अङ्गीभवति, न जगत्याः त्रिष्टुभो वा अवयवः साधनं, किन्तर्हि त्रिष्टुजगत्यः।

अथ उच्येत, गायत्रमेतत् ग्रहर्भवति इतिवचनात् अवयवः एव अत्र साधनम् इति, तथा सति अक्षरावलोपः एव प्राप्नोति, उत्तरस्य अवयवस्य अनङ्गत्वात्, न च, अनङ्गे अनुपादीयमाने चोदको बाध्यते। तस्मात् यद् उक्तं, यद्यपि सङ्ख्यायां गायत्रीशब्दः, एवमपि अविकारेण प्रयोगः इति। एतत् अयुक्तम्। दर्शयति, न च उत्तरस्यां सङ्ख्यायाम् उपात्तायां पूर्वाः सङ्ख्या उपात्ता भवन्ति इति, यदयम् एका च दश च शतं च सहस्रं च परार्द्धं च इति सर्वसङ्ख्या अनुक्रामति, यदि च उत्तरस्यां सङ्ख्यायां उपात्तायां पूर्वाः सङ्ख्या उपात्ताः भवन्ति एकसङ्ख्यमेव स्यात्, एकैव अपरार्द्धसङ्ख्या भवेत्, सा हि सर्वाभ्य उत्तरा। यतस्तु एकाद्या अपि अनुक्रान्ताः, अतो विज्ञायते, न उत्तरस्यां सङ्ख्यायां उपात्तायां पूर्वाः सङ्ख्या उपात्ताः भवन्ति इति।

**गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात्॥ १६॥**

(सि०)

नैतदेवं, सङ्ख्यायां गायत्रीशब्दः इति कथन्तर्हि?

गुणात् द्रव्यशब्दः स्यात्, चतुर्विंशत्यक्षरयुक्तस्य द्रव्यस्य वाचकः। कस्मात्?। असर्वविषयत्वात्, यदि सङ्ख्याशब्दः स्यात्, सर्वस्मिन् चतुर्विंशतिसङ्ख्यासङ्ख्येये वर्त्तेत गोयूथादौ। न च वर्त्तते, तस्मात् न सङ्ख्याशब्दः।

## गोत्ववच्च समन्वयः ॥ १७ ॥ (यु० १)

यथा, गौः इति सत्यपि गमननिमित्ते सामान्यद्रव्याभिधाने सास्नादिमत्येव समन्वयो नान्यत्र इति तद्वचन एव गोशब्दो विज्ञायते, एवम् अयमपि ऋग्वचनः एव विज्ञातुम् न्याय्यः।

## सङ्ख्यायाश्च शब्दवत्त्वात् ॥ १८ ॥ (यु० २)

चतुर्विंशतिसङ्ख्यावाचकः शब्दोऽस्ति, चतुर्विंशतिः इति, न, अस्य अपरेण गायत्रीशब्देन अर्थः, संज्ञाया व्यवहारार्थत्वात्, एकेन व्यवहारसिद्धेः।

## इतरस्याश्रुतित्वाच्च ॥ १९ ॥ (यु० ३)

इतरस्य ऋग्द्रव्यस्य अश्रुतित्वात् अशब्दत्वात् इत्यर्थः। तस्यापि व्यवहारार्थेन संज्ञाशब्देन प्रयोजनम्। तत्र अयं गायत्रीशब्दोऽर्थवान् भवति, सङ्ख्यायां निष्प्रयोजनः। तस्मात् अपि ऋक्छब्दो न्याय्यः। अतो गायत्रीणाम् ऋचामागमः कर्त्तव्यः इति।

## द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥२०॥ (पू० यु० नि० १)

यत् उपवर्णितम्, अग्निष्टोमवत् इति। तत्र ब्रूमः, अग्निष्टोमशब्दस्य द्रव्यान्तरे कस्मिंश्चित् निवेशो नास्ति, यथा गायत्रीशब्दः ऋग्द्रव्ये, अयं हि केवलाग्निष्टोमान्ततां ब्रूते, न च, उक्थ्यलोपम् अन्तरेण, द्वादशाहिकानाम् अह्नाम् अग्निष्टोमान्तता भवति इति अवश्यकार्य्य उक्थ्यलोपः। अयं पुनः गायत्रीशब्दः ऋग्द्रव्यस्य वाचकः इत्युक्तम्। न च, अक्षरावलोपेन तत् ऋग्द्रव्यं प्राप्यते। तस्मात् विषमोऽयम् उपन्यासः इति।

## अशास्त्रलक्षणत्वाच्च ॥ २१ ॥ (यु०)

अशास्त्रलक्षणानि च उक्थ्यस्तोत्राणि शताग्निष्टोमे, तानि शास्त्रलक्षणया अग्निष्टोमान्ततया बाध्यन्ते। इह पुनर्विपरीतं, शास्त्रलक्षणा गायत्र्यः, आनुमानिक्यः त्रिष्टुब्जगत्यः, ता न शक्नुवन्ति गायत्रीं बाधितुम्।

## उत्पत्तिनामधेयत्वात् भक्त्या पृथक्सतीषु स्यात् ॥ २२ ॥ (पू० यु० नि० २)

अथ यदुक्तं, सङ्ख्यायां गायत्रीशब्दो दृष्टः, ये हि द्वे गायत्र्यौ, सा एका जगती इति, तस्य कः परिहारः? उच्यते, औत्पत्तिकम् एतत् ऋचो नामधेयम् इत्युक्तम्। अतः

उत्पत्तिनामधेयत्वात् योऽयं जगत्यवयवे चतुर्विंशत्य-क्षरे पदसञ्चये प्रयोगः, स भक्त्या विज्ञेयः, न हि, एकस्य शब्दस्य अनेकार्थता सत्यां गतौ न्याय्या। कया पुनर्भक्त्या? परिमाणसामान्यात्, यत् परिमाणं द्वयोर्गा-यत्र्यो, तत् एकस्या जगत्याः। अत एतत् उक्तं, ये हि द्वे गायत्र्यौ, सा एका जगती इति, यथा, यौ द्वौ कौरवौ स एको वाह्लीकः इति। एतच्च गायत्रीद्वयप्रशंसार्थं वचनम्। कथम्? इदं श्रूयते, द्वाभ्यां गायत्रीभ्यां वैश्यस्य इति, तदेतत् अयुक्तम् इव उच्यते, जगत्या वैश्यस्य कार्य्यं, जागतो हि वैश्यः, तदेतत् द्वाभ्यां गायत्रीभ्यां क्रियते, जग-त्येव तत् कृतं भवति, ये हि द्वे गायत्र्यौ सा एका जगती इति। तस्मात् अहेतुरयं सङ्ख्यार्थत्वे गायत्रीशब्दस्य।

## वचनमिति चेत् ॥ २३ ॥ (आ०)

शक्यं तावत् तत्र एतत् वक्तुं, यत्र अनुवादो गायत्री-शब्दः। यत्र तु विधिः, तत्र कथम्? यथा, तिस्रोऽनुष्टुभः, चतस्रो गायत्रीः करोति? इति। कः पुनर्विधौ विशेषः? विधौ शब्दार्थेन व्यवहारो भवति, तिस्रोऽनुष्टुभः चतस्रो गायत्र्यो न शक्याः कर्त्तुम्, शक्यास्तु चतस्रश्चतुर्विंशतयः। तस्मात् तत्र सङ्ख्यायां गायत्रीशब्दः इति।

अत्र ब्रूमः।

## यावदुक्तम् ॥ २४ ॥ (आ० नि०)

इहैव एकत्र सङ्ख्यार्थो न अन्यत्र, क्वचित् दर्शनात्।

आह, यद्येवं न सङ्ख्यावचनः, कथम् इह सङ्ख्यार्थो जातः ? इति । उच्यते, लक्षणयाऽपि विधानं भवति, यथा लोके, अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम् इति, वेदेऽपि, पृष्ठैरुपतिष्ठन्ते इति । न च, तत्र सिंहशब्दः प्रतिकृतिवचनो दृष्टः इति, अन्यत्रापि प्रतिकृतिवचनो विज्ञायते, पृष्ठशब्दो वा मन्त्रवचनः, न च, लक्षणया प्रयोगेऽशब्दार्थः परिच्छिद्यते, यत्कारणं, स्वार्थे एव वर्त्तमानः अर्थान्तरं लक्षयति, स्वार्थं जहत् नैव लक्षयेत् । तस्मात् अयमपि अहेतुः ।

## अपूर्वे च विकल्पः स्याद्यदि सङ्ख्याविधानम् ॥ २५ ॥ (यु०)

अपूर्वे च दर्शपूर्णमासकर्मणि विकल्पः स्यात्, यदि सङ्ख्यायां गायत्रीशब्दः । तत्र हि श्रूयते, गायत्र्या परिदध्यात् इति । एवं श्रुते आजुहोतायाश्चतुर्विंशत्यक्षरस्य पदसञ्चयस्य च विकल्पः स्यात् । विकल्पे पक्षे आजुहोतायाः बाधः, स च अयुक्तः सत्यां गतौ । तस्मादपि नैतत् सङ्ख्याविधानम् ।

## ऋग्गुणत्वान्नेति चेत् ॥ २६ ॥ (आ० )

अत्र उच्यते, न प्रकृतौ विकल्पो भविष्यति । कुतः ? । ऋग्गुणत्वात्, ऋग्गुणो हि तत्र प्रयोगोऽङ्गीकृतः, ऋचः तस्य सामिधेन्य आम्नाताः, यदि अनृचा परिदधीत, ऋग्गुणत्वं बाध्येत । तस्मात् तत्र आजुहोतयैव परिधास्यति, तथा

सति गायत्र्या परिच्छिन्नं भविष्यति। ऋग्गुणत्वं च उपगृहीतम्।

## तथा पूर्ववति स्यात्॥ २७॥ (आ० नि०)

पूर्ववति अपि बृहस्पतिसवे तथा स्यात्, यथा, अपूर्वे। अत्रापि ऋग्गुणकः प्रयोगः अङ्गीकृतः चोदकेन, तत्रापि ऋक्षु उपादीयमानासु गायत्रं चैव अहः कृतं भवति। ऋग्गुणकत्वं च न बाधितम्। तस्मात् न अक्षरावलोपः।

## गुणाविशश्च सर्वत्र॥ २८॥ (यु०)

तुशब्दस्य स्थाने चशब्दः, दृष्टश्च तुशब्दस्य अर्थे चशब्दः, यथा, किं च इह भवति इति। गुणस्य चतुर्विंशतिसङ्ख्यायाः सर्वत्राविशः, कृत्स्नायाम् आजुहोतायां, न अवयवे। अतः तस्याम् उपादीयमानायाम् ऋग्गुणत्वं च उपगृहीतं भवति, सङ्ख्या च। बृहस्पतिसवे पुनः या ऋचः चोदकेन अङ्गीकृताः, तासाम् अवयवे चतुर्विंशतिसङ्ख्या निविष्टा, तस्मिन् उपादीयमाने ऋग्गुणत्वम् अनुपात्तं भवति, प्रकृतिगायत्रीषु तु उपात्तं भवति। तस्मात् न सङ्ख्याभिधाने गायत्रीशब्दे प्रकृतिगायत्रीणाम् आगमः प्राप्नोति।

अपर आह, इदं तावदयं सङ्ख्यावादी प्रष्टव्यः, कस्मात् अक्षरगतायामेव सङ्ख्यायां भवानवस्थितः, न पुनः अन्यसङ्ख्येयगतायामपि, ग्रहगतायां चमसगतायां वा? यावताऽविशेषेण श्रुतं, गायत्रमेतत् अहर्भवति इति। एवं सति सर्वत्र गुणाविशः प्राप्नोति।

## निष्पन्नग्रहणात् नेति चेत् ॥ २९ ॥ (आ०)

स चेत् ब्रूयात्, यत्र अयं निष्पन्नः, गायत्रीशब्दः प्रसिद्धः इत्यर्थः। तस्य ग्रहणं न्याय्यम्, अयं च अक्षरगतायामेव सङ्ख्यायां प्रसिद्धो न सर्वत्र। तस्मात् न सर्वसङ्ख्येयगतो गृह्यते इति। स वक्तव्यः,

## तथेहापि स्यात् ॥ ३० ॥ (आ० नि०)

यथा अक्षरगतायामेव सङ्ख्यायां दृष्टो न अन्यत्र, एवम् ऋक्षु एव दृष्टो न अन्यस्मिन् चतुर्विंशत्यक्षरे गद्ये वा, यथा च अक्षरेषु एव दृष्टः इति न अनक्षरे विज्ञायते। एवम् ऋक्षु दृष्टः इति नानृक्षु विज्ञातुं न्याय्यः।

अत्र आह, यद्यपि, अयम् ऋक्षु गायत्रीशब्दः एवमपि अक्षरावलोपः कार्य्यः। किङ्कारणम्?। प्रकृत्युपबन्धनात् चोदकेन अत्र प्राकृत्यः त्रिष्टुब्जगत्यः प्रापिताः, ता इमा नोज्झिता भविष्यन्ति। गायत्रीशब्दस्य सङ्ख्यासामान्यात् शक्नोति तदवयवान् वक्तुम्, एवम् उभौ विधी अनुगृहीतौ भविष्यतः प्राकृतो वैकृतश्च इति। अत उत्तरं पठति,

## यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छरेष्वपि प्रसिद्धः स्यात् ॥ ३१ ॥ (आ० नि०)

यदि अविशये असंशयेऽपि गायत्रीषु विहितासु प्रकृत्युपबन्धनात् अगायत्र्यां गायत्रीशब्दः कल्प्यते, शरेष्वपि

शरमयं बर्हिर्भवति इति कुशेषु शरशब्दः कल्पयितव्यः। कौशमेव बर्हिः कार्य्यम्। वक्तव्यो वा विशेषः।

दृष्टः प्रयोग इति चेत् ॥ ३२ ॥ (आ०)

अयम् विशेषो दृष्टः, चतुर्विंशतिसङ्ख्यायाम् अक्षरगतायां गायत्रीशब्दस्य प्रयोगः, ये द्वे गायत्र्यौ सा एका जगती इति, तेन शक्यते कल्पयितुम्।

तथा शरेष्वपि ॥ ३३ ॥ (आ० नि०)

शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते, शरवणमेव इदं कुशवनम् इति।

भक्त्येति चेत् ॥ ३४ ॥ (आ०)

अत्र उच्यते, स तत्र शरशब्दो भाक्तः प्रयुज्यते, दीर्घत्वात् पृथुपत्रत्वात् सादृश्यवादोऽसौ, शरवणमेव इदं कुशवनम् इति स्वार्थे वर्त्तमानः सादृश्यं गमयति, स्वार्थं जहत् कथं गमयेत्, तस्मात् शरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेषु इति।

तथेतरस्मिन् ॥ ३५ ॥ (आ० नि०)

तथा इतरस्मिन् अपि ये द्वे गायत्र्यौ सा एका जगती इति भाक्त एव गायत्रीशब्दः इत्युक्तं, सोऽपि स्वार्थे एव वर्त्तमानः तत्सदृशं गमयति इति छन्दस्येव प्रयुक्तो न सङ्ख्यायां, तस्मात् न सङ्ख्यायां गायत्रीशब्दः। अतो न अक्षरावलोपः कर्त्तव्यः।

## अर्थस्य चासमाप्तत्वात् न तासामेकदेशे स्यात् ॥ ३६ ॥ (यु०)

अपि च त्रिष्टुब्जगतीनाम् एकदेशे वाक्यमपरिसमाप्तं भवति, न च, अपरिसमाप्तेन वाक्येन अर्थः कश्चित् अभिधीयते, अर्थाभिधानार्थश्च मन्त्रप्रयोगः, तत्र मन्त्रप्रयोग एव अनर्थकः स्यात्। तस्मात् न तासां त्रिष्टुब्जगतीनाम् एकदेशे गायत्रीशब्दः स्यात्। तस्मात् उत्पत्तिगायत्रीणामेव दाशतयीभ्यः आगमः कर्त्तव्यः इति। (८।३।६ अ०)।

इति श्रीभट्टशवरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमस्य अध्यायस्य तृतीयः पादः समाप्तः।

---

## अष्टमस्य अध्यायस्य चतुर्थः पादः।

---

दर्विहोमशब्दस्य कर्म्मनामधेयताधिकरणम्।

### दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

यदेकया जुहुयात्, दर्विहोमं कुर्य्यात् इति श्रूयते। अस्मिन् दर्विहोमशब्दे भवति संशयः, किं गुणविधिः, उत कर्म्मनामधेयम्? इति। किं प्राप्तम्? दर्विहोमो यज्ञाभिधानं, कर्म्मनामधेयम् इत्यर्थः। कुतः?। होमसंयोगात्,

होमशब्दः अत्र श्रूयते, तत्प्रधानश्च अयं समासः, दर्विशब्दः उपसर्जनं, होमस्य कर्म्म। अथवा जुहुयात् इति कर्म उच्यते, तेन समुच्चितो दर्विकया जुहुयात् इति। तस्मात् कर्मनामधेयं स्थितं तावत्। ततः अर्थान्तरं प्रक्रियते। (८।४।२ अ०)।

---

दर्विहोमशब्दस्य लौकिकवैदिकोभयकर्मनामधेयताधिकरणम्।

## स लौकिकानां स्यात् कर्त्तुस्तदाख्यत्वात् ॥ २ ॥
(पू०)

यदा कर्मनामधेयं, तदा चिन्त्यते, किं लौकिकानां स्मार्त्तानां कर्मणाम् अष्टकादीनां नामधेयं दर्विहोमशब्दः, उत सर्वेषाम् एव लौकिकानाम् वैदिकानाञ्च ? इति। किं प्राप्तम् ? स लौकिकानां स्यात्, स खलु दर्विहोमशब्दः, लौकिकानां कर्मणां नामधेयं स्यात्। कुतः ?। कर्त्तुस्तदाख्यत्वात्, तेषां कर्त्ता, तेन दर्विहोमशब्देन समाख्यायते, शिनीनां दार्विहोमिको ब्राह्मणः, अम्बष्ठानां दार्विहोमिको ब्राह्मणः इति। यश्च यत् करोति स तेन आख्यायते, यथा, लावकः, पावकः इति। यदि च अष्टकादीनां नामधेयम् एतत्, ततस्तेषां कर्मणां कर्त्ता दार्विहोमिकस माख्यामर्हति इति। तस्मात् लौकिकानां नामधेयम्।

सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥ (सि०)

सर्वेषां लौकिकानां वैदिकानाञ्च नामधेयमेतत्, न लौकिकानामेव। कस्मात्?। दर्शनात् वास्तुहोमे, वास्तुहोमे हि वैदिके दर्विहोमत्वं दर्शयति, यदेकया जुहुयात्, दर्विहोमं कुर्य्यात्, पुरोऽनुवाक्याम् अनूच्य याज्यया जुहोति सदेवतत्वाय इति।

ननु विपरीतम् एतद्दर्शनं, यदेकया जुहुयात् दर्विहोमं कुर्य्यात्, अदर्विहोमं सन्तम् इत्यापद्यते, यदि दर्विहोम एव असौ, ततः एकया द्वाभ्यां च हूयमानो दर्विहोमः एव भवति। तत्र एतद्दर्शनं नोपपद्यते, यदेकया जुहुयात् दर्विहोमं कुर्य्यात् इति।

अत्र उच्यते, यदि लौकिकानाम् एव नामधेयं, न वैदिकानाम्। ततः एकयापि हूयमानोऽसौ नैव दर्विहोमो भवति, अलौकिकत्वात्, तत्र एतद्वचनं नोपपद्यते, यदेकया जुहुयात् दर्विहोमं कुर्य्यात् इति। तस्मात् ज्ञापकमिदं, वैदिकानां दर्विहोमत्वे। एवमपि ज्ञापकम् उक्तम्, कुतः प्राप्तिः? उच्यते, होमशब्दस्य सामान्याभिधायित्वात् प्राप्तिः। तस्मात् लौकिकवैदिकानां नामधेयम् एतत्। (८।४।२ अ०)।

---

दर्विहोमशब्दस्य होमनामधेयताधिकरणम् ।

## जुहोति चोदनानां वा तत्संयोगात् ॥ ४ ॥

लौकिकानां वैदिकानाञ्च नामधेयं दर्विहोमशब्दः इति स्थितम् । इदानीं चिन्त्यते, किं यजतिचोदनानां जुहोतिचोदनानाञ्च सर्वेषां नामधेयम्, उत जुहोति-चोदनानाम्, एव ? इति । अविशेषात् सर्वेषां इति प्राप्ते उच्यते, जुहोतीनां नामधेयं, न यजतीनाम् । कुतः ? । तत्संयोगात्, होमशब्दसंयोगात्, अयं होमशब्दः जुहोतेर्वाचकः, न यजतेः, यजतौ लक्षणया स्यात् । तस्मात् जुहोतिनामधेयम् । (८।४।२ अ०) ।

---

दर्विहोमशब्दस्य गुणविधिपरत्वनिराकरणाधिकरणम् ।

## द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥ ५ ॥ (पू०)

स्थितादुत्तरम् उच्यते, यदुक्तं कर्मनामधेयं दर्विहोमः इति । तन्न, किन्तर्हि ? गुणाभिधानं स्यात्, गुणविधिः इत्यर्थः । कुतः ? । द्रव्योपदेशात्, द्रव्योपदेशोऽवगम्यते, दर्व्यां होमो दर्विहोमः इति । एवम् एतौ दर्विहोमशब्दौ यथाप्रसिद्धिकल्पितौ भविष्यतः । तस्मात् गुणविधिः ।

## न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ॥ ६ ॥ (सि०)

न अयं गुणविधिर्युज्यते । किंकारणम् ? । लौकिकानां

तावत् आचारगृहीता दर्विः त्वग्बिलया मूलदण्डया दर्व्या जुहोति इति, सा न विधातव्या, श्रौतानामपि अन्यानि होमार्थानि पात्राणि आम्नातानि, स्रुवेण जुहोति, चमसेन जुहोति इति, तैः सह दर्वेर्विकल्पः स्यात्, स च अन्याय्यः, यत्कारणं स्रुवादीनां विधायकः शब्दोऽस्ति, स्रुवेण जुहोति इति, न तु दर्वेः, तत्र हि आनुमानिको विधिशब्दः ।

## दर्शनाच्चान्यपात्रस्य ॥ ७ ॥ (यु॰)

अन्यच्च पात्रं दर्विहोमे दृश्यते, भूतेभ्यस्त्वेत्यपूर्वां स्रुवमुद्गृह्णाति इति । तस्मात् न गुणविधिः ।

## तथाग्निहविषोः ॥ ८ ॥ (आ॰ नि॰)

अथ उच्येत, अग्निहविषोः कार्य्ये दर्विर्भविष्यति, दर्वौ होमो दर्विहोमो दर्व्वा होमो दर्विहोमः इति । तत्र ब्रूमः, तथाग्निहविषोः अपि, यथा पात्रकार्य्ये दर्विर्न युज्यते, तथा अग्निहविषोः कार्य्येऽपि, तत्रापि आहवनीय आधारत्वेन विहितः, यत् आहवनीये जुहोति इति, अन्यच्च प्रदेयत्वेन पुरोडाशादि । तस्मात् अग्निहविषोरपि कार्य्ये न दर्वेर्निवेशः ।

## उक्तश्चार्थसम्बन्धः ॥ ९ ॥ (यु॰)

उक्तं च अस्माभिः अग्नेः कार्य्ये अन्यत् द्रव्यम् असमर्थं, दहनपठन प्रकाशनकर्म अग्नेः, न च, एतत् कार्य्यम्

अन्यत् द्रव्यं शक्नोति कर्तुम् इति। तस्मात् न अग्निकार्य्ये दर्वीः उपदेशः। अतो न गुणविधिः, कर्मनामधेयमेव दर्विहोमशब्दः इति। (८।४।४ अ०)।

---

दर्विहोमशब्दस्यापूर्वताधिकरणम्।

दर्विहोमशब्दः कर्मनामधेयम्, इत्युक्तं, तत्र चिन्त्यते, किम् अपूर्वाः दर्विहोमाः, उत कुतश्चिद्धर्मग्राहिणः? इति। किं प्राप्तम्? न अपूर्वाः इति। कुतः?। इतिकर्त्तव्यताऽविधेः, अविहितेतिकर्त्तव्यताकं कर्म विहितेतिकर्त्तव्यताकात् धर्मान् गृह्णाति इत्युक्तं, अविहितेतिकर्त्तव्यताकाश्चामी। तस्मात् पूर्ववन्तः इति, यद्येतदेवं, तदा एतत् आपतति, किंपूर्वाः? इति। अत्र उच्यते,

## तस्मिन्सोमःप्रवर्त्तेताव्यक्तत्वात् ॥ १० ॥ (पू०)

तस्मिन् खलु दर्विहोमे सोमः प्रवर्त्तेत, सौमिकी विध्यन्तः स्यात्। कुतः?। अव्यक्तत्वात्, अव्यक्तचोदनः सोमः अमी अपि च अव्यक्तचोदनाः भिन्ने जुहोति, इति। अतः चोदनासामान्यात् सौमिकी विध्यन्तः इति।

## न वा स्वाहाकारेण संयोगाद्वषट्कारस्य च निर्देशात्तेन विप्रतिषेधात् ॥ ११ ॥ (सि०)

वाशब्दः पक्षं व्यावर्तयति। न अत्र सौमिकी विध्यन्तो न्याय्यः। किंकारणम्?। स्वाहाकारेण संयोगात्, स्वाहा-

कारेण संयुक्ता दर्विहोमाः, पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा इति। किम् अतः?। वषट्कारस्य निर्देशात्तन्त्रे तेन च विप्रतिषेधः, तन्त्रे च सौमिके वषट्कारो निर्दिष्टः, तेन अस्य विप्रतिषेधः, उभयोः प्रदानार्थत्वात्। यदि सौमिको विध्यन्तः, ततो वषट्कारेण भवितव्यं तत्र एतत् स्वाहाकाराम्नानम् अनर्थकं स्यात्। अथ विकल्पः क्रियते, तथापि उभयोः पक्षे बाधः। अथ त्वपूर्वा दर्विहोमाः, नैषो विरोधो भविष्यति। तस्मात् अपूर्वाः।

## शब्दान्तरत्वात्॥ १२॥ (हे॰ १)

शब्दान्तरं च यजतिशब्दात् जुहोतिशब्दः, यजतिचोदनश्च सोमः, दर्विहोमाः पुनर्जुहोतिचोदनाः, चोदनासामान्येन च धर्मप्राप्तिरिष्यते। तस्मादपि अयुक्ता सौमिकी धर्मप्राप्तिः। ननु अव्यक्तत्वात् चोदनासामान्यम् उक्तम्। अत्र उच्यते, सामान्येऽव्यक्तत्वे, यजतिशब्दो विशेषलिङ्गं, तेन यजिमतीषु अव्यक्तासु धर्मनियमः, यथा समाने औषधगुणत्वे देवतैकत्वेन विशेषलिङ्गेन सौर्यकर्मणि आग्नेयविध्यन्तः इति।

## लिङ्गदर्शनाच्च॥ १३॥ (हे॰ २)

लिङ्गदर्शनाच्च एतत् विज्ञायते, न अत्र सौमिको विध्यन्तः इति, औदुम्बरीहोमे हि स्वाहाकारं विधाय आज्यविधिपरे वाक्ये दर्शयति, घृतेन द्यावापृथिवी आपृ-

णेत्यन्तरा कया जुहोति। आ मूलात् अवस्रावयति। भूमिगते स्वाहा करोति इति। यदि अत्र सौमिको विध्यन्तः स्यात्, वषट्कारस्ततो भवेत्, न स्वाहाकारः।

**उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्रा-विप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात्पशुवत् ॥ १४ ॥ (आ०)**

लिङ्गदर्शनस्य परिहारः उच्यते, यदुक्तं, औदुम्बरीहोमे सिद्धवत् स्वाहाकारस्य दर्शनात्र सौमिको विध्यन्तः इति। अत्र ब्रूमः, उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं, तत् यथा, साप्तदश्यम् अनारभ्याधीतं सप्तदश सामि-धेनीरन्वाह इति, अनारभ्यवादानाम् प्रकृत्यर्थत्वात् दर्श-पूर्णमासावगतम् ततः प्राकरणिकेन पाञ्चदश्येन बाधितं सत् विकृत्यर्थं जातं, एवम् अयं स्वाहाकारः अनारभ्याधीतः, स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते इति, तेनैव न्यायेन प्रकृतिं निविविशुः सोमं दर्शपूर्णमासौ च, ततस्तथैव वषट्कारेण उपरुद्धः, तद्वर्जम् अन्यानि प्रदानानि उपसंक्रामति। तत्र अविप्रतिषिद्धा सोम धर्मप्रवृत्तिः पशुवत्, तद्यथा, पशौ साप्तदश्ये श्रूयमाणे न दार्शपौर्ण-मासिकी तत्र प्रवृत्तिर्विप्रतिषिध्यते, वाचनिकत्वात् साप्त-दशस्य, एवम् इहापि वाचनिकत्वात्, स्वाहाकारं प्रति लिङ्गदर्शनात् न सौमिकधर्मप्रवृत्तिर्विप्रतिषिध्यते। पुनः शब्दस्य अनर्थकः, यथा किं पुनरिदम् ? इति।

अनुत्तरार्थो वाऽर्थवत्त्वादानर्थक्याद्धि प्राकृतस्योपरोधः स्यात् ॥ १५ ॥ (आ० नि०)

यदुक्तं, उत्तरार्थः स्वाहाकारः इति, तन्न । कुतः ? । अनुत्तरार्थः अर्थवत्वात्, प्रकृतौ एव अस्यार्थवत्वं, नारिष्टहोमेषु, पार्वणहोमयोश्च पूर्णमासाय स्वाहा इति, अनर्थकत्वात् हि प्राकृतस्य उपरोधः स्यात्, यदि प्राकृतौ अनर्थकः स्यात् स्वाहाकारः, ततः प्राकृतस्य वषट्कारस्य विकृतौ प्राप्तस्य अनारभ्यवादेन स्यात् उपरोधः, वषट्कारबाधः इत्यर्थः, न त्वस्य आनर्थक्यम्, तस्मात् न उत्तरार्थः, न चेत् उत्तरार्थः, लिङ्गमेव एतत् भवति असोमपूर्वत्वे दर्विहोमानां, भूमिगते स्वाहा करोति इति ।

न प्रकृतावपीति चेत् ॥ १६ ॥ (आ०)

एवं चेत् पश्यसि, नारिष्टहोमेषु पार्वणहोमयोश्च स्वाहाकारस्य निवेशः इति, प्रकृतौ अपि नारिष्टहोमादौ न अस्य निवेशो घटते, तत्रापि वषट्कार एव प्राप्नोति, स हि अविशेषेण दर्शपूर्णमासयोर्विहितः, द्व्यक्षरो वषट्कार एष वै प्रजापतिः सप्तदशो यज्ञे अन्वायत्त इति । ननु स्वाहाकारोऽपि प्रत्यक्षं पठितः । सत्यं पठितः, वषट्कारस्तु विहितः, अतश्चोदना इति । न अस्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति इति स्वाहाकारं पाठेन प्राप्तं बाधते, पाठे हि आनुमानिको विधिः प्रत्यक्षेण विधिना बाध्यते,

आज्येन शेषं संस्थापयतीत्यनेन कर्मान्तरविधानाधिकरणम् ।

## आज्यसंस्थाप्रतिनिधिः स्यात् द्रव्योत्सर्गात् ॥ ५६ ॥ (पू०)

पर्य्यग्निकृतं पात्नीवतमुत्सृजन्ति इति प्रकृत्य श्रूयते, आज्येन शेषं संस्थापयति इति । तत्र सन्देहः, किमाज्यं पूर्वस्मिन् प्रतिनिधीभूतम्, अथ वा आज्यद्रव्यकं पूर्वस्मात् कर्म्मान्तरं विधीयते ? इति । किं प्राप्तम् ? प्रतिनिधिरिति । कुतः ? । पात्नीवतमिति द्रव्यम् उच्यते, उत्सृजतीति तत्रैवोत्सर्गः श्रूयते । शेषमित्युपयुक्तेतरत् विद्यमानं गम्यते, तत् आज्येन संस्थापयति इति पशोः कार्य्ये आज्यं श्रुतं भवति इति । ननु पूर्वकर्म्म परिसमाप्तमित्युक्तम् । अत्रोच्यते, द्रव्योत्सर्गवचने प्रत्यक्षे, शेषशब्दे वाऽपरिहृते पुनरसमाप्तं पूर्वकर्मेत्याशङ्क्यते, तस्मात् प्रतिनिधीयते आज्यमित्याशङ्कामहे । संस्थापयति इति च अपूर्वे नोपपद्यते ।

इतश्चाशङ्कामहे,

## समाप्तिवचनात् ॥५७॥ (२ यु०)

समाप्तिवचनमिदं भवति, संस्थापयति इति, तेन मन्यामहे, यत् पूर्वं पशुना आरब्धं तदुत्सृष्टे पश्चादाज्येन परिसमाप्यते इति । अपूर्वस्यात्र कर्मण उच्यमानस्यारम्भ एव वक्तव्यो भवति, यतस्त्वनभिधायारम्भं परिसमाप्ति-

रैवोच्यते, ततोऽवगच्छामः, पूर्वस्यैव परिसमाप्तिर्नापूर्वकर्म्म चोद्यत इति।

## चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥ ५८ ॥ (सि०)

कर्मान्तरचोदना वा। कुतः?। पूर्वस्य कर्म्मणः परिसमाप्तत्वात्। ननूक्तं द्रव्योत्सर्गे शेषवचने वाऽपरिहृते पूर्वकर्म्मणोऽसमाप्तिराशङ्किता भवति। अत्रोच्यते, इदं द्वयमपि परिह्रियते, संस्थापयति इति प्रकृतेन पात्नीवतशब्देन सम्बध्यते, तत्रायमर्थः, पात्नीवतं संस्थापयति इति, स एष यागो विधीयते। संपूर्वस्य स्थापयतिः प्रयुज्यते, अवश्यं कश्चिद्धातुः पूर्वो भावनावचनस्य प्रयोक्तव्य इति तत्राविरुद्धो भावनायामुच्यमानायामर्थप्राप्तः संस्थापयतिरालभतिरिव प्रयुज्यते। शेषशब्दश्चैवं साङ्ख्यात् प्रयुज्यते। द्रव्योत्सर्गश्चाविरुद्ध एव यागे उच्यमाने, तस्माद् यथाऽन्ये निर्वपत्यादयः कर्मान्तरविधाने भवन्ति, एवं तैरविशिष्टत्वात् संस्थापयतिरपि भवितुमर्हति इति।

## अनिज्यास्तु वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५९ ॥ (यु०)

प्रसिद्धां वनस्पतेः अनिज्याम्, अत एव पठति। कथम्?। यत् त्वष्टारञ्च वनस्पतिमावाहयस्यथ वैनौ यच्यसि त्वाष्ट्रो नवमो प्रयाजेज्या वानस्पत्या दशम्यन्त्रैवैताविष्टौ विद्यात् इत्यङ्गान्तरेणानुग्रहं ब्रुवन् वनस्पतीज्याया

अभावं दर्शयति, शेषपरिसमाप्तौ सत्यां वनस्पतिं जुहोति इति। अथ परिसमाप्तं पूर्वं कर्म, ततो लुप्ता स्यात्, तत्राभावदर्शनमुपपद्यते। तस्मात् पूर्वकर्म परिसमाप्तम्, इदमपि कर्मान्तरम् इति।

**संस्था तद्देवतत्वात् स्यात्॥ ६०॥ (आ० नि०)**

अथ यदुक्तं, संस्थापयति इति च अपूर्वे नोपपद्यते इति, तत् परिहर्त्तव्यम्, अत्रोच्यते, असंस्थायां संस्थावचनमेतत्, तदपि पूर्वं पात्नीवतमिति समानदेवत्वात् समाप्तिसादृश्यं ज्ञायते, तत्र तत्पात्नीवतमारब्धमिह परिसमाप्तमिति। स एष सादृश्यात् संस्थापयतीति शब्दोऽवकल्पत इति। (८।४।१५ अ०)।

इति भट्टशवरस्वामिनः कृतौ मीमांसाभाष्ये नवमस्य अध्यायस्य चतुर्थः पादः। समाप्तश्चाध्यायः। शुभमस्तु।

---

## मीमांसा-दर्शने

### १० अध्याये १ पादः॥

---

विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम्।

(प्रथमवर्णकम्)

**विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्॥ १॥ (पू०)**

षष्ठो वृत्तः, बाधाभ्युच्चयमिदानीं वर्त्तयिष्यामः।

बाधो नाम यदेवेदमिति निश्चितं विज्ञानं, कारणान्तरेण मिथ्येति कथ्यते। तथा अभ्युच्चयो यत् इदमिह भवति इति विज्ञायते, अपरमपि भवति इति विज्ञानम्। तत्रायमर्थः प्रथमं परीक्ष्यते, किं सर्वं प्राकृतं विकृतौ कर्त्तव्यम्, उत किञ्चिद्बाध्यते? इति। किं तावत्प्राप्तम्? विधेः प्राकृतस्य प्रकरणान्तरे विकृतौ यतो भवत्यविशेषेणातिदेशः, अतो यच्च यावच्च प्राकृतं धर्मजातं तत्सर्वं विकृतौ कर्त्तव्यं, यदप्यर्थलुप्तम्। कुतः?। वचनेन ह्रीदं सर्वं प्राप्यते, न च वचनस्यातिभारोऽस्ति प्रापयतः। कथं वचनमिति गम्यते?। सर्वास्वेव वैकृतीषु देशनासु प्राकृतं धर्मजातम् अपेक्ष्यते वाक्यशेषत्वेन, तद्यथैव प्राकृत्यां देशनायामनुषज्यते, एवं वैकृत्यामपि। न कश्चिद्विशेषोऽस्ति। तत्र यथा कृष्णलानां पाकोऽप्राकृतार्थोऽपि वचनप्रामाण्यात् क्रियते, एवमवहन्त्यादि अप्राकृतार्थमपि सर्वं कर्त्तव्यमिति।

## अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ (सि०)

अपि वा इति पक्षव्यावृत्तिः। नैतदस्ति, सर्वं प्राकृतं विकृतौ कर्त्तव्यमिति, क्वचित् अभिधानसंस्कारद्रव्यं निवर्त्तितुमर्हति यल्लुप्तार्थम्। कुत एतत्?। अभिधानसंस्कारद्रव्यं हि प्रयोजने सति क्रियते, नाप्रयोजनम्, अन्यस्मै प्रयोजनाय तदाम्नायते न स्वार्थम्।

ननु चोक्तं लुप्तार्थमपि क्रियते वचनप्रामाण्याद्यथा कृष्णलेषु पाकः। नेत्याह, नास्ति लुप्तार्थस्य देशकं वचनम्।

न वैकृतं कर्म प्राकृतैरङ्गपदार्थैः सहैकवाक्यतां याति, नैवं विज्ञायते, यागेन फलं कुर्य्यात्, कथम् ? प्राकृतैरङ्गैरिति, कथन्तर्हि, यथा प्राकृतेन यागेन फलं साधितमभूत् तथा इति। कुत एतत् ?। यागगतो हि व्यापारविशेषस्तेनापेच्यते, न व्यापारमात्रं, यागगतस्य व्यापारः प्राकृते यागे प्रयोगवचनेन कल्पितः, सङ्गृहीतश्च विद्यते, स शक्योऽपेचितुम्। स चाकाङ्क्षितो निराकाङ्क्षञ्च शक्नोति कर्त्तुमिति। अङ्गेष्वप्यपेच्यमाणेषु न यागगतो विकृतौ व्यापारविशेषः कल्प्यः स्यात्। इतरथा लचणा स्यात्। यथा दण्डेन युध्यते इति वचनेन दण्डिरूपं शब्देनाभिहितम्। यदि तु तेन लचितेन प्रयोजनं स्यात्, शक्यते तेन लचयितुं, एवमिहाप्यङ्गवत्त्वं यागगतो विशेषो नाङ्गेष्वपेच्यमाणेषु शब्दाभिहितो भवति, लचणया तु कल्प्यते, लचणायाञ्च शब्दो बाध्येत। अथ शब्दो मा बाधीति यागगतो विशेषो नैवापेच्येत, अङ्गान्येवापेच्येरन्। ततः, कथमिति इतिकर्त्तव्यताविशेषं प्रति वैकृतस्य कर्मणश्चोदकशब्दोऽनिवृत्ताकाङ्क्ष एवावतिष्ठेत, अङ्गैरपि च अपरा इतिकर्त्तव्यता आकाङ्क्ष्येत, गम्यमाना च प्राकृतयागेतिकर्त्तव्यता उत्सृज्येत प्राकृतानाञ्च अङ्गानां प्रकरणेऽर्थवतां दुर्लभो वैकृतेन कर्मणा एकवाक्यभावोऽप्युपगम्येत। सर्वं चैतदन्याय्यम्। तस्मादेवमभिसम्बन्धः क्रियते, यथा प्राकृतेन यागेन फलं साध्यते, तथैवैतेनापि इति।

किमतो यद्येवम् ? एतदतो भवति, प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति, नासति तस्मिन् प्रयोजने

विकृतौ चोदितानि भवन्ति। तस्माल्लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयति इति।

तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥ (आ० नि०)

अथ यदुक्तं, यथा कृष्णलेषु लुप्तप्राकृतप्रयोजनोऽपि पाको वचनप्रामाण्यात् क्रियते, एवमन्यदपि क्रियेतेति। तन्न, न हि कृष्णलेषु पाकश्चोदकेन प्राप्नोति, प्रत्यक्षं हि तत्र वचनं, घृते श्रपयति इति। न तत् प्राकृतप्रयोजनं पाकमाह, तत्र वचनप्रामाण्याददृष्टार्थः पाकः। यदि च तत्र प्रत्यक्षवचनं नाभविष्यत्, तेषामप्रत्यक्षविशिष्टत्वात् पाकोऽपि नाभविष्यदेव। तस्मादनुपवर्णनं पाकवदिति।

किं भवति प्रयोजनम्? कतरद्वा वैकृतमुदाक्रियते? इति। क्वचित् श्रूयते, स्वयंदितं बर्हिर्भवति इति। तत्र प्राकृतं द्रव्यं निवर्त्तते। स्वयंकृता वेदिर्भवति इति उद्धनन-खनन-परिलेखनानि निवर्त्तन्ते। स्वयंशीर्णा शाखा भवति इति असिद्रव्यं निवर्त्तते, मन्त्राश्चैतेषु निवर्त्तन्ते।

१ वर्णकम्।




एवं वा,

कृष्णलेऽवहन्तिबाधाधिकरणम्।

द्वितीयवर्णकम्

विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ॥ १ ॥ (पू०)

इति। अस्ति प्राजापत्यश्चरुः, प्राजापत्यं चरुं निर्वपेत् शतकृष्णलमायुष्कामः इति। तत्रैतद्विशिष्टमुदाहरणमङ्गीकृत्य एतदेव सर्वं चिन्त्यते, किं कृष्णलेष्ववहन्ति कर्त्तव्यः न? इति। विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् इति पूर्वः पक्षः, कर्त्तव्यः, यथा तेषामेव पाक इति।

**अपिवाऽभिधानसंस्कारद्रव्यम्** ॥ २ ॥ (सि०)

इति सिद्धान्तो, न कर्त्तव्य इति।

**तेषामप्रत्यक्षविशिष्टत्वात्** ॥ ३ ॥ (आ० नि०)

इत्युपवर्णनापरिहारः। २ वर्णकम्।

---

एवं वा,

वैश्वदेवे चरौ विष्णोरावाहनबाधाधिकरणम्।

तृतीयवर्णकम्।

वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवांस्तं बर्हिःषदं कृत्वा शम्यया स्फ्येन व्यूहेदिदमहममुष्यामुष्य व्यूहामीति यं द्विष्यात् तं ध्यायेत् यदधोऽवस्येत यच्च स्फ्य आश्लिष्येत् तद्विष्णव उरुक्रमायावद्येत् इति। तत्र संशयः, किं विष्णुरुरुक्रम आवाहयितव्यः, उत न? इति। किं प्राप्तम्?।

विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥१॥
( पू० )

आवाहयितव्यः । ननु स्फ्य कदाचिन्नवा आश्लिष्येदपि, न वाऽधोऽवमृद्येत, तत्रावाहनं कृतम् अनर्थकं स्यात् । न च, वचनबलादाश्लेषयितव्यम् अवमर्द्दयितव्यं वा, न ह्युपादेयत्वेनाश्लिष्टमवमर्द्दितं वा श्रूयते । न च विष्णोरुरुक्रमस्य यागो अर्थकर्म, किन्तर्हि, आश्लेषणेनावमर्द्दनेन च लक्षितम् अनेन प्रकारेण आहवनीये प्रतिपाद्यते, तथा हि दृष्टमपनयने तस्य प्रयोजनं भवति स्फ्यादिसंशोधनं, इतरथा हि यागादृष्टं कल्प्येत । ननु यागादृष्टमवश्यं कल्पनीयं, द्रव्यप्रतिपादनद्वारं तत् ।

अत्रोच्यते, लुप्तार्थमपि कर्त्तव्यं, यथा कृष्णले चरौ पाकः । अपि च कदाचिदाश्लिष्येत, अधश्चावमृद्येत, तत्रान्तरिते आवाहने वैगुण्यमापद्येत । तत्राप्रमाद्यद्भिरावाहयितव्या देवता, यदि स्फ्य आश्लेष्यते अधश्चावमर्द्दिष्यते, न आवाहनमङ्गम् अन्तरा इष्यते, स्वकाले हि आवाहनेन देवता स्मर्यमाणा साध्वी भवति इति, न स्वकालोत्तरकाले, तत्र हि अर्थप्राप्तममन्त्रकं स्मरणम् । अथ स्फ्यो नोपश्लेक्ष्यति न वाऽधोऽवमर्द्दिष्यते तदा कृतेऽप्यावाहने न किञ्चित् दुष्यति । नैवं मन्तव्यं, यथा राजा अमात्यो वा ब्राह्मणो वा परिचरितुं निमन्त्रितः आहूतः अपरिचर्य्यमाणो विमानितमात्मानं मन्यमानो अपचरि-

ष्यतीत्याशङ्क्यते, एवं देवताऽपि इति, न तत्र देवता आहूयते आहूता सती हविरुपयोक्ष्यते, तर्प्स्यति च। तृप्ता प्रसत्स्यति, प्रसन्ना सती फलेन संयोक्ष्यति इति तदेतन्नवमे सिद्धम्। तस्मान्न दोषः, आवाहितायामनिज्यमानायाम्।

अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ (सि०)

अपि वेति पक्षव्यावृत्तिः, एषोऽभिधानसंस्कारो निवर्त्तते। कुतः?। अभिधानसंस्कारो द्रव्यं वा सति प्रयोजने क्रियते नान्यथा, तद्दर्शितम्। यदप्युक्तं, कदाचित् श्लिष्येत अवसृज्येत वा, तत्रावाहनं नान्तरा ईक्ष्यते इति। नैष दोषः, अन्तरितमेतदनन्तरितेनैव तुल्यं, यदा आवाहनस्य कालो, न तदा उरुक्रमयागस्य निमित्तमापतितम्, आपतिते हि निमित्ते तस्य प्रयोगो भविष्यति। न ह्यनाश्लिष्टम् अनवसृदितं वा तत्र प्रतिपादयितव्यं, न चारब्धे प्रयोगे कृतमुपकारकं भवति। तस्माद् विष्णुरुरुक्रमो नावाहयितव्य इति।

तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥ (आ० नि०)

इत्युपवर्णनापरिहार उक्तः। ३वर्णकम्। (१०।१।१अ०)

---

दीक्षणीयादिषु आरम्भणीयाबाधाधिकरणम् ।

## इष्टिरारम्भसंयोगादङ्गभूतान्निवर्त्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥

अस्ति ज्योतिष्टोमो ज्योतिष्टोमेन स्वर्गकामो यजेत इति। तत्र दर्शपूर्णमासप्रकृतिकानि कर्म्माणि दीक्षणीयादीनि आग्नावैष्णवमेकादशकपालं निर्वपेत् इत्येवमादीनि। अस्ति तु प्रकृतौ आरम्भणीयेष्टिः आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारभमाणः सरस्वत्यै चरुं सरस्वते द्वादशकपालमग्नये भगिने अष्टाकपालं निर्वपेद् यः कामयेत अन्नादः स्याम् इति। नित्यवदेके भगिनमामनन्ति। तत्र सन्देहः, किं दीक्षणीयादिषु आरम्भणीया कर्त्तव्या, उत न? इति। किं प्राप्तम्?, सर्वं प्राकृतं विकृतौ कर्त्तव्यं, विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् इति।

एवं प्राप्ते ब्रूमः, इष्टिरारम्भणीया ज्योतिष्टोमाङ्गभूताद् दर्शपूर्णमासप्रकृतिकाद्दीक्षणीयादेः कर्मराशेर्निवर्त्तेत। किंकारणम्?। योऽत्रारम्भः स ज्योतिष्टोमस्य न दीक्षणीयादेः। कुतः?। आरम्भो हि प्रथमः पदार्थः, स्यात्, प्रथमं वा पुरुषस्य प्रवर्त्तनम्?। यदि प्रथमः पदार्थः, स ऋत्विगानयनं देवयजनजोषणं वा, तदिह ज्योतिष्टोमस्याङ्गं क्रतोरर्थेन कृतं स दीक्षणीयादीनामर्थं साधयति, न पुनस्तेषां कर्त्तव्यं, लुप्तमिव तत्। तस्मिन् लुप्ते आरम्भे तल्लिङ्गार्थो धर्म आरम्भणीयाख्यो

लुप्येत। अथ प्रथमप्रवर्त्तनम् आरम्भः, औदासीन्यात् व्यावृत्तिः, पुरुषस्य व्याप्टतता, तदा ज्योतिष्टोमं साङ्गं कर्त्तुम् असावौदासीन्यात् व्यावृत्तो ज्योतिष्टोमिकेन प्रथमेन पदार्थेन, स ततः प्रभृति आ-साङ्गज्योतिष्टोमसमाप्ते-र्व्याप्टत एव न पुनरुदासीनो भवति, यतो व्यावृत्तो भवति। साङ्गज्योतिष्टोमारम्भेणैव प्रवृत्तो दीक्षणीया-दिष्विति लुप्यत एवैषामारम्भः, तस्मिन् लुप्ते आरम्भणीया-पदार्थ आरम्भसिद्धार्थी लुप्येत।

ननु अङ्गभूतस्य दीक्षणीयादेरन्य आरम्भो जातः। नेत्याह, ऋत्विगानमनं देवयजनजोषणादि वा प्रथमं वा पुरुषस्य प्रवर्त्तनम् आरम्भः, प्रथमञ्च प्रवृत्तोऽसौ ज्योति-ष्टोमार्थमेव। अथायमन्यः प्रथमः पदार्थो दीक्षणीया-देर्जात इत्युच्यते। तथापि न तस्यारम्भणीया प्रकृता-नुक्तेति तस्मादङ्गभूतात् पदार्थादारम्भणीया निवर्त्तेत। अपि च दीक्षणीययैव ज्योतिष्टोमे आरम्भार्थः सिध्यति, एवं हि श्रूयते, आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञञ्चारभते अग्निः प्रथमो देवतानां विष्णुः परमो यदाग्ना वैष्णव मेकादशकपालं निर्वपति देवताश्चैव यज्ञञ्चोभयतः परिगृह्यावरुन्धे इति। (१०।१।२अ०)।

---

अनुयज्ञादिषु आरम्भणीयाबाधाधिकरणम्।

**प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्त्तेतानङ्ग-त्वात्॥ ५॥**

अस्ति राजसूयः, राजसूयेन स्वाराज्यकामो यजेत इति। तत्रेष्टिपशुसोमदर्विहोमाः प्रधानभूताः। ऐष्टिकेष्वनुमत्यादिषु संशयः, किं आरम्भणीया कर्त्तव्या, न? इति। किं प्राप्तम्?, कर्त्तव्या, विधेः कारणान्तरेऽतिदेशात् सर्वकर्म स्यात् इति।

एवं प्राप्ते ब्रूमः, प्रधानाच्च अपरप्रधानसंयुक्तान्निवर्त्तितुमर्हति। कुतः?। सर्वारम्भार्थेन तत्र ज्योतिष्टोमः समाम्नायते, अग्निष्टोमं प्रथममाहरति इति। स प्राक्तानां प्रधानानामेकैकस्य तन्त्रेण समाम्नातो भवितुमर्हति, एकैकस्य ह्यत्र प्रधानस्य तन्त्रेण साधारणं प्रकरणं, तेनानुमत्यादीनाम् आरम्भार्थे सिद्धे न आरम्भणीया भवितुमर्हति इति। (१०। १। ३ अ०)।

---

आरम्भणीयायां आरम्भणीयाबाधाधिकरणम्।

## तस्यां तु स्यात् प्रयाजवत् ॥ ६ ॥ (पू०)

अस्त्यारम्भणीया इष्टिः, आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारभमाणः सरस्वत्यै चरुं सरस्वते द्वादशकपालं अग्नये भगिनेऽष्टाकपालं यः कामयेत भग्यन्नादः स्याम् इति नित्यवदेके भगिनमामनन्ति। तत्रैषोऽर्थः सांशयिकः, किमारम्भणीयायामारम्भणीया कर्त्तव्या, उत न? इति। किं प्राप्तम्? तस्यां तु स्यात् प्रयाजवत्। संशयनिवृत्त्यर्थं तुशब्दः, न खलु संशयोऽस्ति, आरम्भणीया-

यामारम्भणीया भवितुमर्हति । कुत: ? । विधे: प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् इति, यथा प्रयाजा एवमारम्भणीयापि इति । आह, ननु तस्या अप्यर्थे अन्या आरम्भणीया, तस्या अप्यर्थे अन्या आरम्भणीया, तस्या अप्यर्थेऽन्येत्येवमारम्भणीया न व्यवतिष्ठेत । व्यवस्थितेन च शास्त्रार्थेन भवितव्यम् । अत्रोच्यते, सर्वास्वेव अनवस्थासु सामर्थ्येन व्यवस्था भविष्यति ।

## नवाङ्गभूतत्वात् ॥ ७ ॥ (सि०)

नवेति पक्ष: प्रतिषिध्यते, न स्यादारम्भणीयायामारम्भणीया इति । कुत: ? । अङ्गभूता हि सा दर्शपूर्णमासयो:, अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिरित्युक्तम् ।

आरम्भणीयाप्रवृत्तेन दर्शपूर्णमासौ कर्त्तव्यौ, अत: प्रकृतिवदारम्भणीयापि आरम्भणीयाप्रवृत्तेन कर्त्तव्येति, तस्मात् किल आरम्भणीयायामारम्भणीया स्यात् । तच्च नैवं, अकृत्वाप्यन्यामारम्भणीयामारम्भणीयां कुर्वन्नारम्भणीयाप्रवृत्त एव करोतीति गम्यते । तस्मान्नारम्भणीयायामारम्भणीया स्यात् । अपि च जलबुद्बुदवत् अव्यवस्था आरम्भणीयायां वाक्येन गम्यमाना सामर्थ्येन बाध्येत । अस्मत्पक्षे नाव्यवस्था न बाध:, तस्मान्नारम्भणीयायामारम्भणीया इति ।

## एकवाक्यत्वाच्च ॥ ८ ॥ (यु०)

इतश्च पश्याम: एवमेवेति । कुत: ? । एकं ह्रीदं वाक्यं

यदा आरम्भणीयां विदधाति, तदा नासौ दर्शपूर्णमासयोर्विहिता, ताम् अविहितामिव दर्शपूर्णमासयोर्विदध्यात्, विहितामिव चारम्भणीयायामतिदिशेत्, नैतत् कर्त्तुमलं भवति सकृदुच्चरितम्। तस्मादप्यारम्भणीयायामारम्भणीया नास्ति। (१०।१।४ अ०)।

——

खलेवाल्यां यूपाहुतिबाधाधिकरणम्।

## कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्त्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ६ ॥

तस्मिन्नेव ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति। तत्रेदमाम्नायते, यूपमच्छेष्यता होतव्यं न हि दीक्षितस्याग्नौ जुहोति आज्यं चारणिं चादाय यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति इति। साद्यस्क्रे श्रूयते, खलेवाली यूपो भवति इति। तत्रैषोऽर्थः सांशयिकः, किं साद्यस्क्रे खलेवाल्यां यूपाहुतिः कर्त्तव्या, न? इति। किं प्राप्तम्?, कर्त्तव्या, विधिः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् इति।

एवं प्राप्ते ब्रूमः, कर्म च एतत् द्रव्यसंयोगार्थं यूप एवमादिभिः संस्कारैः भविष्यतीति क्रियते, यूपं प्राप्तुमिष्यत एतच्छ्रूयते, तेनास्य संस्कारस्य श्रुतिसंयोगेन यूपार्थता। अच्छशब्दो हि आप्तुमित्यर्थे वर्त्तते, न चात्र यूपेन प्रयोजनम्, अयूपे हि खलेवाल्यां पशुर्बध्यते, तस्मात् तत्र यूप-

करणार्था यूपाहुत्यादयः संस्कारा अर्थलोपान्निवर्त्तितुमर्हन्ति इति। तस्मान्नास्ति खलेवाल्यां यूपाहुतिरिति। (१०।१।५ अ०)।

---

साद्यस्क्रे स्वाखाहुतिबाधाधिकरणम्।

## स्वाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत॥ १०॥ (पू०)

तस्मिन्नेवाग्नीषोमीये पशौ श्रूयते, स्थाणौ स्थाणाहुतिं जुहोति इति। ततः साद्यस्क्रेऽयमर्थः सांशयिको भवति, किं साद्यस्क्रे स्थाणाहुतिः कर्त्तव्या, न? इति। तत्र एतत्तावन्नः परीक्ष्यं, किमारादुपकारकं कर्म स्थाणाहुतिः, उत यूपसंस्कारः इति। यद्यारादुपकारकं कर्म तदा कर्त्तव्या, अथ यूपसंस्कारो निवर्त्तेत इति। कथमारादुपकारकं कर्म स्यात्, कथं वा यूपसंस्कारः? इति। यद्येवमभिसम्बन्धः क्रियते, यूपमच्छेष्यता स्थाणाहुतिः कर्त्तव्येति, ततो यूपसंस्कारः। अथ यूपमच्छेष्यतेति प्रकृतेन न सम्बध्येत, तदा आरादुपकारकं कर्मेति। किन्तावत्प्राप्तम्?। आरादुपकारकं कर्मेति। एतद्विज्ञातं कर्मणां प्रयोजनं, भूतं हि तावद् भव्यार्थमिति।

अपि च निवृत्तप्रयोजनेन स्थाणुना सम्बध्यमाना आहुतिः किमिव यूपस्य उपकरिष्यति? सम्बद्धे हि क्रियमाणं सम्बन्धिनि उपकुर्य्यात्, व्यावृत्तो हि यूपात् स्थाणुः। अपि च

तन्त्रमेकादग्निभ्यां यूपाहुतिर्भविष्यति, यद्यारादुपकारकं कर्म स्यात्, तथा हि नाभ्युतोऽभ्यासः कल्पयिष्यते। अपि च अविशिष्टेन वाक्येन स्थाणौ स्थाण्वाहुतिः श्रूयते, सा च प्रकरणेन यूपव्रश्चनस्थाणुविशेषे कल्प्येत। तस्मादारादुपकारकं कर्म स्थाण्वाहुतिः साद्यस्क्रे च कर्त्तव्या चोदकानुग्रहायेति। एवं प्राप्तम्। एवं प्राप्ते ब्रूमः,

## अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत ॥ ११ ॥ (सि०)

अपि वेति पक्षव्यावृत्तिः। यूपसंस्कारः प्रतीयेत। कुतः?। प्रकरणविशेषात् यूपमच्छेष्यतः स्थाण्वाहुतिर्विधीयत इति गम्यते, यो हि मन्यते अविशिष्टेन वाक्येन स्थाणुदेशमात्रे विधीयत इति, फलं तस्य कल्पनीयं भवति। योऽपि मन्यते प्रकरणादारादुपकारकमग्निषोमीयस्य भवतीति, तस्यापि प्रकरणसामान्यं प्रकरणविशेषेण बाध्येत। कर्मशेषभूतश्च यूपः प्रयोजनवत्त्वात्, तेन सम्बध्यमाना अदृष्टार्थापि आरादुपकारिका सती कल्प्यप्रयोजना स्यात्। अतः प्रसिद्धिर्न्यायेन बाध्येत, यथा अश्वकर्ण इति। निर्वृत्तप्रयोजने चापि स्थाणौ यूपात् व्यावृत्ते च यूपीयो असाविति कृत्वा तत्र क्रियमाणा यूपाहुतिः यूपसम्बद्धा कृता भवतीति तदा व्रश्चने क्रियते, यथा शिरसा धारितायाः स्रजः शिरसोऽवतारितायाः देवदत्तीया असाविति कृत्वा शुचिदेशनिधानादिः संस्कार एषितव्यो भवति। एवं स्थाण्वा-

हुतिरपि एकादशिन्यां चान्तिकदेशस्याविवक्षितत्वात् तत्र यूपाहुतिर्भविष्यत्येव। तस्मात् संस्कारपक्ष एव ज्यायान्।

## समाख्यानञ्च तद्वत् ॥ १२ ॥ (यु० १)

स्थाण्वाहुतिरिति च समाख्यानं स्थाणुप्रधानाया इवाहुतेर्भवतीति। कथं षष्ठीसमासोऽयं, कर्मणि षष्ठी। ईप्सिततमञ्च कर्म। सप्तमीसमासो लक्षणापेत इति कृत्वा नादर्त्तव्यो भवति।

## मन्त्रवर्णश्च तद्वत् ॥ १३ ॥ (यु० २)

इतश्च पश्याम: संस्कारकर्मेति, यतो मन्त्रवर्ण: अपि तद्वत् भवति, अतस्त्वं देववनस्पते शतवल्शो विरोह इति। यस्त्वं मया वृक्ण:,सोऽत आव्रश्चनाद्बहुप्रकारो विरोहेति यूपम् इवाद्रियमाणो मन्त्रवर्णो भवति। तस्मादपि संस्कारकर्म खल्वेतत्, आप्यां न कर्त्तव्यम् इति। (१०।१।६ अ०)।



उत्तमप्रयाजस्य संस्कारकर्मताधिकरणम्।

## प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥

दर्शपूर्णमासयोराम्नायते, उत्तम: प्रयाज:, स्वाहाकारं यजति इति। तत्र संशय:, किम्? उत्तम: प्रयाज आरादुपकारकं कर्म उत संस्कारकर्म इति। तत एतत् तावत् परीक्ष्यते, किम्? आज्यभागादिषु या देवता यष्टव्या स्वा

एवात्र देवताः, उत अन्यास्ताभ्यो देवताभ्यः ? इति । कथम् अन्या देवताः ? कथं वा प्रकृताः स्युः ? इति । यदि स्वाहाकारं यजति इति देवताविधानं, ततोऽन्या प्रकृताभ्यो देवता । अथ ये यजामहे, स्वाहाग्निम् इति निगदेन मान्त्रवर्णिको देवताविधिस्ततः प्रकृता देवता इति ।

किं प्राप्तम् ? आरादुपकारकं कर्म इति । तदेतद् वर्ण्यते, अन्या देवता स्वाहाकारं यजति इत्यनेन विधीयते, एवं वचनप्राप्ता भविष्यति, इतरथा मान्त्रवर्णिकी कल्पयितव्या भवेत् । ननु अन्या अग्न्यादिशब्दैर्न शक्यते वदितुं, तत्रायं ये यजामहे स्वाहाग्निम् इति मन्त्रवर्णोऽपि विप्रतिषिध्येत । अत्रोच्यते, नैतद्विप्रतिषिद्धं, अनेकस्याप्येकः शब्दो भवति वाचकः । तद्यथा मातेति मातरमपि वदति मातारमपि । माता च परमं दैवतं, समा च पुत्रेष्वित्येतैरुपबध्यमानो जननीवचनोऽवगम्यते । माता समः क्षिप्रश्चेति एभिरप्यनुबध्यमानो धान्यस्य मातुर्वाचकः । एवं मन्त्रेऽप्यग्न्यादयः स्वाहाकारदेवताके यागे प्रयुज्यमानास्तद्वाचिनोऽवगम्येरन् । तथा सति प्रज्ञातं यागस्य कार्य्यमनुगृहीतम्, आरादुपक्रिया । तस्मादारादुपकारकं कर्म्म उत्तमः प्रयाज इति ।

एवं प्राप्ते ब्रूमः, प्रयाजे च तन्न्यायत्वात् उक्तमधस्तात् स्वाखाहुतिः संस्कारकर्मेति, इहापि चशब्देनान्वादिश्यते, उत्तमः प्रयाजः संस्कारकर्मेति । तत एतत्तावद्वर्णयन्ति, या आज्यभागादिषु देवता यष्टव्यास्ता एव इह देवता

इति। कुतः ?। स्वाहाकारस्य देवतासंयोगाभावात्, तद्धि-तेन वा देवतासंयोगा विज्ञायते चतुर्थ्यन्तेन वा। न चेह तद्धितो न चतुर्थी, अतो न देवताविधिः। यागसामानाधिकरण्यं च द्वितीयया गम्यते। तस्माद् यागवचनः स्वाहाकारशब्दो यथा समिदादय इति।

आह, यदि द्वितीयया संयोगात् तं यागवचनं मन्यसे, आरादुपकारकस्तर्हि यागः, ईप्सिततमे हि द्वितीयाविभक्तिर्भवति इति। अत्रोच्यते, एवमेव प्राप्ते वदामः, तन्न्यायत्वात् इति। स एव न्यायः इह, यः स्वाख्याहुतौ अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत इति। शेषभूताश्चाज्यभागादिष्वग्न्यादयः, तदर्थो यागः सन् प्रयोजनवान् भवति। इतरस्मिन् पक्षे यागो निष्प्रयोजनः स्यात्, तदर्थं देवताभिधानमपि निष्प्रयोजनं स्यात्। सत्यां च देवतासंस्कारशङ्कायां यागप्रयोजनं कल्पयितुं न शक्यते। तथा अग्न्यादीनां सम्भवति स्वार्थेऽदृष्टा स्वाहाकारवचनता न शक्या कल्पयितुम्। तस्मात् देवतासंस्कारार्थमुत्तमः प्रयाजः। देवतास्मरणसंस्कारद्वारं चादृष्टमपि तस्माद् यागाद् भवति इति।

लिङ्गदर्शनाच्च ॥ १५ ॥ (हे०)

लिङ्गमप्यस्मिन्नर्थे भवति। किं लिङ्गम् ?। संप्रतिपन्नदेवताकचातुर्मास्येषु उत्तमप्रयाजस्य निगदो दृश्यते, स्वाहाग्निं स्वाहा सोमं स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणमित्येवंलक्षणकः। स देवतासंस्कारपक्षेऽव-

कल्पते। इतरस्मिन् अदृष्टार्थः स्यात्। तस्मादपि देवता-संस्कार उत्तमः प्रयाजः स्यात्। प्रयोजनं विप्रतिपन्नदेवताकेषु सौर्य्यादिकर्मसु प्राकृतानि देवतापदानि न निवर्त्तन्ते पूर्वपक्षे, सिद्धान्ते तु निवर्त्तन्ते। (१०।१।७ अ०)।

---

अग्नियागस्यारादुपकारकताधिकरणम्।

## तथाज्यभागाग्निरपीति चेत्॥१६॥ (पू०)

दर्शपूर्णमासौ स्तो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति। तत्रेदमाम्नायते, आज्यभागौ यजति इति। इदं चापरं श्रूयते, तौ होचतुः किमावयोस्ततः स्यादिति। यस्यै कस्यैचिद्देवतायै हविर्निर्वपांस्तद्वां पुरस्तादाज्यस्य यजन्निति तस्माद्यस्यै कस्यैचिद्देवतायै हविर्निर्वपन्ति ते पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति तौ न सौम्येऽध्वरे न पशौ इति। तत्रैतत् सन्दिह्यते, यदाज्यभागयोरग्नीषोमाविज्येते किं तत्राग्नियोगो देवतासंस्कारार्थ उत आरादुपकारकः? इति। किं प्राप्तम्?। इति चेत् सन्देहं पश्यसि, तथा आज्यभागाग्निरपि स्यात्, यथोत्तमः प्रयाजः, अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत इति।

## व्यपदेशाद्देवतान्तरम्॥ १७॥ (सि०)

न चैतदस्ति, देवतासंस्कारः आज्यभागयोरिति, किन्तर्हि आरादुपक्रिया। कुतः?। व्यपदेशात् अवगम्यते

प्रधानाग्नेर्दैवतान्तरमिह इज्यत इति। कोऽसौ व्यपदेशः?। अग्निमग्न आवह सोममावह अग्निमावह इति, कथमस्मिन्नावाहने एतावत्यस्य देवता इज्येरन् इति। एवमावाहनेन देवतासु अव्यामोहार्थं परिगण्यमानासु द्विरग्निशब्देन परिगणनं कृतं, तद्दैवतान्तरेऽवकल्पते, इतरथा हि सङ्ख्याबुद्ध्या व्यामुह्येत। गणनं चोभयोरपि पक्षयोस्तुल्यम्। अपि च त्वत्पक्षे सोमव्यवधानात् गणने क्रमो बाध्येत। अपि च असकृद्वचनं शब्देनानुबध्यमानमन्यमिव व्यपदिशति। यथा ब्राह्मण आगतो वृषल आगतो ब्राह्मण आगतः इति द्वयोरिव ब्राह्मणयोर्भवति गणनावादः। एवमिहापि द्वयोरिव अग्न्योर्भवति वादः।

स एष व्यपदेशो भवति लिङ्गम्। प्राप्तिस्तु वक्तव्या, सोच्यते,

## समत्वाच्च ॥ १८ ॥ (हे०)

इयं प्राप्तिः, समोऽत्र देवतया यागः, देवतापि श्रुता प्रधानयागे, यागोऽपि वाक्यान्तरे, आज्यभागौ यजति इति। तद्दिङ्गोभयोः यागदेवतयोः प्रयोजनवतोर्दैवताया यागार्थता न्याय्या, प्रज्ञातं ह्यारादुपकारकत्वं यागस्य इति। न हि देवतां विना यागो भवति, तेन स देवतामाकाङ्क्षति, न तु प्रधानदेवता यागान्तरमाकाङ्क्षति। यच्च येन आकाङ्क्ष्यते तत् तदर्थं भवति। तस्माद् देवता यागार्था। अपि च आरादुपकारकैः कर्मभिः साम्यं भवति। कथम्? अभीषू वा एतौ यज्ञस्य यदाघारौ

चक्षुषी वा एतौ यदाज्यभागौ यत् प्रयाजा इज्यन्ते वर्म्म वा एतद्यज्ञस्य क्रियते वर्म्म यजमानस्य भ्रातृव्यस्य अभिभूत्यै इति। (१०।१।८ अ०)

---

पशुपुरोडाशयागस्य देवतासंस्कारकताधिकरणम्।

## पशावपीति चेत्॥ १९॥ (पू०)

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, आ सोमं वहन्त्यग्निना प्रतितिष्ठन्ति तौ सम्भवन्तौ यजमानमभिसम्भवतो वरुणपाशाभ्यां वा एषोऽभिधीयते यो दीक्षितो यदग्नीषोमीयं पशुमालभते वरुणपाशाभ्यामेव मुच्यते इति। तत्रेदं समामनन्ति, अग्नीषोमीयस्य वपया प्रचर्य्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति। तत्र सन्देहः, किं पशुपुरोडाशयाग आरादुपकारकः, उत देवतासंस्कारार्थः? इति। किं तावत्प्राप्तम्?। ततः प्रयाजाधिकरणे पराजितोऽपि हेतुः केनचिदपरेण विशेषेण पुनरनुप्राप्स्यत इति पुनरुपदिश्यत, पशावपीति चेत्, इति चेत् पश्यसि, किम् आरादुपकारको, देवतासंस्कारः? इति। पशावप्याराादुपकारकः स्यात्, एतद्धि कर्म्मणां प्रसिद्धं कार्य्यम्। अग्नीषोमीयमिति च गुणभूतदेवताकस्तद्धितशब्दो भवति। पशावपि तद्धित एव शब्दो वाक्यशेषेण बलवता ज्वलनवचनो व्यपदिश्यते, न नियोगतस्तद्वचनः पशुपुरोडाशे। अतः प्रसिद्धेराराादुपकारकत्वम्।

## न तद्भूतवचनात् ॥ २० ॥ (सि०)

नेति प्रतिषेधकः शब्दः। आ सोमं वहन्ति अग्निना प्रतितिष्ठन्ति इत्यर्थवादवचन एषः, यद्यर्थवादवचनादन्या पशौ देवता, अन्या पुरोडाशयागे इति गम्यते। अर्थवादवचनादेव सैवेत्यवगन्तव्या। एवं ह्याह, यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशः इति। तस्मादर्थवादसाम्ये देवतासंस्कार इति गम्यते।

## लिङ्गदर्शनाच्च ॥ २१ ॥ (हे०)

इतश्च पश्यामः संस्कारकर्म पशुपुरोडाश इति। कुतः?। लिङ्गमप्येतमर्थं दर्शयति, इन्द्राय वज्रिणे वृषभमालभेत इत्यस्य पशोः पुरोडाशस्य क्रमे सम्प्रतिपन्नदेवताकं याज्यानुवाक्याद्वयं समाम्नातं, इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठं स्तुहि शूरं वज्रिणं सुप्रतीतिम् इति च तत् संस्कारपक्षेऽवकल्पते, नान्यथा। तस्मात् पशुदेवतासंस्कारार्थः पुरोडाशयाग इति।

## गुणो वा स्यात् कपालवत् गुणभूतविकाराच्च ॥ २२ ॥ (द्वि० पू०)

विशेषविवक्षया पुनस्तमेव हेतुं व्यपदिशति। वाशब्देन पक्षं व्यावर्त्तयति। गुणः स्यात् देवता। एवमाराදुपकारकत्वप्रसिद्धिरनुग्रहीष्यते। अनेकगुणभावश्च कपालवद् भविष्यति। यथा कपालं श्रयणेऽपि तुषोपवपनेऽपि, एवमग्नीषोमावप्यभिन्नौ पशुयागे पुरोडाशयागे च गुणभूतौ भवि-

ष्यतः । एवं च सति दार्शपौर्णमासिकयोरग्नीषोमयोर्गुण-भावेन यागे द्वारभूतयोः कर्म आम्नातम्, इह गुणभूतयो-रेवाविरोधेन भविष्यति, इतरथा प्रधानभूतयोरन्यकार्य्ययोः न प्राप्नुयात् । दृश्यते चानिरुक्तः स्विष्टकृदिति । तस्माद-प्यारादुपक्रिया । अपि च सौत्रामण्यामाश्विनसारस्वत-सुत्रामदेवताकेषु पशुषु ऐन्द्रावरुणसावित्राः पुरोडाशाः पशुप्रकरणान्नोत्कृष्यन्ते, संस्कारपक्षे उत्कृष्येरन् । छिद्रापि-धानार्थतायाश्च उक्तमर्थवाद्त्वम् । तस्मादप्यारादुपक्रिया ।

**अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहा-कारवदङ्गानामर्थसंयोगात् ॥ २३ ॥ ( उ० )**

अपि वा इति पक्षव्यावृत्तिः । न आरादुपकारकं कर्म्म । तत्संस्कारः प्रतीयेत देवतासंस्कार इति । कुतः ? । शेषभूतत्वात् देवता याः प्रयोजनवत्त्वम् । तस्मा-द्यथा स्वाहाकारयजिर्निष्प्रयोजन इति देवतासंस्कारः प्रतीयते, एवमिहापि । अङ्गानामर्थसंयोगात्, अर्थेन प्रयोजनेन संयोग इह गम्यते वाक्येन, तेन न आरादुप-कारकम् । आरादुपकारकेभ्यः सामवायिकानि अङ्गानि वरीयांसि भवन्ति इति । यदुक्तं, गुणभूतदेवताकेन तद्धितशब्देन निर्देशः इति, प्रधानभूतदेवताकेनाप्येवं-जातीयकेन शब्देन सम्बन्धे विधीयमाने निर्देशो भवति । अपि च दृष्टं कार्य्यमदृष्टाद्बलीयः, तस्मात् संस्कार-कर्मेति ।

## व्यृद्धवचनञ्च विप्रतिपत्तौ तदर्थत्वात् ॥२४॥ (यु०)

इतश्च संस्कारकर्मेति, सौत्रामण्यां पशुपुरोडाशदेवता-विप्रतिपत्तौ व्यृद्धवचनं देवतासंस्कारे एवावकल्पते। यद्वै सौत्रामण्यां व्यृद्धं तदस्याः समृद्धं यदन्यदेवत्याः पशुपुरोडाशा भवन्ति, अन्यदेवत्याः पशवः इति।

## गुणेऽपीति चेत् ॥ २५ ॥ (आ०)

एवं चेत् पश्यसि, संस्कारपक्षे व्यृद्धवचनमवकल्पत इति, तन्न, संस्कारपक्षेऽपि व्यृद्धवचनं नावकल्पते, न हि तत्र किञ्चित् व्यृद्धं, विप्रतिपन्नदेवताकैरेव पुरोडाशैस्तत्कर्म्म समृद्धतरं भवति। एवं ह्याह, यदन्यदेवत्याः पुरोडाशा भवन्ति अन्यदेवत्याः पशव इति तदस्यां समृद्धं भवति इति। यश्चोभयोः पक्षयोर्दोषः, न तमेकश्चोद्यो भवति। यथैव हि संस्कारपक्षे व्यृद्धवचनमर्थवाद एवमितरस्मिन्नपि पक्षेऽर्थवादो भविष्यति।

## नासंहानात् कपालवत् ॥ २६ ॥ (आ० नि०)

नैतदेवं, भवदीये पक्षे न किञ्चिदपि हीनं, यथैवैकेन कपालेन तुषेषु उप्यमाणेषु अन्येषां कपालानां न किञ्चिद्धीयते, एवमन्यया देवतया पशुपुरोडाशयागे निर्वर्त्यमाने न किञ्चित् पशुदेवतायां हीयते, तत्राव्यृद्धे एव व्यृद्धवचनं भवति। मदीये तु पक्षे देवताप्रकाशनमङ्गभूतं हीयते। अन्यदेतदुच्यते, यत् व्यृद्धमपि समृद्धं

भवति इति। अहीने तु व्यूढशब्दे उच्चरिते न शब्दार्थो गृहीत इति।

ग्रहाणाञ्च सम्प्रतिपत्तौ तद्वचनं तदर्थत्वात्॥ २७॥ (यु० १)

इतश्च संस्कारकर्मेति। सौत्रामण्यां सम्प्रतिपन्नदेवताकेषु ग्रहेषु तद्वचनं भवति, पुरोडाशवचनम्। नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशव इति। न तावन्न विद्यन्ते, विप्रतिपन्नदेवताकेस्तु संस्काराभावमालोच्य एवमुच्यते, ग्रहा एषां पुरोडाशाः ग्रहपुरोडाशा ह्येते इति। किं तेषां पुरोडाशैः सामान्यम्?। यद्येते देवतासंस्कारार्थाः, यदि पुरोडाशा अपि देवतासंस्कारार्थां एवमेतदवकल्पते। तस्मात् संस्कारपक्ष एव श्रेयान्।

ग्रहाभावे च तद्वचनम्॥ २८॥ (यु० २)

एवं श्रूयते, नैतस्य पशोर्ग्रहं गृह्णन्ति पुरोडाशवानेष पशुः इति। पशुपुरोडाशवत्ताहेतुकं ग्रहाभावं ब्रुवन् ग्रहपुरोडाशयोरेकार्थतां दर्शयति। तत्र ग्रहस्य देवतासंस्कारार्थता विज्ञाता, यदि पुरोडाशोऽपि देवतासंस्कारार्थ एवमेतदवकल्पते।

देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति॥ २९॥ (यु० ३)

इतश्च पश्यामः संस्कारकर्मेति। एवं ह्याम्नायते, अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते कामा वा अग्नय आग्नेयाः पुरोडाशा भवन्ति आग्नेया हि पशवः इति। पशुदेवताहेतुकान् पुरोडाशान् ब्रुवन् देवतासंस्कारार्थतां पुरोडाशानां दर्शयति।

**अविरुद्धोपपत्तिरर्थापत्तेः शृतवत् गुणभूतविकारः स्यात् ॥ ३० ॥ ( आ० नि० १ )**

अथ यदुक्तं, गुणभूतयोर्धर्मः प्रधानभूतयोरग्नीषोमयोर्न स्यात् इति। उच्यते, अविरुद्धा प्रधानभूतयोरप्यग्नीषोमयोर्धर्माणाम् उपपत्तिः। कुतः ?। अर्थापत्तेः प्रधानभूतावपि प्राकृतं कार्य्यं यागनिर्वृत्तिं कुर्वाणौ द्वारभूताविति धर्मैर्योक्ष्येते शृतवत्, यथा शृते चरुं, दधंश्चरुम् इति प्रदानार्थे दधिशृते प्रणीताकार्य्यं कुर्वाते इति धर्मैर्युज्येते न च दोषो भवति।

**स द्वार्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥ ( आ० नि० २ )**

अथ यदुक्तं, ऐन्द्रवारुणसावित्राणां पुरोडाशानां सौत्रामणीप्रकरणादुत्कर्षः प्राप्नोति, तत्रेदमुच्यते, स द्वार्थः यागो देवतासंस्कारार्थश्छिद्रापिधानार्थश्च, उभयोः अर्थयोः श्रुतिभूतत्वात्। अतो विप्रतिपन्नदेवताकेषु छिद्रापिधानार्थतया प्रकरणादुत्कर्षो न भविष्यति, तत्प्रकरणगत

एवायं विकारो भविष्यति। तस्य अपि उक्तम् अर्थवादत्वम् इति यदुक्तं, तन्नेदमुच्यते,

विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥ ( आ॰ नि॰ ३ )

एवं तर्हि अनेन प्रकारेण प्रकरणादनुत्कर्षः, देवतासंस्कारस्तावत्प्रकरणादुत्कर्षेण न शक्यते बाधितुम्। तत्र सौत्रामण्यां सम्प्रतिपन्नदेवताका एव चोदकेन पुरोडाशाः प्राप्ताः, तत्रेन्द्रादयः शब्दाः पशुदेवतानामेव वाचकाः। कथम्? एकदेशा हि तेषामिमे वर्णान्तरसहिता उच्चारिता इति गम्यते। शक्नुवन्ति ह्येकदेशाः समुदायिनः समुदायं प्रत्याय्य समुदायार्थान् गमयितुं, यथा गाव्यादयः। यथा च सरस्वतीदेवताके निगदे सरस्वति देवनिदो निवर्हय प्रजां विश्वस्य वृसयस्य मायिनः इति। वृसयशब्दो वृहत्शब्दार्थं गमयति। किमर्थं पुनरेवं कल्प्यते?। यतो देवतान्तराणि पशुदेवतासंस्कारार्थेषु यागेषु प्रत्याय्यमानानि अनर्थकानि भवेयुः। तस्मात् पशुदेवतानाम् आख्याविकाराः पुरोडाशदेवताशब्दा इति।

अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः॥ ३३ ॥ ( २ सु॰ )

संस्कारपक्ष एव, वाशब्दो युक्तिं व्यावर्त्तयति न पक्ष, न वा आख्याविकारः, संस्कारपक्षेऽन्यथानुपपद्यमाने

आख्याविकारा भवन्ति, अनाख्याविकारेष्वपि संस्कारपक्षोऽवकल्पत एव। कथम्?। अभ्यासः एव पुरोडाशयागस्य भविष्यति। तत्र हि चोदकेन पशुदेवता च प्राप्नोति पुरोडाशश्च। पशुदेवताया अन्यत् द्रव्यं विधीयते ग्रहः, पुरोडाशस्यान्या देवता। यागस्त्वविकृत एव तिष्ठति, स पशुदेवतासम्बद्धश्चैव कर्त्तव्यो ग्रहसम्बद्धश्च। तदुभयमप्यनभ्यस्ते यागे न सम्भवतीत्यर्थादभ्यस्यते यागः। तस्य एकदेशोऽन्यदेवत्यः प्रयाजवत्। तद्यथा, पशौ पञ्चानां प्रयाजानां चोदकेन प्राप्तानां एकदेशसङ्ख्या विधीयते, सा चान्तरेणाभ्यासं नावकल्पत इत्यभ्यस्यन्ते प्रयाजाः। तेषामभ्यस्यमानानामेकदेशेऽन्या देवता दुरउषासा नक्तेत्येवमादयः। एवमिहाप्यभ्यासः पुरोडाशयागस्य। तस्मादनुत्कर्षः संस्कारपक्षेऽपीति। (१०।१।८ अ०)।

---

सौर्यं चरुं निर्वपेदित्यत्र चरुशब्दस्यौदनवाचिताधिकरणम्।

## चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥

(सि०)

चरुः श्रूयते, सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः इति। सौर्ये आग्नेयविकार इत्येतत्समधिगतं, सामान्याद्वा नियस्येत पूर्ववत्त्वाद्विकारो हि इति। तत्रैषोऽर्थः सांशयिकः, किं चरुः कपालविकारः, हविर्विकारः? इति।

यदा हविर्विकारस्तदा किं स्थाल्या हविर्विक्रियते, उत ओदनेन ? इति। किन्तावत्प्राप्तम् ?। हविर्विकारः स्यात् इति। कुतः ? इज्यासंयोगात्। तद्धितार्थौ विधीयते चरोः, सौम्यं चरुं निर्वपेत् इति। एवमिज्यार्थश्चरुः, तस्माद्धविर्विकार इति।

## प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥ (पू०)

एवं स्थिते विशेष उच्यते, हविर्विकारः, प्रसिद्धग्रहणत्वाच्च स्थाल्या हविर्विकारः क्रियते। प्रसिद्धस्य ग्रहणं न्याय्यम्। प्रसिद्धश्च स्थाल्यां चरुशब्दः, आ हिमवतः आ च कुमारीभ्यः प्रयुज्यमानो दृष्टः। तस्मात् स्थाल्या हविर्विक्रियते इति।

## ओदनो वान्नसंयोगात् ॥ ३६ ॥ (उ०)

ओदनेऽपि चरुशब्दः प्रयुज्यते। तत्रोदनस्यैव ग्रहणं न्याय्यं न स्थाल्याः। कुतः ?। अदनीयसंयोगात्, अदनीयेन हि द्रव्येण देवतायागमाचरन्ति शिष्टाः, नानदनीयेन। तत्रभवतामाचारात् तेषां स्मृतिरनुमीयते, स्मृतेः श्रुतिः। तस्मादोदनेन हविर्विक्रियते इति।

## न ह्यर्थत्वात् ॥ ३७ ॥ (आ०)

न ओदनस्य वाचकश्चरुशब्दः। कुतः ?। ह्यर्थं एवं स भवेत्, स्थाल्यां हि स प्रसिद्धः समधिगतः, तस्मादोदने

लक्षणाशब्दस्तत्संयोगादित्येवं मन्तव्यम्। अन्याय्यो ह्येवं-जातीयकेष्वनेकार्थभावः, तस्मात् स्थाल्या हविर्विक्रियते इति। यदुक्तम्, अदनीयेन शिष्टा देवतायागमाचरन्तीति ध्रुवमेषां स्मृतिः इति। उच्यते, अनुमानमेतत् प्रत्यक्षेण वचनेन बाध्यते। वचनादवगम्यते स्थाल्या यागः कर्त्तव्य इति। कथम्?। तस्यां हि चरुशब्दः प्रसिद्धः। न असौ आचारानुरोधेन लक्षणाशब्दः कल्पनीयः। कल्प्यमाने वा आचारेण शब्दो बाध्येत, न चैतत् न्याय्यम्। शब्दानु-रोधेन हि व्यामोहादाचार इति कल्पयितुं न्याय्यम्। यथा शूलैश्च मासरेण चावभृथमभ्यवयन्ति इति, प्राजापत्यं चरुं निर्वपेत् शतकृष्णलमायुष्कामः इति च।

## कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३८ ॥ ( २य पू० )

हविर्विकारपक्षो न सिद्ध्यति, स्थाल्या विकारे स्मृति-हेतुराचाराच्छ्रुतिराशङ्क्यते, ओदनेन विकारे स्थाली-संयोगाल्लक्षणाशब्दः आशङ्क्यः। अस्ति चान्या गतिः, कपालविकारो भवेदिति। तस्माद्वाशब्देन पक्षं व्यावर्त्य कपालविकारश्चरुरिति ब्रूमः। कपालविकारोऽप्यर्थः सूर्य्यस्य, तेन सौर्य्य इति शक्यते व्यपदेष्टुम्। उपपत्तिश्चास्ति, शक्यते स्थाल्यां श्रपयितुम्। तस्माद्धविर्विकारपक्षे संशये कपालविकार आश्रयणीयः।

## गुणमुख्यविशेषाच्च ॥ ३९ ॥ (यु० १)

अस्ति च गुणमुख्ययोर्विशेषः, गुणो बाधितव्यो न्याय्यः, न मुख्यः, तदुक्तम् अङ्गगुणविरोधे च तादर्थ्यात् इति।

## तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥ (यु० २)

चरुश्रुतौ चान्यद्धविर्दर्शयति, प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः इति, शतकृष्णलानि हविः, चरुरेषां सम्बन्धी। चत्वारि चत्वारि कृष्णलान्यवद्यति इति कृष्णलानां हविष्ट्वम्।

## लिङ्गदर्शनाच्च ॥ ४१ ॥ (यु० ३)

एवं हि आह, मारुतं चरुं निर्वपेत् पृश्नीनां दुग्धे प्रैयङ्गवं ग्रामकामः इति मृण्मयो हि चरुर्न प्रियङ्गुविकारः। तस्मात् अन्यद्धविः, चरुरपि कपालविकार इति।

## ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥ ( आ० एवं २ पू० नि० )

हविर्विकार एवात्र चरुस्तद्धितसंयोगादवगम्यते, सौर्य्यश्चरुः कर्त्तव्य इति। यदि पुरोडाश उत्सृज्येत, चरुरुत्स्रष्टव्योऽवगम्यमानो बाध्येत, सूर्य्यसम्बद्धो हि चरुः कर्त्तव्यः, तस्मिन् अशक्ये सौर्य्यसम्बद्धः क्रियेत, न शक्ये, यदा च हविर्विक्रियते, तदा ओदनेन, ओदने हि चरुशब्दः प्रसिद्धः आ हिमवतः आ च कुमारीभ्यः। तत्र अदनीयसंयोगो युक्तो भविष्यति।

यत्तु, द्वार्थत्वमन्याय्यमिति, अन्याय्यमेव द्वार्थत्वम्। तत्र कुत एतत् स्थालीसंयोगेन ओदने भविष्यतीति, न पुनरोदनसंयोगात् स्थाल्यां स्यात्। स्मरन्ति च पाके चरुशब्दं, अनवस्रावितान्तरूष्मपक्को विशदसिद्ध ओदनश्चरुरिति। तदुक्तं न पक्तिनामत्वात् इति। आचाराच्च स्मृतिर्बलीयसी, तस्मादोदने चरुशब्दः, ओदनेन हविर्विक्रियत इति। तत्रायमप्यर्थोऽनदनीयेन यागो भविष्यति इति। अपि च सूर्य्यस्यान्यद्द्रव्यं नैवास्ति येन चरुः सम्बध्येत। चोदकप्राप्तः पुरोडाश इति चेत्। नैतदेवं, कर्म्मचोदनायां हि निष्पन्नायां चोदको भवति। प्राक् चरुशब्दवचनान्न यजतिचोदना। द्रव्यदेवतासम्बन्धो हि यज्यर्थः। तेन चोदनाविधिशेषः चरुशब्दो न पुरोडाशविशेषणं भवति, जघन्यत्वाच्चोदकस्य इति।

अपूर्वव्यपदेशाच्च ॥ ४३ ॥ ( १ यु० )

इतश्च पश्यामः, ओदनेन हविर्विक्रियत इति। कुतः?। अपूर्वव्यपदेशो भवति, एवं ह्याह, पुरोडाशेन वै देवा अस्मिँल्लोक आर्ध्नुवंश्चरुणामुष्मिँल्लोके इति, पुरोडाशेन आर्ध्नोति चरुणामुष्मिन् इति। यदि स्थाल्यां चरुशब्दः कपालविकारश्चरुः, ततो यस्मिन्नेव पक्षे पुरोडाशस्तस्मिन्नेव पक्षे चरुः, पुरोडाशेन वै देवा अस्मिँल्लोके आर्ध्नुवन् इति चरुणा अस्मिँल्लोक इति गम्यते, तत्र चरुणामुष्मिन् इति अन्यवद् व्यपदेशो नावकल्पते। तस्मादपि ओदनेन हविर्विक्रियत इति।

## तथा च लिङ्गदर्शनम् ॥ ४४ ॥ ( २ यु० )

एवञ्च कृत्वा लिङ्गदर्शनम् अप्युपपन्नं भविष्यति। कथम्?। आदित्यः प्रायणीयश्चरुः आदित्य उदयनीयः इति। तत्रैतच्छ्रूयते, आज्यस्यैव चरुमभिपूर्य्य चतुर आज्यभागान् यजति। पथ्यां स्वस्तिमिष्ट्वाग्नीषोमौ यजति अग्नीषोमाविष्ट्वा सवितारं यजति। अदितिमोदनेन इति। चतुर्षु आज्यभागेषु विधिः, अदितिः आदित्यश्चरुः इति प्राप्तत्वादनुवादः। तत्र चरुम् ओदनशब्देन ब्रुवन् ओदनेन हविर्विक्रियत इति दर्शयति। तथा इदमपरं लिङ्गं भवति, यदि तण्डुलो विद्यते आमं तद्धविः स्यात् इति। तण्डुले हविःशब्दं ब्रुवन्नोदनेन हविर्विक्रियत इति दर्शयति। ( १० । १ । १० अ० )।

---

सौर्य्यचरोः स्थाल्यामेव पाकाधिकरणम्।

## स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥ ( १म पू० )

अस्ति चरुः सौर्य्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः इति। अत्रैषोऽर्थः समधिगतः, ओदनेन हविर्विक्रियत इति। स इदानीम् ओदनः क्व पक्तव्यः? इति भवति संशयः। किन्तावत्प्राप्तम्? न नियमः स्यात्, कपालेष्वेव इति, अथवा यस्मिन्-कस्मिंश्चित् द्रव्ये पच्येत। यदि

हि कपालं चोदकेन प्राप्येत, कपालवच्चोदकेन सङ्ख्यापि प्राप्येत। न हि प्रकृतौ कपालेषु अपयितव्यमित्येव चोदना, किन्तर्हि, अष्टाकपालो भवति इति, सङ्ख्यायां प्राप्यमाणायां अष्टाकपालतास्य चोदिता भवति, नान्यथा। न चैवं सङ्ख्या प्राप्यते, न हि बहुषु कपालेषु पुरोडाशवदोदनः पक्तुं शक्यः। केवले च कपाले प्राप्यमाणे यासावष्टाकपालता चोदिता सा नैव प्राप्येत। अतो यस्मिन्-कस्मिंश्चित् अर्थप्राप्ते द्रव्ये पक्तव्यश्चरुरिति।

एवं प्राप्ते ब्रूमः, स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात्। स एष चरुः कपाल एव स्यात्। एवं प्रकृतिवच्छब्दोऽनुगृहीतो भवति, न चान्यत् किञ्चित् द्रव्यमाम्नायते, तस्मान्नियमः।

सङ्ख्या चापि कपालवत् इति यदुक्तं तत्परिहर्त्तव्यम्,

**एकस्मिन् वा विप्रतिषेधात् ॥४६॥ (आ० नि०)**

यदि बहुषु कपालेषु न शक्यते चरुः पक्तुं, विप्रतिषेधात् एकस्मिन् पक्तव्यः। यदेतदुच्यते, अष्टाकपालो भवति इत्येतदुक्तं भवति, अष्टसु कपालेषु अपयितव्यः इति। तन्न, यदि अष्टत्वं विरोधान्न प्राप्यते, तत् कपालमविरोधात् प्राप्येत।

**न वार्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात् पात्रलाभः स्यादनियमोऽविशेषात् ॥ ४७ ॥ ( २य पू० )**

न वा कपालेषु पक्तव्यः। कुतः ?। अर्थान्तरसंयोगात्, अपूपपाके यत् कपालमुपादीयते, तद्गतेनोष्मणा अपूपस्य निर्वर्त्तकः पाको यथा स्यादिति। तत्र कपालं चरोरुपादीयमानं उदकधारणार्थं यदूष्मणा उदकगतेन ओदनपाको निर्वर्त्त्यते, स ओदनपाको न कपालगतेन ऊष्मणा निर्वर्त्तते। तत्रोदकधारणार्थं कपालम् उपादीयमानं न प्राकृतकार्य्यं स्यादिति चोदको नैवानुग्टह्यते। तस्मात् अर्थात् पात्रलाभः स्यात् इति तद्, अविशेषात् न नियम्येत, किं तत् ? इति।

## चरौ वा लिङ्गदर्शनात् ॥ ४८ ॥ (सि०)

स्थाल्यां वा श्रपणं क्रियेत, लिङ्गं हि भवति, यासु स्थालीषु सोमाः स्युस्ते चरवः स्युः इति। सोमस्थालीषु चरुं पक्तव्यं ब्रुवन् विशेषेण स्थालीं चरुस्थापनार्थां दर्शयति।

आह, दर्शनमिदं व्यपदिश्यते, प्राप्तिरुच्यताम् इति। अत्रोच्यते, स्थाल्यां स चरुसञ्ज्ञकः पाको निर्वर्त्त्यते, न कटाहे कपाले वा। तस्मात् स्थाल्यां चरुः पक्तव्यः इति।

किं भवति प्रयोजनं, यदि कपालविकारश्चरुः यदि वा ओदनेन हविर्विक्रियते ? इति। यदि कपालविकारः, तस्मिन् पेषणमनर्थलोपात् कर्त्तव्यम्। अथ ओदनेन हविर्विक्रियते, अक्रिया पेषणस्य अपूपहेतुत्वात्। पिण्डार्थत्वाच्च संयवनं पूर्वपक्षे कर्त्तव्यं, न सिद्धान्ते। संवपनमप्येवम्। सन्तापनञ्च अधस्तात्, श्रपणार्थं पूर्वपक्षे कर्त्तव्यं,

न सिद्धान्ते। उपधानञ्चैवमेव। पृथुश्लक्ष्णे च पूर्वपक्षे कर्त्तव्ये, न सिद्धान्ते। अध्यूहनाङ्गाराणां पूर्वपक्षे कर्त्तव्यः, न सिद्धान्ते, उपरिपाकार्थत्वात्। अवज्वलनमप्येवमेव। व्युद्‌त्यासादनं पूर्वपक्षे अर्थात् कर्त्तव्यम्। अर्थो नास्ति इति न सिद्धान्ते। अर्थात् कृतं हि व्युद्‌त्यासादनं न शब्दप्राप्तम्, अर्थाच्च कृतं न चोदकः प्रापयति॥ (१०।१। ११ अ०)॥

---

सौर्यचरौ पेषणाभावाधिकरणम्।

एवं वा, पृथगधिकरणानि पेषणादीनि। अस्ति चरुः, सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः इति। ओदनेन हविर्विक्रियते, इत्येतत्समधिगतम्। तत्रैतत्सन्दिह्यते, किं चरौ पेषणं कर्त्तव्यं, न? इति। किं प्राप्तम्?,

**तस्मिन् पेषणमनर्थलोपात्स्यात्॥ ४९॥ (पू०)**

शक्यते हि तण्डुलेषु पेषणं कर्तुम्॥

**अक्रिया वा अपूपहेतुत्वात्॥ ५०॥ (सि०)**

यद्यपि शक्यते, तथापि न क्रियते। अपूपः पेषणेन विना न निर्वर्त्तते, ओदनस्तु विनैव पेषणेन भवति, कामं पेषणेन व्याहन्यते, पिष्टकं यवागूर्वा स्यात् खलिर्वा। तस्माच्चरौ पेषणं निवर्त्तेत॥ (१०।१।१२ अ०)॥

सौर्य्यचरौ संयवनाभावाधिकरणम्।

## पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥

चरुरेवोदाहरणम्। प्रकृतौ श्रूयते, प्रणीताभिर्हवींषि संयौति इति। तदिह सन्देहः, चरौ संयवनं कर्त्तव्यं, न? इति। कर्त्तव्यं, शक्यते हि कर्त्तुमिति।

एवं प्राप्ते ब्रूमः, शक्यमपि न क्रियते, पिण्डार्थं हि तत् पिण्डेन च अपूपस्य प्रयोजनं, न चरोः॥ (१०। १। १३ अ०) ॥

---

सौर्य्यचरौ संवपनाभावाधिकरणम्।

## संवपनञ्च तादर्थ्यात् ॥ ५२ ॥

सौर्य्ये एव चरुरुदाहरणम्। प्रकृतौ श्रूयते, सवितृ-प्रसूत इत्येवैनं देवताभिः संवपति इति। इह चरौ सन्देहः, संवपनं कर्त्तव्यं, न? इति। किं प्राप्तम्?, शक्यत्वाच्चो-दकानुग्रहाय कर्त्तव्यम् इति। एवं प्राप्ते ब्रूमः, संयवितुं हि तत् प्रकृतौ क्रियते, न चरोः संवपनेन प्रयोजनम्। (१०।१।१४ अ०)।

—:o:—

सौर्य्यचरौ सन्तापनाभावाधिकरणम्।

## सन्तापनमधःश्रपणात् ॥ ५३ ॥

चरावेव च सन्देहः। प्रकृतौ सन्तापनं कपालाना-मस्ति, वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां धर्मस्य तपसा तप्यध्वम् इति। चरौ सन्तापनं कर्त्तव्यं, न ? इति सन्देहः। प्रकृतिवद्वचनात् कर्त्तव्यमिति प्राप्तम्। अधः-पाकार्थं हि तत्। तस्मान्न चरौ चोदकः प्रापयति॥ (१०।१।१५ अ०)॥

---

सौर्य्यचरावुपधानाभावाधिकरणम्।

## उपधानञ्च तादर्थ्यात्॥ ५४॥

चरावेव कपालोपधानं प्रति सन्देहः, कर्त्तव्यं न ? इति। प्रकृतिवद्वचनात् प्राप्तम्। अधःपाकार्थत्वान्निव-र्त्तते इति॥ (१०।१।१६)॥

---

सौर्य्यचरौ पृथुश्लक्ष्णाभावाधिकरणम्।

## पृथुश्लक्ष्णे वानपूपत्वात्॥ ५५॥

पृथुश्लक्ष्णे च प्रति चरोरेव सन्देहः, प्रकृतौ श्रूयते, उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति। सन्तेतन्वा तनूः सृज्यतामिति त्रिभिः परिमार्ष्टि। तदुभयं चरौ कर्त्तव्यं, न ? इति। चोदकानुग्रहाय कर्त्तव्यमिति प्राप्ते, अनपूपत्वात् तत् निवर्त्तते॥ (१०।१।१७ अ०)॥

---

सौर्य्यचरावभ्यूहाभावाधिकरणम् ।

## अभ्यूहश्चोपरिपाकार्थत्वात् ॥ ५६ ॥

प्रकृतौ श्रूयते, वेदेन भस्मनाङ्गारान् अभ्यूहति इति । तत् सौर्य्ये चरौ कर्त्तव्यं, न ? इति सन्देहः । प्रकृतिवद्वचनात् कर्त्तव्यमिति प्राप्ते ब्रूमः, उपरिपाकार्थं हि तत् पुरोडाशस्यावकल्पते, न चरोरिति निवर्त्तते ॥ (१०। १।१८ अ०) ॥

—

सौर्य्यचरावव्ज्वलनाभावाधिकरणम् ।

## तथावज्वलनम् ॥ ५७ ॥

दर्शपूर्णमासयोः श्रूयते, दर्भपिञ्जूलैरवज्वलयति इति । सौर्य्ये चरौ सन्देहः, किं तत्कर्त्तव्यं, न ? इति । किं प्राप्तम् ? । प्रकृतिवद्वचनात् कर्त्तव्यम्, उपरिपाकार्थत्वान्निवर्त्तते इति ॥ (१० । १ । १८ अ० ) ॥

सौर्य्यचरौ व्युद्धृत्यासादनाभावाधिकरणम् ।

## व्युद्धृत्यासादनञ्च प्रकृतावश्रुतित्वात् ॥ ५८ ॥

प्रकृतौ श्रूयते, अन्तर्वेद्यां हवींष्यासादयति इति । तत् प्रकृतौ कपालेभ्यो व्युद्धृत्यासादनं क्रियते । सौर्य्ये चरौ सन्देहः, किं स्थाल्या व्युत्थाप्य चरुरासादयितव्यः, उत व्युत्थानं न कर्त्तव्यम् ? इति । प्रकृतौ कृतत्वाच्चरावपि कर्त्तव्यमिति प्राप्तम् । तदुच्यते, व्युद्धृत्यासादनञ्च

प्रकृतावश्रुतित्वात्, प्रकृतौ न श्रूयते, कपालेभ्यो व्युद्धृत्यासादयितव्यः पुरोडाशः इति, अर्थात् स व्युद्ध्रियते, यच्चार्थात्कृतं न स चोदनार्थः, तस्माच्चरौ व्युद्धरणं न कर्त्तव्यम्। अपि चोद्धरणे क्रियमाणे कपित्थवत् परिशोष्य उद्ध्रियेत। तत्र पात्रभेदः स्यात्? तस्मात् व्युद्धृत्यासादनं चरौ न कर्त्तव्यमिति॥ (१०। १। २० अ०)॥

इति भट्टश्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये दशमस्य अध्यायस्य प्रथमः पादः।

---

## मीमांसा-दर्शने

### १० अध्याये २ पादः।

—————{ :: }—————

क्षपाले चरौ पाकानुष्ठानाधिकरणम्।

**कृष्णलेष्वर्थलोपादपाकः स्यात्॥ १॥ (पू०)**

प्राजापत्यं चरुं निर्वपेत् घृते शतकृष्णलमायुष्कामः इति। तत्र सन्देहः, किं चोदकेन पाकः प्राप्यते कर्त्तव्यश्च, उत न प्राप्यते न कर्त्तव्यः? इति। किं तावत् प्राप्तम्?। कृष्णलेषु पाको न स्यात्। प्रकृतौ हि पुरो-

ङ्गार्थः पाकः, इष्टान्तरेणापि पाकं, कपालानि कपालान्येव भवन्ति। तस्मान्न प्राप्यते, अतो न कर्त्तव्यः इति।

**स्याद्वा प्रत्यक्षशिष्टत्वात् प्रदानवत् ॥२॥ (सि०)**

स्याद्वा पाकः। चोदकेन तु न प्राप्यते, प्रत्यक्षन्तु अस्य शासनं, घृते श्रपयति इति। प्राकृतस्य कार्य्यस्यार्थे न भवति, वचनप्रामाण्याददृष्टार्थो भवति। यथा तेषामिवानदनीयानां प्रत्यक्षशासनात् प्रदानम्, एवं पाकोऽपीति। (१०।२।१ अ०)।

———

कपाले उपस्तरणाभिघारणयोरभावाधिकरणम्।

**उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म्म स्यात् ॥ ३ ॥ (सि०)**

कपालचराविव सन्देहः, ये प्रकृतावुपस्तरणाभिघारणे, यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति इति। ते उपस्तरणाभिघारणे कपालचरौ कर्त्तव्ये, न? इति एष संशयः। किं प्राप्तम्?। उपस्तरणाभिघारणयोः न क्रिया। कुतः। अमृतार्थत्वात्, अमृतार्थत्वेन हि ते क्रियेते, यदुपस्तृणात्यभिघारयति अमृताहुतिमेवैनां करोति इति अमृतेनोपमिमानः स्वादुभावार्थतां तयोर्दर्शयति, न च कपालेषु स्वादुभावः सम्भवति। तस्माद् अक्रियेति।

**क्रियेत वार्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥ (पू०)**

क्रियेत वा उपस्तरणमभिघारणञ्च, विधेः प्रकारान्तरेऽतिदेशात् सर्वकर्म स्यात् इति। यदुक्तं, स्वादुत्वाय ते क्रियेते इति, न स्वादुतार्थः प्रकृतौ श्रुतः, स्वादुः कर्त्तव्य इति। तस्मात् अर्थवादः, अमृताहुतिमेवैनां करोति इति। संसर्गमात्रमाज्यस्य क्रियते हविषश्च। तच्च कपालेष्वपि शक्यं कर्त्तुं, तस्माद् अनिवृत्तिः।

**अकर्म वा चतुर्भिराप्तिवचनात् सह पूर्णं पुनश्चतुरवत्तम् ॥ ५ ॥ (उ०)**

वाशब्दः पक्षं व्यावर्त्तयति। अक्रिया तयोरिति। कुतः ?। चतुर्भिराप्तिवचनात्, चत्वारि कपालान्यवद्यति इति। कोऽभिप्रायः ?। चत्वारि कपालानि चत्वारि अवदानानि। एकैकं कपालम् एकैकस्यावदानस्य स्थाने, तेनोपस्तरणाभिघारणयोर्निवृत्तिः। तथा चाप्तिवचनं भवति, चत्वारि कपालान्यवद्यति चतुरवत्तस्याप्त्यै इति। अविद्यमानस्यार्थान्तरेणानुग्रहो भवति, तस्मान्निवृत्तिरेतयोः। सह पुनः उपस्तरणाभिघारणाभ्यां पूर्णं चतुरवत्तम् एव स्यात्, तत्राप्तिवचनं व्याहन्येत।

**क्रिया वा मुख्यावदानपरिमाणात् सामान्यात् तद्गुणत्वम् ॥ ६ ॥ (पुनः पू०)**

क्रिया वा तयोश्चोदकानुग्रहाय, मुख्यावदानस्य हि प्रकृतौ परिमाणमुक्तम्, अङ्गुष्ठपर्वमात्रं देवतानामवद्यति इति। इहापि कपालशब्दः परिमाणवचनः श्रूयते। स चतुःसङ्ख्यया अनुबध्यते, चत्वारि कपालान्यवद्यति इति, न यानि चत्वारि अवदानानि तानि कपालपरिमाणानि भवन्तीति। हिरण्यपरिमाणवचनः एष कपालशब्दो न आज्यस्य परिमाणं वदितुमुत्सहते। तच्च परिमाणं न द्रव्यं निवर्त्तयति, न हि द्रव्यकार्य्येषु गुणो वर्त्तितुमर्हति। परिमाणं यत् प्राकृतं तस्य कार्य्यें वर्त्तमानं तन्निवर्त्तयेत्, यथा, इदं दधि घृतं शाकम् इमे शालयः, देवदत्तो भोज्यतां, देवदत्तवत् यज्ञदत्तस्तैलेनेति, तैलं हि भोजने स्नेहनेनोपकरोति, तत् स्नेहनार्थं प्राकृतं निवर्त्तयितुमर्हति घृतं, न शाकं दधि च ओदनं वा। एवमिहापि परिमाणं मुख्यावदानं परिमिमीते न द्रव्यं निवर्त्तयेत्। प्रकरणात्तु मुख्यपरिमाणं स्यात् न उपस्तरणाभिघारणयोः। तस्मात् तयोरनिवृत्तिरिति।

## तेषां चैकावदानत्वात् ॥ ७ ॥ (यु०)

चतुर्णां चैकावदानतां दर्शयति, चत्वारि कपालान्येकमवदानम् इति, इतरथा चत्वारि अवदानानि अभविष्यत्। तन्नैकावदानवचनमुपरोत्स्यते। तस्मादप्यनिवृत्तिरिति।

## आप्तिः संख्यासमानत्वात् ॥ ८ ॥ (परिहारः)

अथ यदुक्तं, आप्तिवचनं भवति इति, चतुःसङ्ख्या-संस्तुतिरेषा, एवं चतुःसङ्ख्याया माहात्म्यं यदेकस्मिन्नवदाने चत्वारि अवदानानि भवन्ति इति। यथा, यद्वैश्वदेवः प्रातःसवने गृह्यते, प्रातःसवने वा एतद्वैश्वदेवयज्ञं संस्थापयति इति वैश्वदेवसंस्तुतिर्न अन्यसवननिवृत्तिः। एवमिहापि चतुःसङ्ख्यासंस्तवः, नोपस्तरणाभिघारणयोर्निवृत्तिरिति।

## सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥ (परि० नि०)

तुशब्दः एनं चतुःसङ्ख्यासंस्तवं व्यावर्त्तयति। न हि, विद्यमानयोरुपस्तरणाभिघारणयोस्तदाप्तिवचनेन कश्चित् संस्तवोऽस्ति। यदविद्यमानम् आपयति इत्युच्यते, ततो गुणवानित्युक्तो भवति, तत्र संस्तूयते। अथ विद्यमानम् आपयति इति अनर्थको भवतीत्युक्तं भवति, न संस्तवः। तस्माद्विद्यमानयोरुपस्तरणाभिघारणयोराप्तिवचनं व्यर्थमेव, अन्यः परिहारो वक्तव्यः।

## विकल्पस्त्वेकावदानत्वात् ॥ १० ॥ (२ परि०)

तुशब्द आप्तिवचनान्निवृत्तिरुपस्तरणाभिघारणयोरित्येतन्निवर्त्तयति। यथा भवान् ब्रूते, आप्तिवचनाल्लिङ्गान्निवृत्तिरेतयोरिति, एवमेकावदानवचनाल्लिङ्गादनिवृत्तिरेतयोरिति लिङ्गविकल्पः। लिङ्गविकल्पाच्च नैकान्ततो निवृत्तिमाप्तिवचनं कर्त्तुमर्हति।

सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥ ११ ॥ (२ परि० नि०)

तुशब्द आप्तिवचनं बाधते। आप्तिवचने बाधिते सति चतुर्षु कपालेषु सर्वावदानविकारेष्वभ्यासो अनर्थकः स्यात्, चत्वारि चत्वारि कपालान्यवद्यति सकृद्वा इति। अस्मत्पक्षे पुनः इतरहविर्द्वितीयमवदानमपेक्ष्याभ्यासोऽवकल्पिष्यते। अथ मतं, एतन्ममापि स्विष्टकृतमपेक्ष्याभ्यासो भवति इति। तन्नैवं, इतरस्य स्विष्टकृतोऽपेक्षणमन्याय्यम्। प्रकरणात् प्रधानमभिसम्बध्यते वचनेन, न च स्विष्टकृतः प्रकरणं, चोदकेन हि स प्राप्यते, तस्मात् त्वत्पक्षेऽभ्यासोऽनर्थक एव। उपस्तरणाभिघारणे कर्त्तव्ये एव।

अकर्म वा संसर्गार्थनिवृत्तित्वात् तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥ (पुनः पू० उ०)

अक्रिया उपस्तरणाभिघारणयोः। कुतः ?। संसर्गः स्रुचि पुरोडाशचूर्णानां सूक्ष्माणां माभूदिति उपस्तरणेन स्रुक् स्निग्धीक्रियते, अभिघारणेन हविः स्रुचि असंयुक्तं कृत्स्नं यथा अग्नौ पतेदिति। न तु विशदस्य कपालस्य स्रुचि संयोगो भवति, यन्निमित्तमुपस्तरणमभिघारणञ्च स्नेहनार्थं स्रुवर्णस्य क्रियेत। तस्मात् प्राकृतस्य प्रयोजनस्य निवृत्तत्वात् कपालेषु उपस्तरणाभिघारणे निवर्त्तितुमर्हतः।

एवञ्चासिवचनमुपपन्नं भविष्यति, चत्वारि कपालान्यवद्यति चतुरवत्तस्याप्तैः इति ॥ ( १० । २ । २ अ० ) ॥

---

कपालचरौ भक्षसद्भावाधिकरणम् ।

## भक्षाणान्तु प्रीत्यर्थत्वादकर्म स्यात् ॥१३॥ (पू०)

अतत्कपालस्वरूदाहरणम् । सन्ति प्रकृतौ भक्षाः इडा-प्राशित्रचतुर्द्धाकरणशंयुवाककालाः । तेषु संशयः, कपाल-चरौ ते भक्षाः कर्त्तव्याः, उत न ? इति । किं प्राप्तम् ? । न कर्त्तव्याः, प्रीत्यर्थं हि प्रकृतौ ते कृताः, सामर्थ्यं जनयिष्यन्तीति । न तु हिरण्यं प्रीतिमुत्पादयति भक्ष्यमाणम् । अतो न कर्त्तव्याः ।

## स्याद्वा लिङ्गानदर्शनात् ॥१४॥ (सि०)

स्याद्वा हिरण्यस्य भक्षः, भक्षणविशेषदर्शनात्, निरव-धयन्तो भक्षयन्ति चुत्तुषाकारं भक्षयन्ति इति प्राप्ते भक्षे केवलं भक्षोपायं विधास्यति शब्द इति, इतरथा भक्षोपायं भक्ष-णञ्च विकृतौ विदध्यात्, तत्र वाक्यं भिद्येत । तस्माच्चोद-केन प्राप्यते भक्ष इति ।

## वचनं वाज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥ (आ०)

न ह्येतदस्ति, प्राप्यन्त भक्षा इति, अर्थलोपादेषां

निवृत्तिः। यत्तु, भक्षणे विशेषवचनं भवतीति, वचनादेतत् आज्यस्य भविष्यति। निरवधयन्तो भक्षयन्त्याज्यमिति, चुलुषाकारं भक्षयन्त्याज्यमिति। निर्दानं चुलुषाकारं चार्थप्राप्तं भक्ष्यमाणस्यानूद्यत इति न वाक्यभेदः।

वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥ (आ० नि०)

सत्यं, वचनमेतद्धिरण्यस्य, न त्वाज्यस्य। कुतः?। भक्षयन्तीत्येतावच्छ्रूयते, न इदं वा तद्वा इति, तत्र यन्निर्दिष्टं प्रकृतं, तस्य तेन सम्बन्धो भवतीति, हिरण्यं चात्र निर्दिश्यते, नाज्यम्। कथम्?। प्राजापत्यं चरुं निर्वपेत् घृते शतकृष्णलम् इति शतकृष्णलश्चरुश्च कार्य्यसम्बन्धार्थमुच्यते, तद्विशेषणार्थेन घृतं, न स्वनिर्देशार्थेन। तस्माच्चरुरेव शब्दान्तरैः सम्बध्यते, न घृतम्। तद्यथा एष दण्ड इष्टकाकूटे तिष्ठति प्रहरानेनेति, दण्डेनेति गम्यते, नेष्टकाकूटेनेति। एवमिहापि चरुर्भक्षणवचनेन सम्बध्यते न घृतं, तस्माच्चरोर्भक्षणं प्रदानवत्। यथा तेषामेव कृष्णलानाम् अनदनीयानां प्रदानं क्रियते, एवमत्रापि द्रष्टव्यम् इति। (१०। २। ३ अ०)।

---

कृष्णलचरौ एकधा ब्रह्मणे चरतीत्यनेन सहपरिहारविधानाधिकरणम्।

एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥

तत्रैव श्रूयते, एकधा ब्रह्मणे परिहरति इति। तत्र सन्देहः, किमेतत् सहत्वम् उत सकृत्त्वम् इति। किं प्राप्तम्? सकृत्त्वं वा सहत्वं वा अनियम इति। कुतः?। एकप्रकारवचन एकधेति शब्दः, सकृत्त्वमप्येकः प्रकारः सहत्वमपि। तद्यथा, यः सकृत् गाः प्रापयति स एकधा प्रापयतीत्युच्यते, योऽपि सह प्रापयति सोऽप्येकधा प्रापयतीति, तस्मात् सकृत्त्वं सहत्वं वा कर्त्तव्यम् इति।

एवं प्राप्ते ब्रूमः, एकधा ब्राह्मणे परिहरति इति सहेति गम्यते, एवं ब्रह्मभक्षस्याब्रह्मभक्षस्यापि परिहारः कृतो भविष्यति। इतरस्मिन् पक्षे कस्यचिद्ब्रह्मभक्षस्य परिहारो न क्रियेत, तत्र प्राकृतः प्रयोगवचनो बाध्येत। विहृताश्चामी भक्षाः प्रकृतौ, ते इह चोदकेन विहृता एव प्राप्तास्तत्र सहत्ववचन एकधाशब्दोऽवकल्पते। ननु वाचनिक इह भक्षोऽप्राकृतः, न प्राकृता विहृताः प्राप्तुमर्हन्ति इति। उच्यते, पुरुषसंस्कारार्थत्वेन न प्राप्नुवन्ति, द्रव्यसंस्कारार्थत्वेन तु प्राप्नुवन्तीति। यदि प्राप्नुवन्ति, किमर्थं तर्हि वचनम्? इति। भक्षोपायविधानार्थम्। ननु निर्दानं चुक्षुषाकरणं वा अर्थप्राप्तम्, अर्थप्राप्तत्वादनुवादः। उच्यते, न नियमेन प्राप्यते, नियमार्थश्च विधीयते इति॥ (१०।२।४ अ०॥

---

कपालचरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम्।

## सर्वत्वं च तेषामधिकारात्स्यात् ॥ १८ ॥ (पू०)

कपालचरुरेवोदाहरणम्। तत्र श्रूयते, सर्वं ब्रह्मणे परिहरति इति। तत्र सन्देहः, किं ब्रह्मभक्षाणामेवैष परिहारः, उत पुरुषेभ्यः शेषापनयः ? इति। कथं ब्रह्मभक्षाणां परिहारः, कथं वा शेषापनयः ? इति। यदि ब्रह्मणे परिहरति इत्यनूद्य सर्वम् इति विधीयते, ब्रह्मणे सर्वम् इति वानूद्य परिहरति इति विधीयते, ततो ब्रह्मभक्षाणां परिहारः। अथ सर्वम् इति लक्षयित्वा ब्रह्मणे परिहरति इति विधीयते, परिहरति इति वा लक्षयित्वा सर्वं ब्रह्मणे इति, ततः शेषापनयः। किं प्राप्तम् ?। सर्वत्वं ब्रह्मभक्षाणां स्यात्। कुतः ?। ब्रह्मणे परिहरति इति प्राप्तमेव न विधीयते। सर्वपरिहारस्तु अप्राप्तः तस्य विधानं भवितुमर्हति।

अथ वा अस्त्येव ब्रह्मणे सर्वो भागस्तत्र कस्यचिद्भागस्य परिहारः प्राप्तः कस्यचिन्न प्राप्तः, यस्य च न प्राप्तस्तस्य परिहारो विधीयते। तस्मादधिकृतानां ब्रह्मभक्षाणामेष वाद इति।

## पुरुषापनयो वा तेषामवाच्यत्वात् ॥१९॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति। पुरुषापनयः स्यात्। यद्येवम् उच्येत, यत् ब्रह्मणे परिहरति, तत् सर्वमिति, सर्वमेव हि तद्विधानमनर्थकं स्यात्। अथ यत् ब्रह्मणे,

तत् सर्वं परिहरतीति। विशेष्यस्यानिर्देशात् न ब्रह्मशब्दो विशेषणम्। अथ यद् ब्रह्मणे, सर्वं तत् परिहरति इति। एवमपि विशेष्यो नैव निर्दिष्टः स्यात्। यत् सर्वं तत् परिहरतीति नैवं वचनमर्हति, सर्वं हि सर्वं, ततश्च विशेषयितव्यम्। तस्मात् सर्वं ब्रह्मणे परिहरतीति ब्रह्म-सम्बन्धः सर्वस्य विधीयते चरोः, एवं न किञ्चिदनर्थकम्। तस्मात् पुरुषेभ्यः शेषापनय इति॥ (१०।२।५ अ०)॥

---

भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम्।

## पुरुषापनयात् स्वकालत्वम्॥ २०॥

तत्रैव सन्देहः, समधिगते शेषापनये किमेकस्मिन् काले सर्वे भक्षा भक्षयितव्याः, उत स्वस्मिन् स्वस्मिन् काले? इति। किं प्राप्तम्?। भक्षयितुं तत्परिहरणं क्रियते, अतो यत् भक्षणाय परिहृतं तदनन्तरं भक्षयितव्यमेव।

एवं प्राप्ते ब्रूमः, पुरुषापनयात् स्वकालत्वम् इति, पुरुषापनयं कृत्वा कृतार्थः शब्दः स्वकालतां भक्षणानां न निवारयति, तस्माद्यथाकालमेव भक्षयितव्याः इति॥ (१०।२।६ अ०)॥

---

ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम्।

## एकार्थत्वादविभागः स्यात्॥ २१॥

तत्रैवेदं चिन्त्यते, प्रकृतौ व्यादेश आम्नातः, इदं ब्रह्मण

इदं होतुरिदमध्वर्य्योरिदमग्नीधः इति । स इह कर्त्तव्यो न कर्त्तव्यः ? इति संशयः । चोदकप्राप्तया कर्त्तव्य इति यस्य बुद्धिः स्यात्, तस्य निवृत्त्यर्थं सूत्रम् । प्रकृतौ बहूनां सम्बन्धः कर्त्तव्यः, स विभागमन्तरेण न सिध्यतीति विभागो बहुसम्बन्धाय क्रियते । इह तु सर्वं ब्रह्मणे परिहरति इति एकस्मै सर्वस्वकः, तत्र विभागेन न प्रयोजनं, क्रियमाणोऽपि न प्राकृतार्थः स्यात्, अदृष्टार्थमेव क्रियेत तस्मात् कृष्णलचरौ न व्यादेश इति ॥ (१० । २ । ७ अ० ) ॥

---

ज्योतिष्टोमे ऋत्विग्दानस्यानत्यर्थताधिकरणम् ।

## ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददाति सामर्थ्यात् ॥ २२ ॥ ( पू० )

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेत इति । तत्रेदं समामनन्ति, गौश्च अश्वश्च अश्वतरश्च गर्दभाश्च अजाश्च अवयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा । इदं चापरं श्रूयते, ऋत्विग्भ्यो दक्षिणां ददाति इति । तत्र संशयः, किं दानं धर्ममात्रम्, उत ऋत्विगानमनम् ? इति । किं प्राप्तम् ? । ऋत्विग्दानं धर्ममात्रं स्यात्, तस्यहि कर्त्तव्यता श्रूयते । ददातिकर्त्तव्यता अस्माच्छब्दाद् गम्यते, ऋत्विगानमनं

कर्त्तव्यं वाक्याद्गम्यते, श्रुतिश्च वाक्याद् बलीयसी। लोकेऽपि अदृष्टार्थतैव ददातेर्गम्यते इति सामर्थ्यादेव नानमनादि। अपि च कर्मानुरूपमपि दाक्षिण्यं क्वचित् श्रूयते, त्रैधातव्यायां सहस्रमृतपेये सोमचमसः। अपि च यत्रोच्चनीचपणोपणः क्रियते स परिक्रयो भवति, न यत्र नियतपरिमाणं दानम्। तस्माद्धर्ममात्रं दानम्। अपि च नियमवन्मन्त्रवच्च क्रियते, तददृष्टार्थत्वेनावकल्पते। क्वचिच्च श्रूयते, दण्डः, उपानहौ, शुष्का दृतिः सा हि दक्षिणा इति। को हि दण्डेनानमेत्? तस्मात् धर्ममात्रं दानमिति।

## परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥

( सि० )

परिक्रयार्थं वा दानम्। कुतः?। कर्मसंयोगात्, कर्मसंयुक्तेभ्यः श्रूयते, ऋत्विग्भ्यो दक्षिणां ददाति इति। तत्र दृष्टं प्रयोजनमुत्सृज्य न शक्यमदृष्टं कल्पयितुम्। यदपि नियमाददृष्टं, तदपि दृष्टद्वारमेव, अनेन नियतेन नियतगुणकेन च दानेनानम्यमाना ऋत्विजः अभ्युदयकारिणो भवन्ति। कथम्?। आनमने गुणभूतस्त्यागश्चोद्यते न प्रधानभूतः, वाक्यार्थश्च अवश्यं ग्रहीतव्यः, इतरथा ऋत्विग्भ्यः इत्येतदेव पदमनर्थकं स्यात्। अगृह्यमाणो सुतरां श्रुतिर्बाध्येत। यच्च, न कर्मानुरूपं दाक्षिण्यमिति। नैतावता दृष्टोऽर्थः सन् अपह्नूयेत। नियमात् दृष्टद्वारमदृष्टमित्युक्तमेव। वचनप्रामाण्याच्च दण्डोऽवगम्यते। अपि च भवति

तत्र या च यावती चानमनमात्रा,लोकेऽपि हि काष्ठवाह-प्रभृतिभ्यो गृह्यते, तदसङ्कीर्त्तितेऽपि परिक्रये आनमनार्थमेव भवति । तस्मात् परिक्रयार्थं दक्षिणादानमिति ।

दक्षिणायुक्तवचनाच्च ॥ २४ ॥ (यु० १)

दक्षिणायुक्तवचनाच्च लिङ्गात् परिक्रयार्थं दानमिति पश्यामः । दक्षिणायुक्ता वहन्ति ऋत्विजः इति ।

न चान्येनानम्येत परिक्रयात्, कर्मणः परार्थत्वात् ॥ २५ ॥ (यु० २)

इतश्च परिक्रयार्थं दानमिति । कुतः ? । नान्तरेण परिक्रयं, परार्थे परः प्रवर्त्तते । ननु सामादयोऽपि प्रवर्त्तनोपायाः । न ब्रूमो,न प्रवर्त्तनोपाया इति,किन्तर्हि परिक्रयः प्रत्यक्षमाम्नात इति । अतस्तेनैव परिक्रेतव्या नान्येन इति ।

परिक्रीतवचनाच्च ॥ २६ ॥ (यु० ३)

परिक्रीतवचनं भवति, तेनायमर्थो द्योत्यते, दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति इति । तस्मादपि परिक्रयार्थं दानमिति ॥

सनिवन्त्ये व भृतिवचनात् ॥ २७ ॥ (यु० ४)

सनिवनिप्राप्तं सनिवन्त्यं याञ्चाप्राप्तमित्यर्थः । तस्मिन् भृतिवचनं भवति, यज्ञो वै देवतानां न समभवत्, तं

भृत्या समभावयन्, यत् भृतिं वनुते, यज्ञस्य भृत्यै द्वादश-रात्रीर्दीक्षितो भृतिं वन्वीत इति। यज्ञार्थं यद् भिक्षितं ऋत्विजः परिक्रेतुम्, अन्यच्च यज्ञार्थं साधयितुं, तस्मिन्नेव भृतिवचनम्। भृतिश्च कर्मकरेभ्य आनत्यर्थं गृह्यते। तस्मादपि परिक्रयार्थं ऋत्विग्भ्यो दानमिति॥

## नैष्कर्तृकेण संस्तवाच्च॥ २८॥ (यु० ५)

नैष्कर्तृकेण च संस्तवो भवति, यथा वै दारुहारो नैष्कर्तृको निष्कर्त्तनभृतः कर्म्मयोगे वर्त्तते, एवं वा एते यज्ञस्य ऋत्विजः इति। नैष्कर्तृको दारुहारः, यथाऽसौ, एवम् ऋत्विज इति ब्रुवन् परिक्रयार्थं दानं दर्शयति॥ १०। २। ८ अ०॥

---

ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम्।

## शेषभक्षाश्च तद्वत्॥ २९॥ (पू०)

सन्ति शेषभक्षा ज्योतिष्टोमे दर्शपूर्णमासयोश्च, यथा वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च, तथा इडा-प्राशित्रचतुर्द्धाकरण शंयुवाककालाः। तेषु संशयः, किं ते परिक्रयार्थाः, उत न इति। किं प्राप्तम्?। शेषभक्षाश्च तद्वत् भवितुमर्हन्ति, यद्वत् दक्षिणादानम्। प्रीतिं हि करोति भक्षणं, प्रीत्या चानमन्ति। तस्मात् परिक्रयार्थाः शेषभक्षा इति।

## संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति, न परिक्रयार्थं भक्षणं, द्रव्यसंस्कारार्थम् इति। कुतः?। यज्ञार्थेन हि द्रव्यमुत्पन्नं प्रयोजनवत्, यदि तस्य संस्कारार्थं भक्षणं, ततस्तदपि प्रयोजनवत्। दक्षिणार्द्धमभ्याक्षावद्यति इत्येवमादि च एकदेशवचनं प्रकृतशेषापेक्षं भवति, न द्रव्यस्योत्पादकं, तस्मात् द्रव्यस्य भक्षणमुच्यते, न भक्षणार्थं द्रव्यमुपादीयते, प्रकृतस्य च भक्षणम्। तस्मात् संस्कारार्थमिति गम्यते।

## शेषे च समत्वात् ॥ ३१ ॥ (यु०१)

अपि च यच्छेषं द्रव्यं, तत् देवतायै सङ्कल्पितं यजमानेन न स्वयमुपयोक्तव्यम् इति। तस्मान्न तस्योपयोक्तुम् ऋत्विज ईशते, नो खल्वपि यजमानः। साम्यमत्र यजमानस्य ऋत्विग्भिः, परिक्रीणानश्च स्वीकुर्य्यात् द्रव्यं, तत्रास्य देवतार्थः सङ्कल्प एव न अवकल्पते। तस्मादपि न परिक्रयार्थं भक्षणम् इति।

## स्वामिनि च दर्शनात् तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥ (यु०२)

स्वामिनि च भक्षणं दृश्यते, यजमानपञ्चमाः समुपहूता इडां भक्षयन्ति इति। यजमानस्य असंशयम् अपरिक्रयः, तत्सामान्यादितरेषाम् अपि न परिक्रयः। कथम्?। एवं सति, नैव विज्ञायते, इडाभक्षणेन यजमानपञ्चमाः

परिक्रीयन्त इति। किं तत् सामान्यम्?। द्वितीया विभक्तिः। तस्मादपि न परिक्रयार्थं भक्षणमिति।

## तथा चान्यार्थदर्शनम् ॥ ३३ ॥ (यु० ३)

एवम् अन्यार्थदर्शनम् इदमुपपन्नं भवति, कुण्डपायिनामयने अलसकैश्चमसैः सोमान् भक्षयन्ति इति प्राप्ते भक्षे विशेषः श्रूयते, अलसकैः इति। एवं सत्त्रेषु भक्षणं दृश्यते, तत्परिक्रयार्थत्वे न अवकल्पते। तस्मादपि न परिक्रयार्थं भक्षणमिति ॥ (१०।२।८ अ०) ॥

---

सर्वे ऋत्विग्वरणाभावाधिकरणम्।

## वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् ॥ ३४ ॥

सन्ति द्वादशाहप्रभृतीनि सत्राणि, द्वादशाहमृद्धिकामा उपेयुः इत्येवमादीनि। अस्ति च प्रकृतौ ज्योतिष्टोमे वरणम्, अग्निर्मे होता स मे होता होतस्त्वं मे होतासीति होतारम् इत्येवमादीति। तत् सत्त्रेषु सन्दिह्यते, किं कर्त्तव्यं न? इति। तत एतत् तावन्नः परीक्ष्यं, किं प्रकृतौ धर्ममात्रं वरणम्, उत परिक्रयार्थम्? इति। यदि धर्ममात्रं, प्रकृतौ सत्त्रेषु कर्त्तव्यम्। अथ परिक्रयार्थं, न कर्त्तव्यमिति। किं प्राप्तम्?। मन्त्रवन्नियमवच्चेति कृत्वा धर्ममात्रम्। तस्मात् सत्त्रेषु कर्त्तव्यम् इति।

एवं प्राप्ते ब्रूमः, वरणमृत्विजां सत्रेषु न स्यात्, न कर्त्तव्यमिति । स्वार्थं हि तेषां कर्म, न च कश्चिदात्मानं वृणीते । प्रकृतौ चानमनार्थं वरणं दृष्टप्रयोजनमिति न शक्यमदृष्टं कल्पयितुम् । तस्मात् सत्रेषु वरणं न स्यादिति । (१० । २ । १० अ०)

---

सत्रे परिक्रयाभावाधिकरणम् ।

## परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥ (नि०)

परिक्रयश्च प्रकृतौ ज्योतिष्टोमे आम्नातः, गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च अवयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा इति । तत् दाक्षिण्यं सत्रे चोदकेन प्राप्तं किं कर्त्तव्यं, निवृत्तं वा ? इति संशयः । किं प्राप्तम् ?, कर्त्तव्यः परिक्रयश्चोदकानुग्रहाय । अपि च तत्र गवादयः प्रतिषिध्यन्ते, न ह्यत्र गौर्दीयते न वासो न हिरण्यम् इति, तत् सति परिक्रयेऽवकल्पते ।

एवं प्राप्ते ब्रूमः, परिक्रयश्च तादर्थ्यात् इति, परिक्रयश्च न कर्त्तव्यः । उक्तमधस्ताद्वरणं सत्रेषु न कर्त्तव्यमिति, परिक्रयश्चेति च शब्देनान्वादेशः क्रियते, न कर्त्तव्यः परिक्रयः । कुतः ? । आत्मार्थत्वात्, न कश्चिदात्मानं परिक्रीणीते इति ।

## प्रतिषेधश्च कर्मवत् ॥ ३६ ॥ (आ०)

प्राप्तौ सत्यां प्रतिषेधोऽवकल्पते इति यदुक्तं, तत् परिहर्त्तव्यम्,

स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥ (पू०)

प्रतिषेध उपपद्यत इत्यर्थः। कस्य ?। प्रासर्पिकस्य दानस्य इति। धर्ममात्रं हि तत् सत्रेषु चोदकप्राप्तं, तन्निवर्त्तते। तस्मादुपपन्नः प्रतिषेध इति।

न दक्षिणाशब्दात् तस्मान्नित्यानुवादः स्यात् ॥ ३८ ॥ (सि०)

नायं प्रासर्पिकस्य प्रतिषेधः। कुतः ?। दक्षिणाशब्दात् दक्षिणाशब्दो ह्यत्र भवति, अदक्षिणानि सत्राण्याहुः न हि अत्र गौर्दीयते न वासो न हिरण्यम् इति। दक्षिणाशब्दश्च परिक्रयार्थो भवति। तत्र हि श्रूयते, गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा इति, ऋत्विग्दानं दक्षिणा, न प्रासर्पिकम्। तस्यैवासौ प्रतिषेधो न प्रासर्पिकस्य। तस्मान्नित्यप्राप्तस्यैवानुवादोऽसौ न सत्रेषु दक्षिणा इति। (१०।२।११ अ०)।

---

उदवसानीयस्य सत्रानङ्गतया तत्र दानस्य परिक्रयार्थताधिकरणम्।

उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥ (पू०)

अस्ति उदवसानीयः, सत्रादुदवसाय पृष्ठशमनीयेन

ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन् इति। तत्रैषोऽर्थः सांशयिकः, दक्षिणादानं धर्म्ममात्रम्, उत परिक्रयार्थम्? इति? तथा इदमपरं द्वैतं, किं सत्राङ्गमुदवसानीयः, न? इति। यदि सत्राङ्गं, धर्ममात्रं दानम्। अथ न सत्राङ्गं, परिक्रयार्थम् इति। किं प्राप्तम्? सत्राङ्गम् इति। कुतः?। सत्रप्रकरणात्, सत्रं परिसमाप्य कर्त्तव्यमिति श्रूयते, सत्रप्रकरणात् सत्रं लक्षयित्वेति गम्यते। उदवसानीयश्च सत्रस्य विधीयते इति। सत्रस्य च फलार्थत्वान्नोदवसानीयार्थता गम्यते। न च सत्रोदवसानकाले उदवसानीयः, लक्षणा हि तथा स्यात्। अनङ्गत्वे च फलं कल्पयितव्यं, तस्मादानन्तर्य्यादिकवाक्यतासम्बन्धाच्च सत्राङ्गमुदवसानीयः, सत्रं यथोक्तं परिसमाप्य न सन्तोष्टव्यं, न तावत् कृत्वा कृतिता मन्तव्या, इदमपरं तस्याङ्गं कर्त्तव्यमुदवसानीय इत्येवमभिसम्बन्धः क्रियते। यथा अग्निं चित्वा सौत्रामण्या यजेत वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत इति। तस्मात् सत्राङ्गम्। एवं चेत् साङ्गस्य सत्रस्य स्वयंकर्तृकत्वात् धर्ममात्रं, तत्र दानम्। सत्रधर्मा उदवसानीय इति।

न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वाच्च ॥ ४० ॥

( सि० )

तुशब्दः पक्षं व्यावर्त्तयति। नैतदेवं धर्ममात्रमत्र दानम् इति, किन्तर्हि, परिक्रयार्थम् इति। कुतः?। नैतत् सत्राङ्गं विभक्तचोदितत्वात् नैतद् बृहस्पतिसवेन

सौत्रामण्या च तुल्यं, तत्रैवं श्रूयते, यथोक्ताङ्गं कृत्वा नैव सन्तोष्टव्यमिदमपरं तस्य कर्त्तव्यम् इति। इह पुनः सत्रमुत्सृज्य उदवसानीयः कर्त्तव्य इति, सत्रादुदवसाय उत्थायेत्यर्थः। तत्रान्योऽर्थः क्त्वाशब्दस्य, यथोदितं निर्वर्त्त्य न प्रहातव्यम्। उत्पूर्वस्य अवपूर्वस्य स्यतेः प्रहायेत्यर्थः। प्रहाणे इह क्त्वाशब्दस्तत्र पुनरनुष्ठानानन्तर्य्ये। तस्माद् विभक्तचोदितत्वान्न सत्राङ्गं, न च सत्रप्रकृतिकम्। तस्मादत्र दानं परिक्रयार्थमिति॥ (१०।२।१२ अ०)॥

——

उदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम्।

## तेषां तु वचनात् द्वियज्ञवत् सहप्रयोगः स्यात्॥ ४१॥ (पू०)

इदमेवोदाहरणं, सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन् इति। तत्रैषोऽर्थः समधिगतः, न सत्राङ्गं पृष्ठशमनीयः इति। अथेदानीमिदं सन्दिह्यते, किं संहत्य तैस्तत् कर्त्तव्यम्, उत एकैकेन? इति। किं प्राप्तम्? संहत्य इति। कुतः?। उपादेयत्वेन यागे चोद्यमानस्य बहुत्वस्य श्रवणात्। स चेदेकेन क्रियेत, बहुत्वसंयुक्तः प्रयोगो न स्यात् द्वियज्ञवत्, यथा एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम् इति, यद्यपि राजपुरोहितौ लक्षणत्वेन श्रूयेते एवमपि यजेयाताम् इति याग उपादेयत्वेन, यागे च एतत् कर्तृद्वित्वं

श्रूयते, यजेयाताम् इति। तद्वत् पृष्ठशमनीयेन यजेरन् इति। तस्मात् संहत्य पृष्ठशमनीयं प्रयुञ्जीरन् इति।

एवं स्थितं तावदपर्य्यवसितम्, अन्तराचिन्तान्तरस्य सूत्रं तावद्वर्णयिष्यामः,

---

उदवसानीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम्। अन्तरा-चिन्ता॥

## तत्रान्यानृत्विजो वृणीरन्॥ ४२॥

अस्मिन्नेवोदाहरणे एषोऽर्थः सांशयिकः, किं त एव सत्रिण ऋत्विजः, उतान्ये वा वरीतव्याः? इति। किं प्राप्तम्? त एव। कुतः?। समानकर्तृकता हि गम्यते, उदवसाय यजेरन् इति। य एव उदवसातारस्त एव यष्टार इति भवति प्रत्ययः। यथैव वचनप्रामाण्याच्चोदकप्राप्तामेककर्तृकतां बाधित्वा बहुकर्तृकता भवति, एवं चोदकप्राप्तानन्यानृत्विजो बाधित्वा वचनप्रामाण्यात् त एव भवितुमर्हन्ति इति।

एवं प्राप्ते ब्रूमः, तत्रान्यानृत्विजो वृणीरन् इति। न हि पृष्ठशमनीये ये सत्रादुदवसातारस्ते कर्त्तारो विधीयन्ते, न तेषामुपादेयत्वेन चोदनेत्युक्तं, न चाविहितमङ्गं भवति, न चानङ्गे हीने विगुणता काचित् भवति। सन्ति च चोदकप्राप्ता अन्ये ऋत्विजः। अपि चात्र यावति कर्त्रभिप्रायं क्रियाफलं, तावति त एव कर्त्तारः, तदेतदुपग्रहविशेषादवगम्यते। न च ऋत्विजः प्रति

यागस्य कर्त्रभिप्रायं क्रियाफलम्। तस्मान्नार्त्विज्य एव कर्त्तारः, प्रधानयागे तावत्कर्तॄन् अवगच्छामः। ऋत्विजः पुनरन्ये वरीतव्या इति ॥ (१०।२।१२ अ०) ॥

**एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥ (पू०)**

स्थितादुत्तरम्। तुशब्दः पक्षं व्यावर्त्तयति। न पृथग्गमनीयं संहत्य प्रयुञ्जीरन्, किन्तर्हि एकैकशः। कुतः ?। अविप्रतिषेधात्, उदवसानेन हि पुरुषा लक्ष्यन्ते ये सत्रादुदवस्यन्ति इति। तत्र चैकोऽप्युदवसाता भवति, ये चोदवसानलक्षितास्तेषां याग इति एकैकस्यापि यागो विहितो भवति, न च केनचित् प्रतिषिध्यते, तस्मादेकैकोऽपि यजेत। ननु बहूनां प्रयोग उच्यते, तेनैकैकस्य न भवति। नैष दोषः, एकैकस्यापि न वार्य्यते, तेन चोदकसामर्थ्यादेकैकश एव यजेत इति।

आह, बहुसंयुक्तः प्रयोग एकैकेन न शक्यते कर्त्तुम् इति। एवमपि न दोषः, नात्र बहुवचनं विधीयते, ये सत्रादुदवसातारस्तेषामेव यागः, ते च बहवः, तेषां बहूनामत्र प्राप्तानाम् अयमनुवादः। एकैकश्येनापि च ते उदवसातारः। तस्मात् तेषां तथैव यागो भविष्यति, यथैवोदवसाने तेषामसंहतानां बहुवचनं, एवं यागेऽपि असंहतानामेव भविष्यति।

अत्रोच्यते, न बहुवचनमनुवादः, अप्राप्तत्वात्, न हि बहुवचनं यागे प्राप्तं यदनूद्येत। नन्विदानीमेवोक्तमुद-

वसातॄणां यागस्ते च बहव इति। उच्यते, बहुत्वं तेषा-मुदवसाने, न यागे। ननु वाक्यसामर्थ्याद्यागेऽपि भवि-ष्यति। नेत्याह, परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति, ततो वाक्यं भवति, अयञ्च यागः प्रागेव बहुवचनेन सम्बन्धो न तस्यामवस्थायां वाक्येनोदवसातारः प्राप्ताः। उपादत्ते तु तदा बहुत्वं, ततो बहुवचनसंयुक्तः पदान्तर-गतान् उदवसातॄनपेक्षते, तस्माद् बहुत्वसंयुक्तः प्रयोगः कर्त्तव्यः, यथा द्वियज्ञे सत्रेषु च इति।

आह,नैतदेवं, यत्र केनचित्प्रकारेणानुवादः सम्भवति तत्रानुवादो वा स्याद् विधिर्वेति। यद्यप्यपूर्वत्वादन्यत्र विधिर्न्याय्यानुवादात्, तथाप्यत्रानुवाद एव बहुत्वस्य भवितुमर्हति, तथा हि यागसम्बन्धो बहूनां न क्रतो भवति, तत्र दृष्टमेव प्रयोजनं, इतरस्मिन् पक्षे बहुत्वस्य यागसम्बन्धेऽदृष्टं कल्पनीयं स्यात्, तस्मादनुवाद इति। आह, द्वियज्ञेऽपि तर्ह्येवमेव प्राप्नोति सत्रेषु च इति। अत्रोच्यते, अस्त्यत्र विशेषः उदवसाय यजेरन् इति, राज-पुरोहितौ यजेयातां, ऋद्धिकामाः सत्रमासीरन् इति। यत्र क्रान्तः शब्दो भवति तत्र द्वौ प्रयोगौ गम्येते, समा-नाश्च कर्त्तारः श्रवणादेव, तत्रोत्तरप्रयोगवचनेन केवलो धात्वर्थो विधीयते, तदाश्रयः प्रयोगः, कर्त्तारश्च, तद्गता च सङ्ख्या, एवं सर्वमेतत्, धात्वर्थे विधीयमाने प्राप्तमेवा-नूद्यते द्वियज्ञे सत्रेषु च धात्वर्थो विधीयते, प्रयोगोऽपि, कर्त्तारः, तद्गता च सङ्ख्येति सर्वमेव तत्राप्राप्तम्। न हि राजपुरोहिताविव्येष शक्नोति प्रयोगं वदितुं, तत्र च

यागस्य कर्त्रभिप्रायं क्रियाफलम्। तस्मान्नार्त्विज्य एव कर्त्तारः, प्रधानयागे तावत्कर्तॄन् अवगच्छामः। ऋत्विजः पुनरन्ये वरीतव्या इति ॥ (१०।२।१२ अ०) ॥

## एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥ (पू०)

स्थितादुत्तरम्। तुशब्दः पक्षं व्यावर्त्तयति। न पृष्ठशमनीयं संहत्य प्रयुञ्जीरन्, किन्तर्हि एकैकशः। कुतः ?। अविप्रतिषेधात्, उदवसानेन हि पुरुषा लक्ष्यन्ते ये सत्रादुदवस्यन्ति इति। तत्र चैकोऽप्युदवसाता भवति, ये चोदवसानलक्षितास्तेषां याग इति एकैकस्यापि यागो विहितो भवति, न च केनचित् प्रतिषिध्यते, तस्मादेकैकोऽपि यजेत। ननु बहूनां प्रयोग उच्यते, तेनैकैकस्य न भवति। नैष दोषः, एकैकस्यापि न वार्य्यते, तेन चोदकसामर्थ्यादेकैकश एव यजेत इति।

आह, बहुसंयुक्तः प्रयोग एकैकेन न शक्यते कर्त्तुम् इति। एवमपि न दोषः, नात्र बहुवचनं विधीयते, ये सत्रादुदवसातारस्तेषामेव यागः, ते च बहवः, तेषां बहूनामत्र प्राप्तानाम् अयमनुवादः। एकैकश्येनापि च ते उदवसातारः। तस्मात् तेषां तथैव यागो भविष्यति, यथैवोदवसाने तेषामसंहतानां बहुवचनं, एवं यागेऽपि असंहतानामेव भविष्यति।

अत्रोच्यते, न बहुवचनमनुवादः, अप्राप्तत्वात्, न हि बहुवचनं यागे प्राप्तं यदनूद्येत। नन्विदानीमेवोक्तमुद-

वसातॄणां यागस्ते च बहव इति। उच्यते, बहुत्वं तेषा-मुद्‌वसाने, न यागे। ननु वाक्यसामर्थ्याद्यागेऽपि भवि-ष्यति। नेत्याह, परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति, ततो वाक्यं भवति, अयञ्च यागः प्रागेव बहुवचनेन सम्बन्धो न तस्यामवस्थायां वाक्येनोद्‌वसातारः प्राप्ताः। उपादत्ते तु तदा बहुत्वं, ततो बहुवचनसंयुक्तः पदान्तर-गतान् उद्‌वसातॄनपेक्षते, तस्माद् बहुत्वसंयुक्तः प्रयोगः कर्त्तव्यः, यथा द्वियज्ञे सत्रेषु च इति।

आह,नैतदेवं, यत्र केनचित्प्रकारेणानुवादः सम्भवति तत्रानुवादो वा स्याद् विधिर्वेति। यद्यप्यपूर्वत्वादन्यत्र विधिर्न्याय्योऽननुवादात्, तथाप्यत्रानुवाद एव बहुत्वस्य भवितुमर्हति, तथा हि यागसम्बन्धो बहूनां न कृतो भवति, तत्र दृष्टमेव प्रयोजनं, इतरस्मिन् पक्षे बहुत्वस्य यागसम्बन्धेऽदृष्टं कल्पनीयं स्यात्, तस्मादनुवाद इति। आह, द्वियज्ञेऽपि तर्ह्येवमेव प्राप्नोति सत्रेषु च इति। अत्रोच्यते, अस्त्यत्र विशेषः उद्‌वसाय यजेरन् इति, राज-पुरोहितौ यजेयातां, ऋद्धिकामाः सत्रमासीरन् इति। यत्र क्रान्तः शब्दो भवति तत्र द्वौ प्रयोगौ गम्येते, समा-नाश्च कर्त्तारः श्रवणादेव, तत्रोत्तरप्रयोगवचनेन केवलो धात्वर्थो विधीयते, तदाश्रयः प्रयोगः, कर्त्तारश्च, तद्गता च सङ्ख्या, एवं सर्वमेतत्, धात्वर्थे विधीयमाने प्राप्तमेवा-नूद्यते द्वियज्ञे सत्रेषु च धात्वर्थो विधीयते, प्रयोगोऽपि, कर्त्तारः, तद्गता च सङ्ख्येति सर्वमेव तत्राप्राप्तम्। न हि राजपुरोहिताविरोध शक्नोति प्रयोगं वदितुं, तत्र च

यागस्य कर्त्रभिप्रायं क्रियाफलम्। तस्मान्नार्त्विज्यं त एव कर्त्तारः, प्रधानयागे तावत्कर्तृन् अवगच्छामः। ऋत्विजः पुनरन्ये वरीतव्या इति॥ (१०।२।१२ अ०)॥

## एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात्॥ ४३॥ (पू०)

स्थितादुत्तरम्। तुशब्दः पक्षं व्यावर्त्तयति। न पृष्ठशमनीयं संहत्य प्रयुञ्जीरन्, किन्तर्हि एकैकशः। कुतः?। अविप्रतिषेधात्, उदवसानेन हि पुरुषा लक्ष्यन्ते ये सत्रादुदवस्यन्ति इति। तत्र चैकोऽप्युदवसाता भवति, ये चोदवसानलक्षितास्तेषां याग इति एकैकस्यापि यागो विहितो भवति, न च केनचित् प्रतिषिध्यते, तस्मादेकैकोऽपि यजेत। ननु बहूनां प्रयोग उच्यते, तेनैकैकस्य न भवति। नैष दोषः, एकैकस्यापि न वार्य्यते, तेन चोदकसामर्थ्यादेकैकश एव यजेत इति।

आह, बहुसंयुक्तः प्रयोग एकैकेन न शक्यते कर्त्तुम् इति। एवमपि न दोषः, नात्र बहुवचनं विधीयते, ये सत्रादुदवसातारस्तेषामेव यागः, ते च बहवः, तेषां बहूनामत्र प्राप्तानाम् अयमनुवादः। एकैकश्येनापि च ते उदवसातारः। तस्मात् तेषां तथैव यागो भविष्यति, यथैवोदवसाने तेषामसंहतानां बहुवचनं, एवं यागेऽपि असंहतानामेव भविष्यति।

अत्रोच्यते, न बहुवचनमनुवादः, अप्राप्तत्वात्, न हि बहुवचनं यागे प्राप्तं यदनूद्येत। नन्विदानीमेवोक्तमुद-

वसातॄणां यागस्ते च बह्व इति। उच्यते, बहुत्वं तेषा-मुदवसाने, न यागे। ननु वाक्यसामर्थ्याद्यागेऽपि भवि-ष्यति। नेत्याह, परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति, ततो वाक्यं भवति, अयञ्च यागः प्रागेव बहुवचनेन सम्बन्धो न तस्यामवस्थायां वाक्येनोदवसातारः प्राप्ताः। उपादत्ते तु तदा बहुत्वं, ततो बहुवचनसंयुक्तः पदान्तर-गतान् उदवसातॄनपेक्षते, तस्माद् बहुत्वसंयुक्तः प्रयोगः कर्त्तव्यः, यथा द्वियज्ञे सत्रेषु च इति।

आह,नैतदेवं, यत्र केनचित्प्रकारेणानुवादः सम्भवति तत्रानुवादो वा स्याद् विधिर्वेति। यद्यप्यपूर्वत्वादन्यत्र विधिर्न्याय्यानुवादात्, तथाप्यत्रानुवाद एव बहुत्वस्य भवितुमर्हति, तथा हि यागसम्बन्धो बहूनां न कृतो भवति, तत्र दृष्टमेव प्रयोजनं, इतरस्मिन् पक्षे बहुत्वस्य यागसम्बन्धेऽदृष्टं कल्पनीयं स्यात्, तस्मादनुवाद इति। आह, द्वियज्ञेऽपि तर्ह्येवमेव प्राप्नोति सत्रेषु च इति। अत्रोच्यते, अस्त्यत्र विशेषः उदवसाय यजेरन् इति, राज-पुरोहितौ यजेयातां, ऋद्धिकामाः सत्रमासीरन् इति। यत्र क्रान्तः शब्दो भवति तत्र द्वौ प्रयोगौ गम्येते, समा-नाश्च कर्त्तारः श्रवणादेव, तत्रोत्तरप्रयोगवचनेन केवलो धात्वर्थो विधीयते, तदाश्रयः प्रयोगः, कर्त्तारश्च, तद्गता च सङ्ख्या, एवं सर्वमेतत्, धात्वर्थे विधीयमाने प्राप्तमेवा-नूद्यते द्वियज्ञे सत्रेषु च धात्वर्थो विधीयते, प्रयोगोऽपि, कर्त्तारः, तद्गता च सङ्ख्येति सर्वमेव तत्राप्राप्तम्। न हि राजपुरोहिताविज्येषु शक्नोति प्रयोगं वदितुं, तत्र च

कर्त्तव्यं, तद्गताञ्च सङ्ख्याम्। तथा ऋद्धिकामाः इति। तस्मादेवंजतीयकेषु सङ्ख्या उपादेयत्वेन श्रूयते। अतो द्वियज्ञादिषु नानुवादस्तेषु बहुत्वसंयुक्तः प्रयोगः कर्त्तव्यः, इह तु न तथा। तस्मादेकैकः पृष्ठशमनीयेन यजेत इति। (१०।२।१४ अ०)।

---

कामेष्टौ दानस्यादृष्टार्थताधिकरणम्।

## कामेष्टौ च दानशब्दात्॥ ४४ ॥ (पू०)

अस्ति सारस्वते सत्रे कामेष्टिः, प्लाक्षं प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं पुरोडाशं निर्वपति तस्यामश्वां पुरुषीं च धेनुके दत्वा प्रति यमुनामवभृथमभ्यवयन्ति इति। तत्र संशयः, किं परिक्रयार्थं दानम्, उत धर्ममात्रम्? इति। पृष्ठशमनीये च सत्रस्यानङ्गभूते परिक्रयार्थं दानमित्युक्तम्, अथेदानीमङ्गभूतायां कामेष्टौ चिन्त्यते। तत्र किं तावत् प्राप्तम्?, यथा पृष्ठशमनीये परिक्रयार्थम्, एवमिहापीति चशब्देनान्वादिश्यते। कुतः?। दानशब्दात्, दानशब्दो भवति, तस्यामश्वां पुरुषीं च धेनुके दत्वा इति। दानशब्दः कर्मकरेषु सत्सु परिक्रयार्थं इत्युक्तम्।

न चैतत्सत्रम्, सत्रस्याङ्गभूतमेतत्। प्रकरणाच्च सत्रस्य स्वयंकर्तृकता, नाङ्गानां, तस्योदकप्राप्तैः ऋत्विग्भिः सगुणं सत् सत्रस्योपकारकं भवति। अन्यैरृत्विग्भिर्विना

विगुणं सत्रस्य नोपकुर्य्यात्। तस्मादत्र दानं परिक्रयार्थं इति।

## वचनं वा सत्रत्वात् ॥ ४५ ॥ (सि०)

वाशब्दात् पक्षो व्यावर्त्त्यते, नात्र परिक्रयार्थं दानं धर्म्ममात्रम् इति। कुतः?। सत्रत्वात्, सत्रे हि आनतिर्निवृत्ता। आह, नैतत् सत्रं सत्राङ्गमित्युक्तम्। उच्यते, न सत्रं, सत्राङ्गं तु सत्रमध्यपतितं, सत्रस्य च साङ्गस्य स्वयंकर्त्तृकता, तस्यां क्रियमाणायां सिद्धा अस्या इष्टेः कर्त्तारः। तत्र आनत्या न प्रयोजनं, श्रूयमाणं तु दानं धर्म्ममात्रं भवितुमर्हति इति। (१०।२।१५ अ०)।

—

दर्शपूर्णमासयोर्हैव्याय दानस्याहृष्टार्थताधिकरणम्।

## हव्ये चाचोदनाद्दक्षिणापनयः स्यात् ॥ ४६ ॥

दर्शपूर्णमासयोरिदमाम्नायते, यदि पत्नीः संयाजयन् कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत् तस्यैकहायनो गौर्दक्षिणा तं स हव्याय दद्यात् इति। तत्र संशयः, किं परिक्रयार्थम् एकहायनस्य दानम्; उत धर्ममात्रम्? इति। किं प्राप्तं, दक्षिणाशब्दात् परिक्रयार्थमिति, परिक्रयार्थे हि दक्षिणाशब्दो भवति।

एवं प्राप्ते ब्रूमः, हव्ये च धर्ममात्रं दानम् इति चशब्देन

अन्वाहिश्यति । कुतः ? । अचोदनात् द्वेष्यस्य ऋत्विजः, न हि द्वेष्य ऋत्विग् भवति, ऋत्विगाचार्य्यौ नातिचरितव्यौ इति । यदा परिक्रेतव्येनैव कर्त्रा प्रयोजनं नास्ति, तदा किं दक्षिणाशब्दः करिष्यति ? । अपि च परिक्रयार्थे सति दक्षिणाशब्दः स्यात् चोदकप्राप्तोऽन्वाहार्य्योऽपनीयेत, तत्र चोदको बाध्येत, तस्मात् धर्ममात्रमेकहायनस्य दानमन्त्विजे दातव्यम् इति ॥ ( १० । २ । १६ अ० ) ॥

---

जीवतामस्थियज्ञाधिकरणम् ।

## अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नां ॥ ४७ ॥ (सि०)

इदमाम्नायते, यदि सन्दीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिने अस्थीन्युपनह्य योऽस्य नेदिष्ठस्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततः संवत्सरे अस्थीनि याजयेत् इति । योऽयं संवत्सरे यज्ञः, स सन्दिह्यते, किमस्थ्नामुत जीवताम् ? इति, किन्तावत्प्राप्तम् ?, सामानाधिकरण्यादस्थ्नामिति । किं सामानाधिकरण्यम् ? । याजयतेरस्थीनि कर्मभूतानि ।

ननु अस्थीन्यचेतनानि न शक्नुवन्ति स्वयं तन्त्वयितुं, कथं तानि क्रियायां कर्त्तॄणि भवेयुः ? इति । उच्यते, प्रयोज्यता तेषां श्रूयते, ततो अन्ये प्रयोजयितारः, ते एतानि क्रियां कारयिष्यन्ति इति ।

आह, न हि अकुर्वति कारयतीति भवति, कर्त्तुः हि

प्रयोजको हेतुः, न चैतानि कार्त्स्न्येन क्रियामुपसंहर्त्तुं शक्नुवन्ति इति। उच्यते, वचनप्रामाण्याद् यावत् यजमानं कारयितुं शक्ष्यन्ति, तावत् कारयिष्यन्ति, औदुम्बरीसम्मानं शुक्रान्वारम्भणमित्येवमादीनि।

आह, प्रधानमेव न शक्नुवन्ति नाङ्गानि कुर्वन्ति, याजमानानि भवन्ति इति। अत्रोच्यते, वचनसामर्थ्यात् तच्छवद्रव्यं ऋत्विजः प्रतिग्रहीष्यन्ति तद्दक्षिणास्तत्परिक्रीताः तत् पक्ष्यन्ति ईदृशो द्रव्यत्यागो वाचनिको भविष्यति इति। आह, एवं वर्ण्यमाने याजयितॄणामेव कर्तृत्वमुपदिष्टं भवति नास्थ्नाम् इति। उच्यते, यष्टॄणामेवैतेन प्रकारेण कर्तृत्वमुपदिश्यते, न ह्यकर्त्तरि कारयतीति भवति, हेतुकर्तृत्वं चास्थ्नां यागे सति प्राप्तमेवानूद्यते, यथा, ग्रामकामं संयाजयेत् इति ग्रामकामो यजेत इति विधीयते, हेतुत्वं च प्राप्तानुवादमात्रं, तच्च दर्शयति, स्रोत्रे अस्थिकुम्भमुपदधाति इति। अस्थ्नामेव यजमानत्वं दृश्यते। तस्माद् अस्थ्नां यज्ञो न जीवताम्।

इति प्राप्ते ब्रूमः, अस्थियज्ञः इतरेषां जीवतां स्यात्, तेषामविप्रतिषिद्धो यज्ञः, अस्थ्नां विप्रतिषिध्यते, त्यागो नाम मनसा क्रियते, न चास्थ्नाम् अस्ति मनः। यदुक्तं, ऋत्विजः शवद्रव्यं दक्षिणां प्रतिगृह्य तत्परिक्रीताः त्यागं कुर्वन्ति इति, ईदृशो वाचनिकस्त्यागो भवति इति। नैतदेवं, न हि यजेतेत्युक्ते अशक्नुवत्सु वचनप्रामाण्यादन्यो यज्यर्थो भवति, यागं कुर्वीत इति हि तद्वचनं, नान्यो यज्यर्थ इति। न च वचनप्रामाण्यादेतद्भवति, यच्छवद्रव्यं तत् गृह्यते, न हि

तद् अस्थिमिद्दत्तं भवति, न चासति दाने परिक्रयः। न च गौणोऽर्थो विधिशब्दादवगम्यते, अन्येन हि प्रमाणेन परिच्छिन्नेऽर्थे गौणः शब्दः सम्बध्यते, यथा, गौरनुबन्ध्यः इति गोजातिविशिष्टः पशुरनुबध्यते, न वाहीकः, गौरयं वाहीक इति तु संवादे वाहीके गौणः शब्दः प्रवर्त्तते। तस्मान्न त्यागविधाने अन्यो यज्यर्थः स्यात्। न चास्थां द्रव्यं स्वं सम्भवति, यत् ऋत्विजो गृहीत्वा वयमनेन परिक्रीता इति मन्येरन्। तस्मान्न कथञ्चन अस्थीनि यष्टॄणि भवन्ति अतो न विवक्षितं सामानाधिकरण्यम् इति।

आह, सम्बन्धवचनादनर्थकं तर्हीदं वाक्यम्। नेति ब्रूमः, न हि गम्यमाने अर्थे अनर्थकं भवति, ततः संवत्सरे याजयेदित्येतावतो वाक्यात् कश्चिदर्थोऽवगम्यते, स इह विवक्षितः, अस्थीनि याजयेदित्येष सम्बन्धो न विधीयते। आह, किमस्थीनीति प्रमादपाठः?। न च प्रमादपाठ इति ब्रूमः, न हि स एवाप्रमादपाठो यो विधानार्थः मुख्यार्थश्च, अनुवदन्नप्यर्थं लक्षणयापि ब्रुवन् वाक्ये समवायं गच्छति, न च प्रमादपाठो भवति, तत्र, अस्थीनीत्येष शब्दो विदधत् स्वमर्थं मुख्यया वृत्त्या ब्रुवन् वाक्ये न समवैति, अनुवदंस्तु लक्षणया समवैष्यति। ततः संवत्सरे याजयेत् इति जीवतः प्रकृतान् वक्ष्यति। तत्रास्थिशब्दो वर्त्तिष्यते लक्षणया, ततः संवत्सरेऽस्थिमतो याजयेदिति। के तेऽस्थिमन्तः?। ये तेन सह यष्टुं प्रक्रान्ताः। तस्माद् यस्य तानि अस्थीनि तैरस्थिभिः स शक्यते लक्षयितुं, तस्माज्जीवतां यज्ञ इति।

यावदुक्तमुपयोगः स्यात्॥ ४८॥ (आ० नि०)

अथ यदुक्तमस्थ्नां याजमानं दर्शयति, स्तोत्रेऽस्थिकुम्भमुपदधाति इति। नैतद् याजमानं, न हि अस्थीनि यजन्ते इत्युक्तम्, अतो वचनप्रामाण्यादेतत् कर्म याजमानस्वरूपं भवति, यावति वचनं, तावत्येव त्वद् भवितुमर्हति, न तत्, सर्वं याजमानं शक्नोति लक्षयितुं, तस्मा, ज्जीवतामेव यज्ञ इति। (१०।२।१७ अ०)।

---

अस्थियज्ञे अस्थ्नां जपाद्यननुष्ठानाधिकरणम्। औदुम्बरीमानशृङ्गस्याननुष्ठानाधिकरणञ्च। (कृत्वा चिन्ता)।

यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात्॥ ४९॥

इह जपसंस्कारमिष्टिश्च चिन्त्यते। तत्र सूत्रेतराद्धेन जपसंस्कारं चिन्त्यते, शेषेणापीष्टिः। जपाः यत्र जपति इति चोदनाः, संस्काराः केशश्मश्रु वपति इत्येवमादयः। किम् अस्थ्नां जपसंस्कारं कर्त्तव्यं न? इति संशयः। ननु नैवास्थ्नां यज्ञो जीवतामसावित्युक्तम्। अत्रोच्यते, कृत्वा चिन्तेषा। अस्थ्नामिति कृत्वा चिन्त्यते, अनेन प्रकारेण पूर्वाधिकरणस्य प्रयोजनं विचार्य्यते, यदि अस्थ्नां यज्ञः स्यात्, किं जपसंस्कारं क्रियते, न? इति। किन्ता-

वत् प्राप्तम् ?, विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् इत्यनेन न्यायेन कर्त्तव्यमिति ।

एवं प्राप्ते ब्रूमः, यदि तु वचनात्तेषां अस्थ्नां यज्ञः स्यात्, तेषां जपसंस्कारं लुप्तार्थं निवर्त्तेत, न तैः शक्यं जपितुं, नापि केशश्मश्रु वप्तुं, अशक्यञ्च चोदको न प्रापयति । अत्र सूत्रोत्तरार्द्धं, येष्टि तदर्थत्वात् इति । दीक्षणीया इष्टिः कर्त्तव्या न ? इति विचारः । किं प्राप्तम् ? चोदकानुग्रहाय कर्त्तव्या ।

एवं प्राप्ते ब्रूमः, सहेष्ट्या जपसंस्कारं न कर्त्तव्यम्, इष्टिर्लुप्येत इति । कुतः ? । तदर्था, हि सा, यजमानो दीक्षां ग्रहीष्यतीति, दीक्षा च व्रतानि, नियमाश्च मानसं कर्म्म, न चैषां मनोऽस्ति, दीक्षाग्रहणार्था चेष्टिः संयोगात् ज्ञायते, आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः इति तस्मादिष्टिरपि निवर्त्तेत इति । क्रत्वर्थं तु क्रियेत गुणभूतत्वात् । (१० । २ । १८ अ० ) ।

अस्थियज्ञे एवेदं सन्दिह्यते, यजमाने न,सम्मितौदुम्बरी भवति, तथा शुक्रं यजमानोऽन्वारभते इति । अस्थ्नां यागे सति किमेवंजातीयकं कर्त्तव्यं, न ? इति । किं प्राप्तम् ?, अचेतनानामस्थ्नां सर्वक्रियासु स्वातन्त्र्यं नास्ति, तस्मात् औदुम्बरीसज्ञाने शुक्रान्वारम्भणे च नाम्नीनि कर्त्तृणि भवेयुः इति ।

एवं प्राप्ते ब्रूमः, क्रत्वर्थन्तु क्रियेत, गुणभूतत्वात्, यत् क्रत्वर्थम् एवंजातीयकं, तत् क्रियेत, गुणभूतत्वात्, गुणभूतः तत्र यजमानः, यजमानपरिमाणसम्मितया औदुम्बर्य्या

प्रयोजनं, यजमानान्वारब्धे न च शुक्रेण अचेतनेनैव च परि-मीयते, शुक्रश्च अन्वारभ्यते। तस्मादेवंजातीयकं कर्त्तव्यम् इति। (१०।२।१८ अ०)।

---

अस्थियज्ञे अस्यां काम्यकर्म्माद्यननुष्ठानाधिकरणम्। (क्त्वा चिन्ता)।

## काम्यानि तु न विद्यन्ते कामाज्ञानात् यथेतर-स्यानुच्यमानानि ॥ ५० ॥

अस्ति ज्योतिष्टोमस्तत्र श्रूयते, यदि कामयते वर्षत् पर्जन्यः इति, नीचैः सदो मिनुयात् इत्येवमादि। तदिह चोदकेन प्राप्तं काम्यं कर्त्तव्यं, न? इति सन्दिह्यते। चोदकानुग्रहाय कर्त्तव्यम् इति।

नन्वस्थीनि न किञ्चित् कामयन्ते यजमानकामनिमित्त-काश्चैवंजातीयाः पदार्थाः। अत्रोच्यते, नात्र यजमानेन कामयमानेन प्रयोजनम्, एषोऽत्रार्थो, नीचैः सदसि मीय-माने वृष्टिर्भवति इति, तद्यदि वृष्ट्या प्रयोजनं, नीचैः सदो मातव्यं, वृष्टिः प्रयोजनवती भविष्यतीति।

एवं प्राप्ते ब्रूमः, काम्यान्येवंजातीयकानि न कर्त्त-व्यानि। कुतः?। यदि यजमानो वृष्टिं कामयेत नीचैः सदसि मीयमाने वृष्टिर्भवति। यजमानफलदं हि उप-ग्रहविशेषात् साङ्गं कर्म, नान्येषां कामयितॄणां दातु-मर्हति इति। न च वृष्टिर्यजमानस्य फलमिति विज्ञा-यते, यथेतरस्य जीवतो यजमानस्य विद्यमानेऽपि कामो-

ऽनुच्यमानो न भवति, किमङ्ग पुनरस्थ्नां, येषां काम एव नास्ति, तस्मात् काम्यानि न कर्त्तव्यानि इति ॥ (१०। २। २० अ०) ॥

---

अस्थियज्ञे अस्थ्नां सूक्तवाकगताशासनाननुष्ठानाधिकरणम् ।

## ईहार्थास्त्वभावात् सूक्तवाकवत् ॥ ५१ ॥ (नि०)

सन्ति अस्थियज्ञे दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तानि प्रायणीयादीनि। तेषु चोदकप्राप्तः सूक्तवाकः, तत्रेमानि, अयं यजमान आयुराशास्ते सुप्रजास्त्वमाशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाशास्ते तदश्यात् तद्‌ध्यात् तदस्मै देवारासत्ताम् इति। किम् इमानि कर्त्तव्यानि, न कर्त्तव्यानि ? इत्येषोऽर्थः सन्दिह्यते। किं तावत् प्राप्तम् ?, ईहार्था ये कामाः सूक्तवाके श्रूयन्ते, तेऽपि न स्युः। किं कारणम् ?। अभावात् कामयितुः, न हि अस्थीनि कामयन्ते, इत्येतदुक्तं, तस्मात् न कर्त्तव्यानि। सूक्तवाके इति सुनयितव्ये सूक्तवाकवदिति सूचितम्।

कथमेवं वर्ण्यते ? इति। उच्यते, ईहार्थाः सूक्तवाकाहाः, अर्हे वतिर्द्रष्टव्यः। यथा छन्दो व्यतिक्रमाद्यूढे भक्षपद्मानपरिधिकपालम् ?, मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात् इति। तस्मान्न सूत्रोपालम्भः।

## स्युर्वा अर्थवादत्वात् ॥ ५२ ॥ (पू०)

न चैतदस्ति, यदुक्तं भवता अस्थ्नामीहार्थाः कामा न कर्त्तव्या इति । स्युर्वा अर्थवादत्वात्, स्युर्वा एते कामाः । कस्मात् ? । अर्थवादत्वात्, अर्थवादा एते आयुराशास्ते सुप्रजास्त्वमाशास्ते इति, नैते विधयोऽर्थवादा एते, अर्थवादत्वाच्च तेषां क्रियां चोदक. प्रापयति, एवं चोदकानुग्रहो भवति, तस्मात् पश्यामः, ईहार्थाः कामाः कर्त्तव्या इति ।

नेच्छाभिधानात् तदभावादितरस्मिन् ॥ ५३ ॥ (सि०)

न चैतदस्ति, यदुक्तं भवता ईहार्थाः कामाः कर्त्तव्याः इति । कस्मात् ? । इच्छाभिधानात्, इच्छाभिधाना एते कामाः, आयुराशास्ते दिव्यं धामाशास्ते सुप्रजास्त्वमाशास्ते इतीच्छायामुत्पन्नायां प्रयुज्यन्ते, य एतान् कामान् इच्छेत्, स चेह यजमानो नास्ति, अचेतनावन्ति एतानि अस्थीनि, अस्थ्नामिच्छा न विद्यते, तदभावाद् अस्थ्नामिच्छाया अभावात् । इतरस्मिन् जीवति एते कामा भविष्यन्ति, नास्थिषु, तस्मात् पश्यामोऽस्थ्नामीहार्थाः कामा न कर्त्तव्या इति ।

ननु एतेऽर्थवादा इत्युक्ताः । अत्रोच्यते, नैते अर्थवादाः, विधय एते । एवं चेत् परिहृतमेतत् भवति । तस्माद् यदुक्तं भवता, अस्थ्नामीहार्थाः कामाः कर्त्तव्या इति, नैतदेवं, न कर्त्तव्याः, नेच्छाभिधानात् तदभावादितरस्मिन् ॥ ( १० । २ । २१ अ० ) ।

अस्तियज्ञे होत्रकामाभावाधिकरणम्।

## स्युर्वा होत्रकामाः ॥ ५४ ॥ (पू०)

द्वादशाहप्रभृतीनि सत्राणि उदाहरणम्। तानि प्रकृत्य श्रूयते, ततः संवत्सरे अस्थीनि याजयेत् इति। चोदकप्राप्तानि दीक्षाप्रभृतीनि कर्माणि श्रूयन्ते, सन्ति च प्रकृतौ होत्रकामाः, यं कामयेत अपशुमान्त्स्यादिति, पराचीं तस्येडामुपह्वयेत, अपशुमानेव भवति। यं कामयेत प्रमायुकः स्यादिति, तस्योच्चैस्तरां वषट् कुर्य्यात्, यं कामयेत पापीयान्त्स्यादिति, नीचैस्तरां तस्य याज्यया वषट्कुर्य्यात्। यं कामयेत वर्षीयान्त्स्यादिति, उच्चैस्तरां तस्य याज्यया वषट्कुर्य्यात् इति। एवं तत्र संशयः क्रियते, किमस्थ्नां होत्रकामाः कर्त्तव्या अथ वा न कर्त्तव्याः? इति। ननु जीवतां यज्ञ इत्युक्तम्।

अत्रोच्यते, अस्थ्नां यज्ञ इत्येवं कृत्वा चिन्ता प्रवर्त्तते। तत्र सूत्रेणैवोपक्रमः क्रियते, स्युर्होत्रकामाः, एतेऽस्थ्नां कर्त्तव्याः स्युः। कस्मात्?। चोदकः प्रापयति, एवं चोदकानुग्रहो भविष्यति। तस्मात् पश्यामो होत्रकामाः कर्त्तव्या इति।

## न तदाशीष्ट्वात् ॥ ५५ ॥ (सि०)

न चैतदस्ति, यदुक्तं भवता होत्रकामाः कर्त्तव्या इति, न कर्त्तव्याः। कस्मात्?। तदाशीष्ट्वात्, तदाशीरेषा भवति, यजमानाशीरेषा, यां वै काञ्चन यज्ञे ऋत्विज

आशिषमाशास्ते सा सर्वा यजमानस्य इति यजमान-विषयतामाशिषो दर्शयति। स चेह यजमानो नास्ति, अचेतनानि अस्थीनि, अस्थ्नां कामयितुं सामर्थ्यं नास्ति, अर्थी समर्थश्चाधिक्रियते इत्युक्तं, कर्त्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्येत इति। तस्मात् पश्चामोऽस्थ्नां ह्याह-कामः न कर्त्तव्या इति। चीणा क्लत्वा चिन्ता, प्रयोजनं नोच्यते। न तदाशीष्ट्वात्। (१०।२।२२ अ०)।

---

यजमानस्य दिष्टगतावपि सर्व्वस्वारस्य समापनाधिकरणम्।

## सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५६ ॥ (पू०)

अस्ति सर्वस्वारः क्रतुः शुनःकर्णोऽग्निष्टोमः। मरण-कामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोक-मियाम् इति। तत्र संशयः, किं दिष्टगते यजमाने तदन्तं कर्म उत्स्रष्टव्यम्, उत परिसमापयितव्यम्? इति। किन्तावत्प्राप्तम्? सर्वस्वारे दिष्टगतौ यजमानस्य सत्यां तदन्तं कर्म उत्स्रष्टव्यं, कर्मणो जीवसंयोगात्, जीवता हि शक्यं, न अजीवता। तस्मादिदमर्थादापद्यते, सर्व-स्वारेण दिष्टगत्यन्तं यजेत इति।

## स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५७ ॥ (सि०)

स्याद्वा तस्य परिसमाप्तिः, उभयं हि प्रत्यक्षशिष्टं,

क्रतुः, परिसमाप्तिश्च। मरणकामो हि एतेन यजेत इत्यारभ्य परिसमापयितव्यमित्याख्यातार्थः, तेन समाप्तिराख्यातेनैवोक्ता भवति। अपि चेदमाम्नायते, आर्भवे प्रस्तूयमाने औदुम्बरीं परितोऽदशेन वाससा परिवेष्ट्य ब्राह्मणाः परिसमापयत मे यज्ञमिति सम्प्रेष्याग्निं विशति इति। यदि प्रैषमात्रं स्यात्, अदृष्टार्थं भवेत्। तस्मात् सम्प्रेषणद्वारलक्षणया परिसमाप्तिरेव विधीयते। यथा, यदि सोममपहरेयुः विधावतेच्छतेति ब्रूयात् इति। अथ यदुक्तं, जीवन् कर्त्ता भवति, न मृतः इति। न इत्युच्यते, जीवता वचनं प्रोक्तम्, आरब्धं परिसमापयतेति, अतः तत्कृतैवासौ परिसमाप्तिः।

अत्राह, यदासौ प्रयुक्तवांस्तदा तावत् परिसमाप्तिस्तेन न कृता, यदा परिसमाप्तिस्तदासौ नास्ति, कः परिसमाप्तेः कर्त्ता? इति। अत्रोच्यते, भुक्तसंशयेनैतत् तुल्यं, यद्वत् भुक्तसंशयं जीवन्तं कर्त्तारं मन्यते, तेनैतत् तुल्यं, योऽपि परिसमापयतेति प्रेष्य परिसमाप्तिकाले जीवति, तस्यापि जीवनं परिसमापनकालेऽनुपकारकं, पूर्वप्रैषादेवास्य कर्तृत्वम् उपपद्यते इति, स च पूर्वप्रैषो जीवतो अजीवतश्च तुल्यः। तस्माज्जीवन्निव अयमपि कर्त्तेति। अथोच्येत, जीवतः सत्त्वात् कर्तृत्वमुपपद्यते इति। एतदपि तुल्यमेव, जीवतोऽपि पुरुषः कर्त्ता न शरीरं, स च पतितेऽपि शरीरे पुरुषोऽस्ति। तस्मात् स एव परिसमाप्तौ कर्त्तेति। अथोच्येत, याजमानासम्भवादशक्यं हि दिष्टगतो उत्तरं तन्त्रं कर्त्तुम्, अतस्तच्चो-

दको न प्रापयति इति। न एतदेवं, याजमानवर्जं प्रापयिष्यति सः, तस्माददोषः। अथ वा, प्रत्यक्षमेव परिसमाप्तेर्वचनं, ब्राह्मणाः संस्थापयत मे यज्ञम् इति, तत्सामर्थ्यादेव याजमानं भविष्यति॥ (१०।२।२३ अ०)॥

---

यजमानस्य दिष्टगतौ सर्वस्वारस्य शुक्रस्पर्शादियोग्याङ्गाद्यनुष्ठानाधिकरणम्।

## गते कर्मास्थियज्ञवत्॥ ५८॥

अस्ति सर्वस्वारः क्रतुः शुनःकर्णोऽग्निष्टोमः, मरणकामो हि एतेन यजेत, यः कामयेत अनामयः स्वर्गं लोकमियाम् इति। तत्र दिष्टगतौ यजमानस्य सत्यां किं कर्त्तव्यम्,? इति प्रश्नः, भवति चादर्शयित्वापि द्वौ पक्षौ, प्रश्नेनोपक्रमः। पक्षद्वयेऽपि प्रतिभाति भवति संशयः, सर्वाप्रसिद्धावपि भवति। यथा को नामायं पर्वतः? का नामेयं नदी? किमिदं फलम्? इति। तदभिधीयते, गते कर्म्म अस्थियज्ञवत् दृष्टां गतिं गते यजमाने अस्थियज्ञवत् कर्म भविष्यति। यथा अस्थियज्ञे क्रत्वर्थं क्रियते नान्यत् अस्थिभिः, एवं दिष्टामपि गतिं गते क्रत्वर्थं शवेन कारयितव्यं नान्यत्। यथा, शुक्रं यजमानोऽन्वारभते, यजमानेन सम्मिता औदुम्बरी भवति इति॥ (१०।२। २४ अ०)॥

---

सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनाधिकरणम् ।

**जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥५९॥ (पू०)**

सर्वस्वारे एव जीवति यजमाने भवत्येव संशयः, आशास्ते यजमानः इति किमायुराशीर्वक्तव्या, उत न ? इति । किं प्राप्तम् ?, जीवति अवचनम् आयुराशिषः । कुतः ? । तदर्थत्वात्, यत्रायुराशास्ते यजमानस्तत्र प्रस्तरं प्रयच्छत एवंकामो यजमान इत्यावेदयितव्यं भवति, तत् यजमानः कथं प्राप्नुयात् इति । स च अयमत्र यजमानो विपरीतकामो, मरणकामः । तस्मादायुराशीस्तत्र न वक्तव्या ।

**वचनं वा भागित्वात् प्राक् यथोक्तात् ॥ ६० ॥ (सि०)**

उच्यते, वक्तव्या आयुराशीः, भागी हि आयुराशीर्वादः । आर्भवे प्रस्तूयमाने यजमानस्य दिष्टा गतिः प्रार्थयितव्या भवति । प्राक् आर्भवकालादायुराशास्ते यजमानः, आर्भवकालं यावज्जीव्यासम् इति । चोदकस्यैवमनुग्रहीष्यते । तस्मादत्रापि आयुराशीर्वक्तव्या इति । (१० । २ । २५ अ० ) ।

———

द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ।

**क्रिया स्यादुधर्मिमात्रानाम् ॥ ६१ ॥**

अस्ति द्वादशाहः, द्वादशाहमृद्धिकामा उपेयुः इति। अस्ति तत्र चोदकप्राप्तं धर्ममात्रं किञ्चित्, यथा ऋतुयाज्या, वरणम्, आत्रेयाहिरण्यदानञ्च। तत्र संशयः किं धर्ममात्रं कार्य्यं, न ? इति। किं प्राप्तम् ? स्वयंकर्त्तृकत्वात् सत्रस्य, वरणं दानञ्च निवर्त्तते इत्युक्तम्। न च, अन्यद्वचनमस्ति, कर्त्तव्यमिति, यावानेव श्रुतस्य उत्सर्गे दोषः, तावान् अश्रुतकल्पनायाम्। तस्मान्न कर्त्तव्यमिति।

एवं प्राप्ते ब्रूमः, क्रिया स्याद्धर्ममात्राणां, यद्वि वरणं दानं वा, न भवत्यानर्थ्यं, तत् स्वयंकर्त्तृकेऽपि न विरोधमुपैति। तस्माच्चोदकानुग्रहाय क्रिया स्यादिति॥ (१०। २।२६ अ०)॥

---

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम्।

## गुणलोपे च मुख्यस्य॥ ६२॥

सन्ति अग्न्याधाने पवमानेष्टयः, यः अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकायाग्नये शुचये इति। तत्र चोदकेन प्राप्तम् अग्निहोत्रहवण्या हवींषि निर्वपेत् इति, तत्र तावदग्निहोत्रस्य कालः, तस्मादग्निहोत्रहवणी नास्ति पवमानेष्टिषु, तदभावे किं निर्वापोऽपि न कर्त्तव्यः, उत कर्त्तव्यः ? इति। किं प्राप्तम् ?, यथाश्रुतोऽसौ न शक्यते कर्त्तुं, न चायथाश्रुतेन कृतेन किञ्चिदस्ति प्रयोजनम्। तस्माद्विगुणत्वान्न कर्त्तव्य इति।

एवं प्राप्ते ब्रूमः, गुणलोपे च मुख्यस्य क्रिया स्यात् इति। गुणोऽग्निहोत्रहवणी, प्रधानं निर्वापः, यदि निर्वापो न सम्भवेत्, ततस्तदसम्भवात् अग्निहोत्रहवण्यपि न सम्भवतीति निवर्त्तेत। न तु गुणलोपे मुख्यं न सम्भवतीति। तस्मान्निर्वापः कर्त्तव्यः, अग्निहोत्रहवणीसाधनता च तस्य न सम्भवतीति निवर्त्तेते॥ (१०।२।२७ अ०)॥

---

वाजपेये मुष्टिलोपाधिकरणम्।

## मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात्॥ ६३॥ (पू०)

अस्ति वाजपेयः, यदि वाजपेयेन स्वाराज्यकामो यजेत इति। तत्र श्रूयते, नैवारः सप्तदशशरावः क्षीरे चरुर्भवति इति। अस्ति तु प्रकृतौ सङ्ख्या मुष्टयश्च, चतुरो मुष्टीन्निर्वपति इति, उभयं चोदकेन प्राप्तम्। तत्र संशयः, किं सङ्ख्यानुग्रहो मुष्टिलोपः, उत मुष्ट्यनुग्रहः सङ्ख्यालोपः? अथ वा किं सङ्ख्यालोपः? अथ वा किं सङ्ख्याया मुष्टीनाञ्च लोपः? अथ वा अन्यतरलोपः? इति। किं प्राप्तम्? अन्यतरलोपः इति यदि वा मुष्टिषु, यदि वा सङ्ख्यायाम्। कुतः?। नियमकारिणः शब्दस्याभावात् अनियम इति।

एवं प्राप्ते ब्रूमः, मुष्टिलोपः स्यात्, सङ्ख्यानुग्रहश्चेति। कुतः?। मुख्यत्वात् सङ्ख्यायाः, पूर्वं हि सङ्ख्या निपतति, सा पूर्वमेव अवगम्यते, न तदवगमकाले सङ्ख्याविज्ञानस्य

परिपन्थि किञ्चिद्विज्ञानमस्ति, तस्मिन्निष्प्रतिद्वन्द्वे सङ्ख्या-विज्ञाने प्राप्ते मुष्टिविज्ञानमापतति, तत् सङ्ख्याविज्ञानपरिपन्थितां नाचरितुमर्हति। तस्माद् यघन्यत्वान्मुष्टीनां लोपः। मुख्यार्थत्वात् सङ्ख्यानुग्रहः। तदुक्तं, मुख्यं वा पूर्वचोदनाल्लोकवत् इति।

एवं प्राप्ते ब्रूमः, मुष्टिलोपेन सङ्ख्या लोपमर्हति इति। कुतः?। तद्गुणत्वात्, मुष्टिगुणो हि सङ्ख्या श्रूयते, चतुरो मुष्टीः इति, चतुःसङ्ख्याविशिष्टा मुष्टयः कथं भवेयुरिति सङ्ख्या उच्चार्य्यते, न स्वार्थे। तस्मात् सङ्ख्या पूर्वनिर्दिष्टा अनिर्दिष्टेव, सा हि परविशेषणार्थमेवोच्चार्य्यते, तेन नैव तस्या अनुग्रहः कार्य्यः, मुष्टिलोपे सति तदधिकरणा सङ्ख्या अधिकरणाभावान्निवर्त्तते। अन्याधिकरणायां क्रियमाणायां न प्रकृतिवत् कृता स्यात्। सङ्ख्यालोपे पुनर्मुष्टयो निर्वापाधिकरणाः श्रूयमाणा अधिकरणा-निवृत्त्या न निवर्त्स्यन्ति। तस्मान्मुष्टिगुणत्वात् सङ्ख्या निवर्त्तेत न मुष्टयः। तदुक्तम्, गुणविरोधे च तादर्थ्यात् इति।

## न निर्वापशेषत्वात् ॥ ६४ ॥ (सि०)

नैतदेवं, न सङ्ख्या मुष्टिषु श्रूयते, यदि मुष्टिषु श्रूयेत, तद्गुणत्वान्निवर्त्तेत। क्व तर्हि श्रूयते?। निर्वापे। कथम्?। नैवमभिसम्बन्धः क्रियते, चतुरो मुष्टीरिति, कथं तर्हि?, चतुरो निर्वपति इति, मुष्टिगुणः सङ्ख्यागुणश्च निर्वापो निर्दिश्यते, क्रियासम्बन्धे हि द्वितीया विभक्ति-र्भवति। कथम्?। कारकविभक्तिर्हि सा, कारकं क्रियाया

एव भवति, न द्रव्यस्य। अतः चतुःसङ्ख्या श्रुत्या अवगता निर्वापस्य, वाक्येन मुष्टीनां, वाक्याच्च श्रुतिर्बलीयसी। तस्मान्मुख्यानुग्रहान्मुष्टीलोप एव इति।

**संख्या तु चोदनां प्रति सामान्यात् तद्विकारः संयोगाच्च परं मुष्टेः ॥ ६५ ॥ (द्वि० पू०)**

तुशब्दः एतं पक्षं व्यावर्त्तयति। न सङ्ख्यानुग्रहो मुष्टिलोप इति, किं तर्हि? सङ्ख्यया सङ्ख्या निवर्त्तते, शरावैश्च मुष्टयः। कथम्?। सामान्यात्, निर्वापसाधनं द्रव्यं प्रकृतौ मुष्टयः, तासां परिच्छेदिका चतुःसङ्ख्या, इह सप्तदशसङ्ख्याकः शरावद्रव्यकश्चरुर्भवतीति श्रूयते, तत्र मापनार्थं मुष्टिद्रव्यं मापनार्थैः शरावैर्निवर्त्यते, तत्परिच्छेदनार्था चतुःसङ्ख्या परिच्छेदार्थया सप्तदशसङ्ख्यया निवर्त्यते। तद्यथा इदं दधि घृतं शाकमिमे शालयः, देवदत्तो भोजयितव्यः, देवदत्तवद् यज्ञदत्तस्तैलेनेति भोजने यत् घृतेन शक्यते कर्त्तुं, तत् तैलेन क्रियते। तस्माद् यद्यपि न श्रूयते तैलेन स्नेहयितव्यम् इति, तथापि समानकार्यत्वात् तैलं घृतस्य विनिवर्त्तकं भवति। एवं सङ्ख्यापरिच्छेदं कुर्वती परिच्छेदिकाया एव सङ्ख्याया निवर्त्तिका भवितुमर्हति। परं च शरावद्रव्यं मुष्टेः निवर्त्तकं संयोगात्। तस्मात् प्राकृती सङ्ख्या प्राकृतं च द्रव्यं निवर्त्तते।

**न चोदनाभिसम्बन्धात् प्रकृतौ संस्कारयोगात् ॥ ६६ ॥ (सि०)**

न एतदेवम्। चोदनेति यागं ब्रूमः। यागसम्बन्धा हि सप्तदशसङ्ख्या शरावद्रव्यञ्च, प्रकृतौ निर्वापसंस्कारसम्बन्धा चतुःसङ्ख्या मुष्टिद्रव्यञ्च, न चान्यत्र क्रियमाणं समानकार्य्यमपि अन्यत्र निवर्त्तकं भवति, यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्य्यमभिनिर्वर्त्त्यते, तेन च यागे क्रियमाणे निर्वापकार्य्यं निवर्त्त्यते। तस्मान्निर्वापप्राप्तं किञ्चिदपि अनेन न निवर्त्त्यत इति। विरोधात्तु चतुर्भिर्मुष्टिभिर्निरूप्यमाणं द्रव्यं न सप्तदशशरावं भवति, तस्माद्विरोधात् अन्यतरं निवर्त्त्यते द्रव्यं सङ्ख्या वा, तत्र चतुःसङ्ख्यानुग्रहान्मुष्टिलोपो न्याय्यतर इति॥ (१०।२। २८ अ०)॥

---

धेनुमालभेतेत्यादिश्रुतौ धेन्वादिशब्दानां गोवाचिताधिकरणम्।

## औत्पत्तिके तु द्रव्यतो विकारः स्यात्कार्य्यत्वात्॥ ६७॥

क्वचित् श्रूयते, द्यावापृथिव्यां धेनुमालभेत मारुतं वत्समैन्द्रं ऋषभम् इति। तत्र संशयः, किमजा धेनुवत्सर्षभाः, उत गावः? इति। किं प्राप्तम्?, चोदकानुग्रहाय अजा इति, गुणनिमित्तास्ते शब्दाः, स गुणश्चोदकेन प्राप्ते द्रव्ये आवेशयितव्यः। ननु गवि गुणमाहुस्ते शब्दाः। सत्यं गवि आहुः, नतु गौरत्र प्रत्यक्षेण वचनेन, चोदकेन वा। स एष गुणवचनो यद्यपि श्रुत्या गोधिष्ठानं गुणं वदति, वाक्येनालभ्यद्रव्यम् आस्कन्दति, तथापि

गोद्रव्यस्याभावात् आलभतिवाक्यमेव गृह्यते न श्रुतिः। अपि च धानवयोवचना एते शब्दाः, गुणाश्चामूर्त्तत्वात् न क्रियया सम्बध्यन्ते, द्रव्येणैषां सम्बन्धो भवति, चोदक-प्राप्तञ्च द्रव्यम्। तेनैषां सामानाधिकरण्यम्। यथा अवी द्वे धेनू ददाति, तस्य पुरुषी धेनुर्दक्षिणा। तथा अजर्ष-भस्य आजिनमवस्तृणाति इति धानवयोवचनः शब्दस्तदेक-वाक्यगतेनैव द्रव्येण सम्बध्यते। एवमिहापि चोदक-प्राप्तेन द्रव्येण सम्भंस्यत इति। तस्मादजा धेनुवत्स-ऋषभा इति।

एवं प्राप्ते ब्रूमः, औत्पत्तिके एतस्मिन् उत्पत्त्यैव जाति-विशिष्टे गुणशब्दे द्रव्यतो विकारः स्यात्, द्रव्यमपि विकु-र्य्यात् न गुणमात्रं, यदेतज्जातिविशिष्टं धानं वयश्च, न तद् अजपशुषु शक्यं कर्त्तुं, गोपशुष्वेव तद् भवति। नन्वत्र यदपि स्यात् शक्यमावेशयितुं, तद् आवेशयिष्यति, यन्न शक्यं, तत् प्रमादिष्यते, यथा अजा धेनुवत्सर्षभाः इति। उच्यते, विस्पष्टस्तत्र अजशब्देन धेन्वादीनामेकवाक्यभावः, इह चोदकेन अजद्रव्यं, चोदकश्च विरोधे सति न अजद्रव्यं प्रापयति। न च धेन्वादीनां द्रव्येण सम्बन्धः, कारक-विभक्तिरेषा आलम्भेन सम्बन्धं करोति। गवि सा च श्रुतिः, द्रव्यसम्बन्धो वाक्येन स्यात्, तच्च दुर्बलं श्रुतेः। तस्मिंश्च जातिविशिष्टे गुणे आलम्भसंयुक्ते सति न शक्यम् अजाद्रव्येण भवितुम्। न च चोदकापेक्षया प्रत्यक्षा जातिरुत्स्रष्टुं शक्यते। तस्माद् गावो धेन्वादयो भविष्य-न्तीति। (१०।२।२८ अ०)।

वायव्यं श्वेतमालभेतेत्यनेन अजस्यैवालम्भनाधिकरणम् ।

## नैमित्तिके तु कार्य्यत्वात् प्रकृतेः स्यात् तदापत्तेः ॥ ६८ ॥

इदमामनन्ति, वायव्यं श्वेतमालभेत भूतिकामः इति । अत्र संशयः, किमिहापि नाजः पशुः कर्त्तव्यः, उत अजः पशुः ? इति । उच्यते, औत्पत्तिकोऽयं श्वेतगुणसम्बन्धे श्वेतशब्दः, अतो यः कश्चित् श्वेतगुणसम्बद्धः, स आलभ्यः, न हि श्वेतशब्दः प्रत्यक्षः सन् कुतश्चित् श्वेतद्रव्यात् चोदकेन निवर्त्तयितव्यः । तस्माद् अजो गौरन्यो वा श्वेत आलब्धव्य इति ।

एवं प्राप्ते ब्रूमः, नैमित्तिके एतस्मिन् श्वेतगुणनिमित्तके द्रव्ये श्वेतशब्दे सति गुणमात्रं विक्रियते, न ह्यत्र जातिविशिष्टं द्रव्यं प्रतीयते, यदेव आलम्भसाधनभूतं तदेव परिच्छेत्तव्यं, इत्येतद्वाक्यादवगम्यते । यच्चास्य चोदकप्राप्तं द्रव्यं साधनमविरुध्यमानं श्रुत्या प्राप्नोति, तदयं श्वेतशब्दः परिच्छेत्स्यति । ननु अजादन्यान्यपि द्रव्याणि परिच्छेत्तुमयं शक्नोति । न ब्रूमो न शक्नोति, न तेन परिच्छिन्नेन प्रयोजनमस्ति । तस्मात् प्रत्यक्षोऽपि श्वेतशब्दः छागमेव परिच्छिन्द्यात् नान्यं पशुमिति । ( १० । २ । ३० अ० ) ।

---

सायस्के चित्रायाञ्च खलेवाल्यास्तण्डुलस्य च यथाक्रमं खादिरत्वव्रैहत्वा-
नियमाधिकरणम् ।

## विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपः स्यात् तेन च कर्मसंयोगात् ॥ ६९ ॥

सायस्के श्रूयते, खलेवाली यूपो भवति इति । तत्र सन्देहः, किं खादिरश्चोदकेन प्राप्येत, स खलेवाली कर्त्तव्यः, अथ न प्राप्यते, खादिरी अखादिरी वा खलेवाली स्यात् ? इति । तथा चित्रायां श्रूयते, दधि मधु घृतमापो धानाः तण्डुलास्तत्संसृष्टं प्राजापत्यं भवति इति । तत्रापि सन्देहः, किं व्रीहयश्चोदकेन प्राप्यन्ते, व्रैहास्तण्डुलाः कर्त्तव्याः, उत न प्राप्यन्ते, व्रैहा अव्रैहा वा तण्डुला उपादातव्याः ? इति ।

किं तावत् प्राप्तम् ? खादिरादिः खलेवाली कर्त्तव्या, व्रैहास्तण्डुलाः कर्त्तव्याः, चोदकेन खादिरादयो व्रीहयश्च प्राप्नुवन्ति । एवं चोदकानुग्रहो भविष्यति, तेषां प्राप्तानां खलेवालीत्वं विधीयते, यो यूपः स खलेवाली कर्त्तव्य इति । शक्यते, हि यूपः खलेवाली कर्त्तुं, न खलेवाली केनचित्प्रकारेण यूपो भवति, खादिरादीनां हि काष्ठानां संस्कारैर्यूपः क्रियते छेदनादिभिः, न त्वन्येषाम् । तत्र यूपो भवति इति यूपकार्य्ये भवतीत्युक्तं स्यात्, तथा लक्षणाशब्दो भवेत्, व्रीहीणामपि तण्डुलाश्चोदकेन प्राप्ता एव, तेषां तद्भूतानां पिष्टभावं प्रत्याख्याय देवतासम्बन्धः क्रियते । तस्मात् खादिरादयः खलेवालीत्वमापादयितव्याः, व्रीहयश्च तण्डुलभावमापादयितव्या इति ।

एवं प्राप्ते ब्रूमः, विप्रतिषेधे एतस्मिन् प्राकृतस्य गुणस्य लोपः स्यात्। कथं विप्रतिषेधः ?। तद्वचनात्, खलेवाल्या यूपता विधीयते, न यूपस्य खलेवालीता, तथा अव्यवहितेन भवतिना सम्बन्धात् प्रत्यक्षं वाक्यम्, इतरथा व्यवहितेन परोक्षं स्यात्। खलेवालीशब्दश्च यः खले वारणे प्रवर्त्तते तस्य वाचकः, तथाभूतश्च यूपकार्य्ये विनियुज्यते, या खलेवाली स यूप इति, शक्यते च यूपकार्य्ये विनियोक्तुम्। यत्तु, 'यूपशब्दः कार्य्यलक्षणार्थ इति, व्यवधानाल्लक्षणापि ज्यायसी, प्रत्यक्षं हि लक्षणायां, परोक्षं व्यवधाने वाक्यम्। तस्माद् यज्जातीयस्य वृक्षस्य खलेवाली कृता, तज्जातीयस्य यूपकार्य्ये विनियोक्तव्या, नैनां चोदको विशेषे अवस्थापयितुं शक्नोति, प्रत्यक्षा हि श्रुतिः, तथा चोदकेन बाधिता स्यात्। तस्मान्न खादिरादिनियम इति। (१०।२।३१ अ०)।

---

खलेवाल्यां तक्षणाद्यननुष्ठानाधिकरणम्।

## परेषां प्रतिषेधः स्यात् ॥ ७० ॥ (सि०)

खलेवाल्यामेव संशयः, किं तक्षणं जोषणमुच्छ्रयणमित्येवमादयः पदार्थाः कर्त्तव्याः, न ? इति। किं प्राप्तम् ? चोदकानुग्रहाय कर्त्तव्या इति।

एवं प्राप्ते ब्रूमः, परेषां प्रतिषेधः स्यात् इति। तथाभूतस्य हि यूपकार्य्ये विनियोगे कृतेकृतः शास्त्रार्थो भवति,

कृते शास्त्रार्थे स अपरस्मै गुणाय यतितव्यम्। अपि च तक्षणादीनि यूपकारणानि, न चात्र यूपे योजनम्, अयूपो हि यूपकार्य्ये विनियोगयितव्यः। तस्मात् तक्षणादयो न कर्त्तव्या इति।

## प्रतिषेधाच्च ॥ ७१ ॥ (हे०)

इतश्च न कर्त्तव्याः, विप्रतिषेधः कृतो भवेत्, क्रियमाणेषु तस्याः खलेवाल्याः, यत् काष्ठं खलेवारणप्रवृत्तं, सा खलेवाली, तादृश्येवोपादातव्या, तक्षणे क्रियमाणे सा विनश्येत्, द्रव्यान्तरं जायेत? यत् न खले वारणे प्रवृत्तम्। जोषणं तु भ्रष्टावसरमेव, जोषितं तद् अन्यार्थेनैव, वृक्षाणां हि जोषणं न तु विकारस्य। उच्छ्रयणं चोच्छ्रिताया अशक्यमेव। तस्मात् तक्षणादयो न कर्त्तव्या इति॥ (१०।२।३२ अ०)॥

---

खलेवाल्यां पर्य्यूहणादिसंस्काराणामनुष्ठानाधिकरणम्।

## अर्थाभावे संस्कारत्वं स्यात् ॥ ७२ ॥

खलेवाल्यामेव सन्देहः, किं मैत्रावरुणदण्डेन भूमेः समक्रिया, अङ्गिरवसेचनं, बलवदवधानमञ्जनमित्येवमादयः पदार्थाः कर्त्तव्याः, उत न? इति। किं प्राप्तम्? न कर्त्तव्या इति, परेषां प्रतिषेधः स्यात् इत्युक्तम्। यादृशः खले वारणे वर्त्तते, तादृश एव यूपकार्य्ये विनियोक्तव्यः अयूपः, यूपार्थाश्च चोदकप्राप्ताः संस्काराः तस्मिन् निवर्त्तेरन् इति।

एवं प्राप्ते ब्रूमः, अर्थाभावे कार्य्याभावे यदि खलेवाल्यास्तैः संस्कारैः कार्य्यं न भवति, ततो यूपत्वमेव तेषां निमित्तं स्यात्, खलेवाल्यां न भवेयुः, इह पुनर्भूमिः समक्रियया अद्भिरवसेचनेन बलवदवधानेन च कार्य्यमस्ति द्राढ्यं, शिथिला हि सा खले वारणे न भवति, न च खलेवालीत्वमुपपद्यन्ति । तस्मात् कर्त्तव्याः । अञ्जनमपि अनुपघातकं चोदकप्राप्तं क्रियमाणमधिकाय गुणाय स्यान्न दोषाय । तस्मात् तदपि कर्त्तव्यमिति ॥ (१०।२।२२अ०) ॥

---

महापितृयज्ञे धानासु अवघातानुष्ठानाधिकरणम् ।

## अर्थेन च विपर्य्यासे तादर्थ्यात् तत्त्वमेव स्यात् ॥ ७३ ॥

अस्ति महापितृयज्ञः, सोमाय पितृमते षट्कपालं पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् इति । धाना इत्यत्र सन्देहः, किं धानासु हन्तिः कर्त्तव्यः, उत न ? इति । किं प्राप्तम् ? न कर्त्तव्य इति । कुतः ? । विघातात्, क्रियमाणे हन्तौ धानात्वं विहन्येत सक्तवो हि भवेयुस्तस्मात् न कर्त्तव्या इति ।

एवं प्राप्ते ब्रूमः, उक्तम् अविघातकम् अधिकाय गुणाय कर्त्तव्यम् अञ्जनवत् इति । आह अञ्जनम् अविघातकं,

हन्तिस्तु धानात्वं विहन्तीति। अत्रोच्यते, यथा न विघातकं भवति, तथा करिष्यते, विपर्य्यसिष्यते तथा, न विहनिष्यते। विपर्य्यासे क्रममात्रं न कृतं भवति, पदार्थस्तु न निवर्त्तते, तदुक्तं, गुणलोपे च मुख्यक्रिया भवतीति। तस्मात् पूर्वं हन्तिं कृत्वा पाकः कार्य्यः, तत्र हि हन्तिः पाकार्थो भविष्यति, न धानात्वं विहनिष्यते इति।

इति भट्टश्रीशवरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य द्वितीयः पादः।

---

## मीमांसा-दर्शने

### १० अध्याये ३ पादः।

पश्वादौ सामिधेन्यादिप्राकृतेतिकर्त्तव्यतानुष्ठानाधिकरणम्।

**विकृतौ शब्दवत्वात् प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥ ( पू० )**

अस्ति सोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति। तत्रेदं समाम्नायते, एकादश प्रयाजान् यजत्येकादशानुयाजान् यजति इति। तथा

चातुर्मास्यानि चातुर्मास्यैः स्वर्गकामो यजेत इति। तत्राप्याम्नायते, नव प्रयाजान् यजति नवानुयाजान् इति। तथा वायव्यं श्वेतमालभेत भूतिकामः इति। तत्राप्याम्नायते, हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयति। तथा अवभृथे श्रूयते, अप्सु तृणां प्रास्याघारमाघारयति इति। तदेतेषु संशयः, किं प्राकृतेतिकर्त्तव्यता न प्राप्यते, अप्राप्तायां कर्मान्तराण्येतानि चोद्यन्ते, अथ वा प्राप्यते, प्राप्तायां गुणविधयः? इति। किं प्राप्तम्? न प्राप्यते इति। विकृतौ तस्यां तस्यां शब्दवत् प्रधानं नाङ्गानि, तस्मादग्नीषोमीयादिषु गुणकर्मणामधिकानाम् उत्पत्तिः। यजति, आघारमाघारयतीति च कर्मान्तराण्येतानि विधीयन्ते, तथा हि श्रुतिरनुगृहीता भवति, तैरेव च तानि साङ्गानि जायन्ते, तस्मात् प्राकृती इतिकर्त्तव्यता न प्राप्यते, सन्निहिता हि सा प्रकृतौ, न प्रकृतिं सन्निहितामतिक्रमिष्यति इति।

प्रकृतिवत् तस्य चानुपरोधः ॥ २ ॥ (यु०)

एवञ्च न उपरोधो भविष्यति। क उपरोधः?। प्रकृतिवदिति कल्पना, स चोदकशब्दो न दूरे सतीम् इमामनेकवाक्यव्यवहितां प्रकृतिमपेक्षिष्यते, तस्मात् कर्मान्तराणि चोद्यन्ते, प्रयाजयागान् करोति, नव करोति, आघारं करोति, हिरण्यगर्भः समवर्त्तताग्रे इति करोति इति।

चोदनाप्रभुत्वाच्च ॥ ३ ॥ (आ० नि० ॥

इदं परिचोदनोत्तरं सूत्रं, ननु एषां कर्म्म चोदयितुं सामर्थ्यं नास्ति। कथमिति। नैतस्माद्वाक्यादिदमवगम्यते, यागं करोति इति, कथं तर्हि ?, यागे एकादशसङ्ख्यां करोति इति, यागे गुणवत्तां भावयतीति गुणशब्दश्रवणात्, यागसत्तायां भाव्यमानायां गुणशब्दश्रवणमनर्थकं स्यात्। तस्माद् गुणविधिस्वरूपा एते शब्दा इति।

अत्रोच्यते, अस्त्येतेषां चोदनाप्रभुत्वे सामर्थ्यं, प्रभवन्त्येते कर्म चोदयितुम्। कुतः ?। आख्यातशब्दा ह्येते, आख्यातशब्दाश्च कर्मणः चोदकाः समविगताः, भावार्थाः कर्मशब्दाः (२।१।१सू०) इति। त एते सगुणं कर्म चोदयिष्यन्ति। यागः कर्त्तव्यः, एकादशसङ्ख्या चेत्येवं सर्वत्र। तस्मात् कर्मणश्चोदका एते शब्दाः। इतिकर्त्तव्यता न प्राप्नोति इति।

## प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात् तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान् विधिरविशेषात् प्रवर्त्तितः ॥ ४ ॥ ( सि० )

न ह्येतदस्ति, इतिकर्त्तव्यता न प्राप्यते कर्मान्तराणि इति। प्रधानं प्राकृतम् अङ्गसंयुक्तं तथाभूतमपूर्वम् अपि वैकृतं स्यात्। उक्तमेतद् विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत, तथा हि लिङ्गदर्शनम् (७।४।१०सू०) इति। तस्य प्राकृतस्य कर्मणो विधिः वैकृतेषु कर्मसु केषुचिदुपलभ्यते। तस्मात् सर्वः वैकृतो विधिः पूर्ववान् प्रकृतिपूर्वकः, अविशेषात्

प्रवर्त्तितः चोदकादवगम्यते, तस्मात् इहापि प्राकृती इतिकर्त्तव्यता प्राप्यते। यदुच्यते, प्रयाजादिभिर्निराकाङ्क्षत्वात् प्रकृती इतिकर्त्तव्यता न प्राप्यते इति। स्यादेतदेवं, यदि यागो विधीयते, यागे हि विधीयमाने एकादश, नव, हिरण्यगर्भः समवर्त्तताग्रे इत्येतानि पदान्यनर्थकानि भवेयुः, न च शक्यते वदितुमेकादशादीनि अनूद्यन्ते इति, अपूर्वाणि हि तानि अवश्यं विधातव्यानि, तानि च वाक्येन यागे। अथ यागो विधीयते, यागे च सङ्ख्या, तथा वाक्यं भिद्येत। तस्माद् इतिकर्त्तव्यतायां प्राप्तायां गुणविधय एते इति।

न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥ (१म यु०)

इतश्च गुणविधय इति। न हि अनङ्गे कर्मणि अङ्गस्य विशेषविधिः स्यात्। भवति च विशेषविधिः, आश्ववालः प्रस्तरः इति। न ह्यसति प्रस्तरे प्रस्तरविशेषः शिष्येत, यथा यस्य नास्ति पुत्रो, न तस्य पुत्रस्य क्रीड़नकानि क्रियन्ते। एवमिहापि प्रस्तरस्याश्ववालता न विधीयेत। तस्माद् गुणविधय इति।

कर्मणश्चैकशब्द्यात् सन्निधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्यात् शब्दस्य विधिगामित्वात् गुणस्य चोपदेश्यत्वात् ॥ ६ ॥ ( २य यु० )

अयंत्वपरो विशेषः, प्रधानकर्मणो गुणकर्मणश्च एक-

शब्दात्, प्रयोगवचनेन हि एकेन शब्देनाङ्गप्रधानानि उच्यन्ते, तस्मात् प्रधानवचने सन्निहितानि अङ्गानि, तेषु सन्निहितेषु गुणविधेर्नाम गृहीत्वा अभिसम्बन्धो भवति, यः प्रयाजसञ्ज्ञको यागः, तत्र गुण इति। एवं सर्वत्र यागे गुणेन तद्विकारः स्यात्, सङ्ख्यया मन्त्रेण च सङ्ख्यान्तरं मन्त्रान्तरञ्च विक्रियेत। प्रयाजादिविधिगामी हि शब्दः, गुणश्चोपदेष्टव्यः, नानर्थकं पुनर्वचनम्। तस्माद् इतिकर्त्तव्यता प्राप्यते, प्राप्तायां गुणविधय इति।

**अकार्य्यत्वाच्च नाम्नः ॥ ७ ॥ ( ३य यु० )**

न च शक्यते वदितुं, नामनाभिसम्बन्धोऽयं विधीयते इति, अन्या हि वचनव्यक्तिः शब्दार्थसम्बन्धे विधीयमाने भवति, एकादश यागान् करोति, ते च प्रयाजानुयाजसञ्ज्ञका भवन्ति इति, वाक्यं हि अस्यां वचनव्यक्तौ भिद्येत। अथ पुनरेषां प्रसिद्धनामकानाम् उच्चारणं गुणविधानार्थं, तस्मादपि इतिकर्त्तव्यता प्राप्यते, गुणविधयश्चैते इति।

**तुल्या च प्रभुता गुणे ॥ ८ ॥ (१ म आ० नि०)**

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम्। कानि तानि पदानि ?। यदुक्तं, प्रयाजानुयाजा असन्निहिताः, न शक्यते तेषां गुणो विधातुमिति। तत् परिहर्त्तव्यम्।

अत्रोच्यते, तुल्या ह्येषा प्रभुता गुणान् प्रति चोदकस्य, प्राकृतान् गुणान् इह प्रापयिष्यति। ते च प्राप्ता गुणविधानपरे वाक्ये इह सङ्कीर्त्यन्ते। यद्वा उत्पाद्य प्राप-

यिष्यति, ते गुणवचने न सम्भन्त्स्यन्ते इति। तत्रोत्पन्नानां प्राप्तिर्लघीयसी। प्राकृतान् प्राप्य कृतार्थः शब्दो नापूर्वान् उत्पादयितुं शक्नोति। इदम् अधुनातनवचनम् उत्पादकमिति चेत्। न एतदेवं, गुणसम्बन्धार्थमेव तद्, गुणवचनस्य श्रवणात्। तस्मादपि प्राप्तेषु गुणविधय इति।

अथ यदुक्तं, आख्यातशब्दा एते कर्मणो विधायकाः भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत (२।१।१।सू०) इति। तुल्या एषां प्रभुता आख्यातशब्दानां, ये हि शक्नुवन्ति गुणवचनसहिता गुणं कर्म च विधातुं, शक्नुवन्तितरां ते केवलं गुणं विधातुम्। यो हि पाषाणान् भक्षयति, इषत्करास्तस्य मुद्गशष्कुल्य इति। तस्मादपि गुणविधय इति।

**सर्वमेवं प्रधानमिति चेत्॥९॥ (२य आ० नि०)**

इति चेत् पश्यसि आख्यातशब्दोऽयं गुणं विधास्यति इति, एवं सति सर्वं प्रधानम् आख्यातशब्दवाच्यत्वात् इति।

### तथाभूतेन संयोगाद्यथार्थविधयः स्युः॥ १०॥
### (आ० नि० यु०)

न हि आख्यातशब्दाभिधानेन प्रधानभूतो गुणभूतो वा अर्थो भवति, यः स्वभावतो गुणभूतोऽर्थः, नासौ आख्याताभिधानेन प्रधानभूतो भवति। तथाभूतेन संयोगे सति आख्यातशब्दभूतेन यथार्थविधयो भवेयुः। यत् प्रधानं तत् प्रधानमेव, यद् गुणभूतं तद् गुणभूतमेव इति।

**विधित्वं चाविशिष्टमेवं प्राकृतानां वैकृतैः कर्मणा योगात्तस्मात् सर्वं प्रधानार्थम् ॥ ११ ॥ ( ४र्थ यु० )**

इतश्च पश्यामो गुणविधय इति। कुतः ?। विधित्वं चाविशिष्टं, प्राकृतानां वैकृतैः अर्थवादकर्मणा योगो न विशिष्यते, अग्निं स्विष्टकृतं यजति यज्ञस्य प्रतिष्ठित्यै इति प्रकृतौ य एव, स एव विकृतावर्थवादो भवति, अग्निं स्विष्टकृतं यजति यज्ञमेव प्रतिष्ठापयति इति। तथा चक्षुषी वा एते यज्ञस्य यदाज्यभागौ इति प्रकृतौ, आज्यभागौ यजति चक्षुषी एव नान्तरेति इति विकृतौ। तस्मात् सर्वम् एवंजातीयकं प्रधानार्थं, विकृतौ गुणभूतमिति।

**समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥ १२ ॥ ( ५म यु० )**

इतश्च पश्यामो न सर्वं प्रधानं, प्रधानार्थमपि किञ्चिदस्तीति। समा हि उत्पत्तिक्रमता प्रयाजानुयाजानां, येनैव क्रमेण प्रकृतौ प्रयाजानुयाजानां संस्काराणामधिकारः, तेनैव क्रमेण विकृतौ दृश्यते। कथम् ?। प्रजापतिर्यज्ञमसृजत स आज्यं पुरस्तादसृजत पशुं मध्यतः पृषदाज्यं पश्चात् इति। तस्मादाज्येन पुरस्तात् प्रयाजा वर्त्तन्ते पशुना मध्यतः पृषदाज्येन पश्चादनुयाजा वर्त्तन्ते इति प्रयाजानुयाजानां स्वक्रमाणां दर्शनं प्रधानार्थत्वे सति

उपपद्यते, न प्रधानत्वे । तस्मान्न सर्वं प्रधानं, प्रधानार्थमपि किञ्चिदस्तीति ॥ ( १० । ३ । १ अ० ) ॥

---

वायव्यपशौ हिरण्यगर्भः इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वाधिकरणम् ।

## हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥ (पू०)

अस्ति वायव्यः पशुः, वायव्यं श्वेतमालभेत भूतिकामः इति । तत्र श्रूयते, हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयति इति । तत्रायमर्थः समधिगतः, प्राप्ते एवाघारे गुणविधिरयम् इति । इदन्तु चिन्त्यते, किं पूर्वस्मिन्नाघारे गुणविधिः, उत, उत्तरस्मिन् ? इति । किं प्राप्तम् ? । हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात्, पूर्वस्य आघारस्य गुणविधिरयम् । कुतः ? । मन्त्रलिङ्गात्, एवं मन्त्रार्थो भवति, हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयति इत्यत्र मन्त्रे इदमस्ति वचनं, भूतस्य जातः पतिरेक आसीत् इति, एकः इति च प्रजापतेरभिधानम् इति । स हि प्रजोत्पत्तिसम्भवात् प्राक्, प्रजोत्पत्तेरेकसङ्ख्यायुक्त इति गम्यते, स एष मन्त्रः प्रजापतिमभिवदितुं शक्नोति । प्राजापत्यश्च पूर्व आघारः, तत्रायं समर्थः कार्य्यं निर्वर्त्तयितुं, नोत्तरस्मिन् । अतः पूर्वस्य गुणविधिरिति ।

## प्रकृत्यनुपरोधाच्च ॥ १४ ॥ (यु०)

प्रकृतिवदिति चोदकस्यानुपरोधो भविष्यति, उत्तरस्य

आघारस्य मन्त्रानपनयात्, इतरथा अपनीयेत, ऊर्ध्वोऽध्वर इति मन्त्रः। तस्मादपि पूर्वस्य गुणविधिरिति।

## उत्तरस्य वा मन्त्रार्थित्वात् ॥ १५ ॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति। न पूर्वस्य गुणविधिरिति, किं तर्हि? उत्तरस्य गुणो विधीयते, तस्य मन्त्रेणार्थो न पूर्वस्य। कथम्। एवमाम्नायते, हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयति इति। कोऽर्थः?। आघारे एतामृचमुच्चारयति इति। सा उच्चारिता विशिष्टं श्रौतं विज्ञानमङ्गभूतं करोति; कस्मै देवाय हविषा विधेम इति, एकस्मै देवाय इत्यर्थः। एकारलोपेन एतच्छब्दविज्ञानात् एतदर्थप्रत्ययो भवति, एकस्मै देवाय हविर्दातव्यमिति। न च पूर्वस्मिन्नाघारे श्रौतं विज्ञानमङ्गभूतमस्ति, तच्च कल्पयितव्यं स्यात्, श्रौतं विज्ञानमङ्गभूतं भवति इति, तच्च हिरण्यगर्भः समवर्त्तताग्रे इत्येतेन कर्त्तव्यमिति, कल्पनायां न प्रमाणमस्ति। इदं हि वाक्यं मन्त्रकार्य्यविशेषस्य विधायकं, न मन्त्रकार्य्यसामान्यस्य नियामकम्। सामान्यं मन्त्रकार्य्यं पाक्षिकम्। तस्मिन् पाक्षिके मन्त्रकार्य्ये विशेषविधानमिति चेत्। आनर्थक्यम्, असत्पक्षपरिग्रहश्च, उपदेशस्य चार्थवत्त्वं, जौहवाघारविषयत्वात्। तस्मादुत्तरस्य गुणविधिरिति।

यदुक्तं, प्रजापतिवचनोऽयं मन्त्र इन्द्रमभिवदितुं न शक्नो भविष्यतीति, न एतदेवं, यथा हि प्रजापतिरेक इति संस्तुतः प्रजापतिशब्दत्वात्, एकोऽसौ प्राक् प्रजोत्पत्तेरिति

प्रजापतिरेक आसीदित्युच्यते, एवमिन्द्रोऽपि, ऐश्वर्य्यवचनत्वात् इन्द्रशब्दस्य, सर्वमुत्पादयितुमयम् अजमिति संस्तूयते, क ईं स्तवत् कः पृणात् को यजाति यदुग्रमिन्मघवा विश्वहावेत्। पादाविव प्रहरन्नन्यमन्य' कृणोति पूर्वमपरं शचीभिः ( ऋ० ६ म० ४७ सू० ) इति। तथा क उ नु ते महिमनः समस्यास्मत् पूर्वं ऋषयोऽन्तमायुः। यन्मातरञ्च पितरञ्च साकमजनयथाः स्तन्वाः स्वायाः ( ऋ० १० म० ५४ सू० ) इति। क ईं स्तवत् कः पृणात् को यजाते इति ऐन्द्रे सूक्ते वचनादैन्द्री ऋक्। क एनं शक्नोति स्तोतुं, को वाऽस्मै ददाति को वा यजतीति सर्वज्ञानवक्लृप्तिः, अयमेव सर्वमिदं करोति, यथा गच्छन् कश्चित् पूर्वपादमपरं करोति अपरञ्च पूर्वम्, एवमयमिदं सर्वं करोति इति। अयं चेत् सर्वं करोतीति, प्राक् करणादेकः। तथा, क उ नु ते महिमनः समस्य इति, केऽस्य सकलस्य महिम्नः अस्मत्पूर्वेऽप्यृषयोऽन्तं प्राप्तुं शक्नुवन्ति, यन्मातापितरावपि स्वस्माच्छरीराज्जनयसीति मातापितृभ्यामपि पूर्वः, किमुत अन्यस्माज्जनादिति सिद्धमेकत्वमस्येति। सोऽपि प्राक् सर्वोत्पत्तेः, एक एव। अत इन्द्राभिधायिन्येषा ऋक्, तस्मादविरोधः।

## विध्यतिदेशात् तच्छ्रुतौ विकारः स्यात् गुणानामुपदेश्यत्वात् ॥ १६ ॥ (१ यु०)

गुणविधिरयमुपदिश्यते, आघारश्रुतौ, स तन्मन्त्रस्य विकारः स्यात्, उपदेश्यो हि मन्त्रविशेषोऽत्र उत्तरस्मिन्ना-

घारे, यत् श्रौतं मन्त्रविशेषविज्ञानम्, ऊर्द्ध्वोऽध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान् बृहद्भावी हि मधोर्ष्टं तस्य स्वाहा इति, तदङ्गभूतमुपकारकस्य विज्ञानस्य साधनमिति इन्द्राय हविर्दातव्यम्, इह तु हिरण्यगर्भं इति विज्ञानं श्रौतं, श्रौतस्य प्राकृतस्य विज्ञानस्य कार्य्यं विधातुमर्हति सामर्थ्यात्, इदं दधि घृतं शाकम् इमे शालयः, देवदत्तो भोजयितव्यः देवदत्तवद् यज्ञदत्तस्तैलेन इति भोजने तैलमुपकारकं श्रूयमाणं, यस्य प्राकृतस्य कार्य्यमभिनिर्वर्त्तयितुं शक्नोति, तस्य कार्य्ये विनियुज्यते घृतस्य। सामान्यं हि अस्य स्नेहनसामर्थ्यं घृतेन इति। इहापि मन्त्र उच्चार्य्यमाणः प्राकृते श्रौतविज्ञाने विशेषमुत्पादयति, तस्योत्तरस्मिन्नङ्गभूतं तदर्थविज्ञानस्य साधकं, न पूर्वस्मिन्। तस्मादुत्तरस्य गुणविधिरिति।

पूर्वस्मिंश्चामन्त्रत्वदर्शनात् ॥ १७ ॥ (२ यु०)

पूर्वस्मिंश्चाघारे अमन्त्रत्वमेव दर्शयति, स्वाहेति करोति, मन्त्रश्च न आहेति। तस्मादप्युत्तरस्य गुणविधिरिति ॥ (१०।३।२अ०) ॥

---

चातुर्मास्येषु सौमिष्यासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणम्।

संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १८ ॥ ( पू० )

सन्ति चातुर्मास्याः सोमाः, न श्रूयते, उत्करे वाजिनमासादयन्ति, परिधौ पशुं नियुञ्जन्ति इति। तत्रैषोऽर्थः सांशयिकः, किम् एतत् आसादनान्तरं नियोजनान्तरञ्च, उत प्राकृतयोरासादननियोजनयोर्गुणविधिः इतरश्चेतरश्च ? इति। तत्रैतत्तावन्नः परीक्ष्यं, किं धर्ममात्रमासादनं नियोजनञ्च, उत दृष्टकार्य्यम् ? इति। यदि धर्ममात्रं, ततः क्रियान्तरं, अथ दृष्टकार्य्यं ततो गुणविधिरिति। तत उभयं सन्दिग्धमित्युभयं संहृत्य परीक्ष्यते, किं धर्ममात्रमितरच्चेतरच्च क्रियान्तरं, उत दृष्टकार्य्यं, गुणविधिः ? इति।

किं प्राप्तम् ?। तुङ्गत्वात् तीक्ष्णाग्रत्वाच्चोत्करस्य दृष्टकार्य्यमासादनं न शक्यं कर्त्तुं, तथोपशयत्वात् परिधेर्दृष्टकार्य्यकं नियोजनमशक्यं कर्त्तुं, तस्मात् धर्ममात्रम्। यथा सौत्रामणीप्रकरणे ब्राह्मणस्य मूर्द्धनि आसादयति इति धर्ममात्रमासादनम्, एवमिहापि धर्ममात्रं चेत् क्रियान्तरं, तथा च सति आसादनं नियोजनञ्च विधायिष्यते, तत्र श्रुत्या विहितं भविष्यति। इतरथा वाक्यं विधायकं स्यात्। अपि च असत्यर्थे आसादननियोजने गुणविधिलक्षणार्थे न भविष्यतः, भवत्पक्षे तु गुणविधिं लक्षयेयाताम्। तस्मात् क्रियान्तरम् इतरदितरच्च, तस्य विधायकत्वात्, स्वपदगतस्य भावप्रत्ययस्य पदोत्तरस्य न यथा आघारे गुणविधिः, तथा अस्मिन् संस्कारे आसादननियोजनाख्ये।

## प्रकृत्यनुपरोधाच्च ॥ १८ ॥ ( यु० )

एवञ्च प्राकृतस्य धर्मस्य प्रापकश्चोदको नोपरोत्स्यते, वेद्यां हवींष्यासादयति, यूपे पशुं नियुञ्जन्ति इति। तस्मादपि क्रियान्तरम् इति।

## विधिस्तु तत्र भावात् सन्देहे यस्य शब्दस्तदर्थः स्यात् ॥ २० ॥ ( सि० )

तुशब्दः पक्षं व्यावर्त्तयति। नासादनान्तरं नियोजनान्तरं चेति, किन्तर्हि ? प्राकृतयोरासादननियोजनयोर्गुणविधिः, तत्र एतदर्थ्यते, दृष्टकार्थ्यके आसादननियोजने इति। कुतः ?। कार्य्यस्य दृष्टत्वात्, आसादनं समीपानयनं, तस्य होमनिर्वृत्तिर्दृष्टं प्रयोजनं, नियोजनस्यापि पश्वनपगमः, एवं चेत्, तस्माद् गुणविधिरितरस्य इतरस्य। कुतः ?। विधेः आसादननियोजनविधेः तत्र दृष्टत्वात्, चोदकेन तच्च प्राप्तत्वात्। सन्देहे, तत्र गुणविधिः कर्मान्तरमिति, न कर्मान्तरविधानं युक्तम्, अज्ञातस्य हि ज्ञापनं विधिः, ज्ञाते च चोदकेन आसादननियोजने। तस्मात् यस्य गुणस्य चोदकः शब्दः तदर्थतया उच्चारणं स्यात्। तस्माद्गुणविधिरिति। अथ यदुक्तं, श्रुतिरेवंविधायिका, त्वत्पक्षे तु वाक्यम् इति। उच्यते, यद्यपि वाक्यं, तथापि अल्पीयसी अदृष्टानुमानकल्पना भविष्यतीति, यावता केवलस्य गुणस्य विधीयमानस्य, न गुणस्य कर्मसहितस्य इति।

संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥ (आ० नि०)

अथ यदुक्तं, तीक्ष्णाग्रत्वादुत्करस्य, उपशयत्वाच्च परिधेः, दृष्टकार्य्ये आसादननियोजने न शक्यते कर्त्तुम् इति। अत्रोच्यते, यथा शक्येते उत्करे च परिधौ च आसादन-नियोजने कर्त्तुं, तथा करिष्यते, पृथ्वग्रमुत्करं करिष्यामः, महान्तञ्च परिधिम्। अतः पृथ्वग्रतया स्थविम्ना च गुणेन संयोगादासदननियोजनसंस्कारसामर्थ्यं भविष्यति। तस्मान्न कर्मान्तरम् इति।

विप्रतिषेधात् क्रियाप्रकरणे स्यात् ॥ २२ ॥ (यु० नि०)

अथ यदुक्तं, यथा सौत्रामणीप्रकरणे धर्ममात्रमासा-दनं, एवमिहापि इति। तत्परिहर्त्तव्यं, अत्रोच्यते, सौत्रामणीप्रकरणे विप्रतिषेधान्न शक्यं दृष्टकार्य्यकमासादनं कर्त्तुं, तस्मात् क्रियामात्रमदृष्टकार्य्यकं सौत्रामणीप्रकरणे स्यात्, नत्विह दृष्टकार्य्यकमशक्यम्। तस्माद् गुणविधिः॥ (१०।३।२ अ०)॥

---

अग्निचयने प्राकृतवैकृतीभयदीक्षाहुतीनामनुष्ठानाधिकरणम्।

षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुति-संयोगात् ॥ २३ ॥ (पू०)

अस्ति अग्निः, य एवं विद्वानग्निं चिनुते इति। तत्र

दीक्षाहुतयः, प्राकृत्यो वैकृत्यश्च, आकूतिमग्निं प्रयुजं स्वाहा मनो मेधामग्निं प्रयुजं स्वाहा चित्तं विज्ञातमग्निं प्रयुजं स्वाहा वाचो विधृतिमग्निं प्रयुजं स्वाहा प्रजापतये मनवे स्वाहा अग्नये वैश्वानराय स्वाहा विश्वे देवस्य नेतुर्मर्त्तो वृणीत सख्यम्। विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा (तै० स० ४।१।८ अ०) इति प्राकृत्यः। तथा वैकृत्यः, आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहादीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा आपो देवीर्बृहतीर्विश्व-शम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा विधातु स्वाहा विश्वे देवस्य नेतु-मर्त्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा (तै० स० १।२।२ अ०) इति। एताः प्रकृत्य समामनन्ति, षड्भि-र्दीक्षयति इति। तत्र संशयः, किं वैकृतीनां प्रयोगः, प्राकृतीनां निवृत्तिः, अथ वा समुच्चयः प्राकृतीनां वैकृती-नाञ्च? इति। किं प्राप्तम्? षड्भिर्दीक्षयतीति तासां प्राकृतीनां आहुतीनां मन्त्रविकारः स्यात्, वैकृतैर्मन्त्रैः प्राकृता निवर्त्तेरन्, श्रुतिसंयोगात्, प्रत्यक्षश्रुतिसंयोगो विकृतानां, षट् वैकृता मन्त्राः, षट्शब्देन वैकृता गृह्यन्ते। तस्मात् प्राकृतानां बाधो न समुच्चय इति।

## अभ्यासात्तु प्रधानस्य ॥ २४ ॥ (सि०)

तुशब्दः पक्षं व्यावर्त्तयति, प्राकृतानां बाध इति, न बाधः, समुच्चयः। कुतः?। सम्भवात्, यत्र हि प्राकृत-

वैकृतयोर्युगपत् न सम्भवः, तत्र वैकृतेन प्राकृतं बाध्यते, समुच्चये हि आवृत्तिः स्यात् प्रधानस्य इति। यत्र पुनरावृत्तिः श्रुता कर्त्तव्यैव, तत्र नैष दोषो भवति, आवृत्तिः प्राप्नोति इति। इह चावृत्तिः श्रूयते प्रधानस्य होमस्य, द्वादश जुहोति इति। अतः सम्भवात् समुच्चय इति।

## आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥ (आ०)

नैतदस्ति, समुच्चय इति, प्रत्यक्षश्रुतैर्वैकृतैश्चोदकप्राप्ताः प्राकृता बाध्येरन्। अथ यदुक्तं, सम्भवे सति न बाधितव्याः इति। अत्रोच्यते, नास्ति सम्भवः। कथम्?। वैकृताः षट् मन्त्रा अग्नौ प्राकृतेषु होमेषु प्रत्यक्षेण श्रवणेन विधीयन्ते, ते चेद्धोमाः, वैकृतैर्मन्त्रैर्भवितव्यम्, अभ्यासे सति पुनस्त एव होमा भवन्ति। ते चेद्धोमाः, वैकृतैरेव मन्त्रैर्भवितव्यम्। तस्मात् आवृत्त्या मन्त्रकर्म स्यात्। अतः प्राकृता बाध्येरन्नेवेति।

## अपि वा प्रतिमन्त्रत्वात् प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥२६॥ (आ० नि०)

अपि वेति पक्षव्यावृत्तिः। प्रतिमन्त्रं आहुतयो भवन्ति। अभ्यासाच्च द्वादशता प्राकृता अपि मन्त्राश्चोदकेन प्राप्ताः, वैकृता अपि श्रवणेन। सर्वाङ्गग्राही च प्रयोगवचन उभयान् सङ्गृह्णाति। समुच्चयासम्भवे च बाधविकल्पौ, न सम्भवति समुच्चये। बाधे हि चोदकप्राप्तिरपहूयेत। न च होमनिर्वृत्तौ निष्कृष्टा वैकृताः श्रूयन्ते,

तेन होमश्चोदापतितस्ततो वैकृताश्च साधका इत्यध्यवसेयम्। दीक्षणे हि ते वैकृताः श्रूयन्ते, षड्भिर्दीक्षयति इति। होमप्रयोगवचनस्तु प्रदानार्थान् स्वाहाकारान्तान् सामर्थ्येन सन्निहितान् गृह्णाति। उभये च प्राकृता वैकृताश्च सन्निहिताः। तस्मान्न विनिगमनायां हेतुरस्ति, इमान् सङ्गृह्णाति इमान्न इति। न च प्रधानावृत्तिरिह दोषो भवति, इत्युक्तमेव, तस्मात् प्राकृतानां मन्त्राणामहानम्। अपि च अन्यायश्च कृतेऽभ्यासः, सकृद्वैकृताः मन्त्राः पठ्यन्ते, तैर्दीक्षितः सम्पादयितव्य इति, सकृत्सम्पादिते तैर्दीक्षिते कृतेऽर्थे पुनरभ्यासो न न्याय्यः। तस्मादपि प्राकृतानामहानम् इति।

## पौर्वापर्य्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥ (१ यु०)

अपि च पूर्वापरशब्दौ भवतः, षट् पूर्वान् जुहोति षडुत्तरान् जुहोति इति। न च वैकृतानां केवलानामभ्यस्यमानानां पूर्वापरता उपपद्यते, नैमित्तिकत्वात्, पूर्वनिमित्तो हि उत्तरशब्दः उत्तरनिमित्तश्च पूर्वशब्दः। तस्मादपि प्राकृतानामहानमिति।

## तत्पृथक्त्वञ्च दर्शयति ॥ २८ ॥ (यु०)

इतश्च पश्यामः, न निवृत्तिः, समुच्चय इति। कुतः ?। तासामाहुतीनां पृथक्त्वं दर्शयति, उभयीर्जुहोति आग्निकीश्चाध्वरिकीश्च इति। यदुभयेषां मन्त्राणां समुच्चयस्तत-

स्तेषामाग्निकत्वात् आध्वरिकत्वाच्च भवत्येष निर्देशः, इतरथा सर्वा एवाग्निक्यो भवेयुः, तच्च पृथक्त्वं नोपपद्येत। भवति च पृथक्त्वं, तस्मादनिवृत्तिः, समुच्चय इति।

**न चाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥ (३यु०)**

इतश्चानिवृत्तिः, समुच्चय इति। कुतः?। व्यपदेशात्, व्यपदेशो भवति, अध्वरस्य पूर्वमथाग्नेरुपाग्नि ह्येतत्कर्म यदग्निकर्म इति, पूर्वमध्वरस्य अथाग्नेरिति व्यपदेशः समुच्चयेऽवकल्पते, नासति विशेषे। तस्मात् समुच्चय इति ॥ (१०।३।४ अ०)॥

---

पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणम्।

**अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥ (पू०)**

अस्ति पुनराधानं निमित्ते श्रूयते, भाग्ययशः श्रीकामानां पुनरादधीत योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयेत स पुनरादधीत इति। तत्र श्रूयते, पुनरुत्स्यूतं वासो दक्षिणा पुनरुत्सृष्टोऽनड्वान् इति। तथा, आधाने दक्षिणा, एका देया षट् देया द्वादश देयाश्चतुर्विंशतिर्देया शतं देयं सहस्रं देयमपरिमितं देयम् इति। तत्र संशयः, किं पुनराधानेऽग्न्याधानदक्षिणानामनिवृत्तिः, समुच्चयः। अथाग्न्याधेयदक्षिणानां निवृत्तिः? इति। किं प्राप्तम्?, आग्न्याधेयस्य नैमित्तिके पुनराधेये दक्षिणादानमधिकं

स्यात्, प्राकृतीनामनिवृत्तिः समुच्चय इति । कुतः ? । एकस्मिन् वाक्ये उभय्यो दृश्यन्ते, उभयीर्ददाति, आग्न्याधेयिकीश्च पुनराधेयिकीश्च इति । तस्मादनिवृत्तिः, समुच्चय इति ।

## शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥ (यु०)

इदं पदोत्तरं सूत्रम् । कथं चोदकप्राप्तस्य, प्रत्यक्षश्रुतस्य समुच्चयो भविष्यति ? । अत्रोच्यते, शिष्टत्वात् इतरासां, प्राकृतीनां वचनप्रामाण्यात् यथास्थानं समुच्चयो भविष्यतीति । प्रत्यक्षं हि इदमनुशासनम्, आग्न्याधेयिकीर्दत्वा पुनराधेयिकीर्ददाति इति । तस्मान्न बाधः प्राकृतीनां, समुच्चय इति ।

## विकारस्त्वप्रकरणे हि काम्यानि ॥३२॥ (सि०)

तुशब्दः पक्षं व्यावर्त्तयति, न तु समुच्चयो विकार इति । कुतः ? । काम्यं ह्येतत् पुनराधेयं श्रूयते, तद् असति प्राकृते प्रकरणे आम्नानमवकल्पते न सति, यत् तत्रोच्यते वैकृतं, तत् प्राकृतं बाधत इत्यर्थः । काम्यो वा नैमित्तिको वा अर्थो नित्यमर्थं विकृत्य निविशते, यथा व्यामये मुद्गौदनभोजनं निवातशय्या च इति नित्यं शय्यासनं भोजनञ्च विकरोति । प्रत्यक्षं हि वैकृतम्, आनुमानिकञ्च प्राकृतं, तस्माद् वैकृतेन बाध्यते । अथ यदुक्तं, वचनप्रामाण्यात् प्राकृत्यो भविष्यन्ति इति । अत्रोच्यते, ता उभयीर्ददाति इति नात्र विधिविभक्तिरस्ति, वर्त्तमा-

नापदेशोऽयम्। प्रमाणान्तरमादायापि अयमर्थः प्रापितः, उभयीर्दक्षिणा ददाति, अग्न्याधेयिकीः पौनराधेयिकीश्च, अग्न्याधेये अग्न्याधेयिकीः, पुनराधेये पौनराधेयिकीः, तदेतत् भूतानुवादमात्रम्। तस्मात् प्राकृतीनां निवृत्तिरिति।

## शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥३३॥ (यु०)

इतश्च प्राकृतीनां निवृत्तिः। कुतः। निवृत्त्याशङ्कादर्शनात् शङ्कते हि निवृत्तेः इति गम्यते। कथम्?। उभयत्वं हि श्रूयते, यद् वैकृतीर्ददाति दक्षिणा उभय्योऽपि तेन दक्षिणाः प्रत्ता भवन्ति। ननु उभय्योऽपि प्रदीयन्ते, यत उभय्योऽपि प्रत्ता भवन्तीत्याह। अग्न्याधेयिकी हि अग्न्याधेये, पुनराधेयिक्यः पुनराधेये। तस्मात् प्राकृतीनां निवृत्तिरिति॥ (१०।३।५ अ०)॥

---

आग्रयणे वासोवत्साभ्यामन्वाहार्य्यस्य निवृत्त्यधिकरणम्।

## वासो वत्सश्च सामान्यात् ॥ ३४ ॥

आग्रयणं भवति, हुताद्याय यजमानस्यापराभवाय नवानामैन्द्राग्नः पुराणानामाग्नेयः सौम्यः श्यामाकः वैश्वदेवः पयसि चरुः द्यावापृथिवीय एककपालः इति। तत्र श्रूयते, वासो दक्षिणा वत्सः प्रथमजो दक्षिणा इति। अस्ति तु प्रकृतौ अन्वाहार्य्यो दक्षिणेति, स इह चोदकेन प्राप्यते। तदत्र संशयः, किं वासो वत्समन्वाहार्य्यस्य निव-

र्त्तकम् ? उत अनिवर्त्तकम् ? इति । किं प्राप्तम् ? । चोदकानुग्रहात् विरोधाभावाच्च अनिवर्त्तकम् इति ।

एवं प्राप्ते ब्रूमः, वासो वत्सश्च सामान्यात् । उक्तमधस्तात्, आधानदक्षिणानां पुनराधेये निवृत्तिरिति, चशब्देनान्वादेशः क्रियते, अन्वाहार्य्यस्य निवृत्तिः । कुतः ? । कार्य्यसामान्यात्, दक्षिणाकार्य्ये अन्वाहार्य्यः प्रकृतौ, इह वासो वत्सं तस्मिन् कार्य्ये, दक्षिणाशब्दश्रवणात् । तस्मान्न समुच्चयः, निवृत्तिरिति । प्राप्तिर्वा उत्तरविवक्षया क्रियते इति ॥ (१० । ३ । ६ अ० ) ॥

---

आग्रयणे वासो वत्सयोरन्वाहार्य्यधर्म्मानुष्ठानाधिकरणम् ।

## अर्थापत्तेस्तद्धर्म्मा स्यान्निमित्ताख्याभिसंयोगात् ॥ ॥ ३५ ॥

तत्रैव वाससि वत्से च संशयः, अन्वाहार्य्यधर्म्माः कर्त्तव्याः, उत न ? इति । किं प्राप्तम् ? न तावत् न्याय उच्यते, कर्त्तव्या इति, तेनाकर्त्तव्या इति मन्यामहे इति ।

एवं प्राप्ते ब्रूमः, अर्थापत्तेस्तद्धर्म्मा वत्सः स्यात्, तद्धर्म्मकञ्च वासः साधनविशेषनिबन्धना हि ते धर्माः, नान्वाहार्य्यनिबन्धनाः । तस्माद् अन्यस्मिन्नपि तत्कार्य्यापन्ने भवितुमर्हन्ति इति । कथं पुनर्वासो वत्सं तत्कार्य्यापन्नम् ? इति । निमित्ततया आख्याय परिक्रयेण दक्षिणेति तयाऽभिसंयोगो भवति, वासो दक्षिणा वत्सः प्रथ-

मजो दक्षिणा इति। तस्माद्वासो वत्सावन्वाहार्य्यधर्मकौ स्याताम् इति ॥ (१०।३।७ अ०)॥

---

आग्रयणे वत्से पाकाभावाधिकरणम्।

## दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

तत्रैव वत्सः प्रथमजो दक्षिणा इति। तत्रैतत् समधिगतं, अन्वाहार्य्यधर्माः कर्त्तव्याः इति। तदत्र संशयः, किं वत्से पाकः कर्त्तव्यः, उत न? इति। किं प्राप्तम्? चोदकानुग्रहात् शक्यत्वाच्च कर्त्तव्यः इति।

एवं प्राप्ते ब्रूमः, वत्सस्य दाने पाको न कर्त्तव्यः, अपक्को हि वत्सो वत्स एव, वत्सश्च श्रूयते न मांसं, परिक्रयाय च श्रूयते, न पुरुषसंस्काराय। तस्माच्चोदकः पाकं न प्रापयति, तद्यदि पाकः क्रियेत, अश्रुतः प्राणिवधः आचारविरुद्धोऽनुष्ठीयेत। तस्मात् पाको न कार्य्यः॥ (१०।३।८ अ०)॥

---

आग्रयणे वाससि पाकाभावाधिकरणम्।

## पाकस्य चान्नकारितत्वात् ॥ ३७ ॥

तत्रैव श्रूयते, वासो दक्षिणा इति। तत्रायमर्थः समधिगतः, अन्वाहार्य्यधर्माः कर्त्तव्या इति, अथ पाकः कर्त्तव्यः, न? इति संशयः। अर्थापत्तेः कर्त्तव्यः। इति

प्राप्ते ब्रूमः, न कर्त्तव्यः, अन्नकारितत्वात् इति, अन्नकारितो हि पाकः, न च वासोऽन्नं, न तत्र पाकः शक्यते कर्त्तुम्। तस्मात् तत्र पाको न कर्त्तव्य इति॥ (१०।३।९ अ०)॥

---

आग्रयणे वासो वत्सयोरभिघारणाभावाधिकरणम्।

## तथाभिघारणस्य॥ ३८॥

आग्रयणे श्रूयते, वासो दक्षिणा वत्सः प्रथमजो दक्षिणा इति। तत्रायमर्थः समधिगतः, अन्वाहार्य्यधर्मा वाससि वत्से च कर्त्तव्या इति। अथायमर्थः सांशयिकः, किमभिघारणं कर्त्तव्यं, न? इति। किन्तावत् प्राप्तम्? अर्थापत्तेः कर्त्तव्यम् इति।

एवं प्राप्ते ब्रूमः, तथाभिघारणस्य। किम्?। अक्रियेति, अभिघारणं हि अन्वाहार्य्ये स्वादिम्ने क्रियते, स्वादिमा हि ओदनस्य परिक्रये उपकरोति, न च, वाससि वत्से च स्वादिम्ना प्रयोजनम्। तस्मात् तत्राभिघारणं न स्यात् इति॥ (१०।३।१० अ०)॥

---

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम्।

## द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात् स्यात्॥ ३९॥ (१म पू०)

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेत

इति। तत्रैवाम्नायते, गौश्चाश्वश्च अश्वतरश्च गर्द्दभश्च अजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा इति। तत्र संशयः, किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतम्, उत एकस्य द्रव्यस्य? यदा एकस्य, तदा किमनियमो यस्य कस्यचित्, उत, माषाणाम्? अथ वा सर्वसम्पादनी इयं सङ्ख्या, उत, एकजातीयस्य?। यदा एकजातीयस्य, तदा किम् अनियमः, यस्य कस्यचित्, उत, पशूनाम्?। यदा पशूनां, तदा किमनियमः, येषांकेषाञ्चित्, उत, गवाम्? इति, एते पक्षा भविष्यन्तीति। किन्तावत् प्राप्तम्?। द्रव्याणां विधीयमानानां सन्निधौ। केषां द्रव्याणाम्?। गवादीनां, क्व विधीयमानानाम्?। दक्षिणासम्बन्धे सङ्ख्या समाम्नाता, तस्य द्वादशशतं दक्षिणा इति, तेषां गवादीनां एकैकस्य सङ्ख्या स्यात्। कुतः?। गुणतः सङ्ख्या विधीयते, गवादीनि प्रधानतः। कथम्?। नैवमभिसम्बन्धः क्रियते, द्वादशशतं स्यादिति, कथन्तर्हि द्वादशशतं तस्य इति। एवं तस्य ग्रहणमर्थवद् भवति, इतरथा तद् अनर्थकं चानुवादो वा स्यात्, एकवचनमपि प्रकृतापेक्षं लक्षणया अनूद्येत। प्रधानसन्निधौ च गुणः शिष्यमाणः प्रतिप्रधानं भिद्येत, इति। अस्ति चैतया सङ्ख्यया प्रयोजनं, गवादीनि द्रव्याणि तत्सङ्ख्यानि कर्त्तव्यानि। तत्र न गम्यते विशेषः, किमेतत्सङ्ख्यं कर्त्तव्यं, किं न? इति। यदेव द्रव्यं नैतत्सङ्ख्यं स्यात्, तत् प्रतिश्रुति बाध्येत। तस्मादेकैकमेतया सङ्ख्यया सम्बद्धव्यम् इति।

समत्वात् तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥ ( २य पू० )

तुशब्दः पक्षं व्यावर्त्तयति। तस्य तस्य द्वादशशतम् इति, न एतदेवमेकस्य कस्यचित् द्वादशशतं स्यात्। कुतः ?। समत्वाद् गुणानां, गवादयोऽपि हि दक्षिणा-सम्बद्धाः, सङ्ख्यापि। न गवादीनां सङ्ख्या विधीयते, दक्षिणा तु सङ्ख्याविशिष्टा चोद्यते, न गवादयः। कुतः ?। सङ्ख्याया दाक्षिण्येन अनभिसम्बन्धे सति अनियत-सङ्ख्यानां गवादीनां दक्षिणासम्बन्धे नानर्थक्यमेव सङ्ख्यायाः स्यात्। सङ्ख्येयसामानाधिकरण्याच्च तच्छब्दस्य बहुवचनं प्रसज्येत। गवादिषु तस्य द्वादशशतमिति चैकवचनं न स्यात्। तस्माद् यस्य कस्यचित् परिक्रयसाधनस्य द्रव्यस्य एतस्यां सङ्ख्यायां क्लृतायामेतत्सङ्ख्यः परिक्रयः कृतो भवति। तस्मादेकस्य सङ्ख्या, नैकैकस्य। एवमेक-वचनश्रवणं युक्तरूपं भविष्यति।

ननु लक्षणत्वात् तस्य शब्दस्याविवक्षितं वचनम्। उच्यते, अविवक्षितेऽपि वचने या सङ्ख्या अनूद्यते, तेन वचनेन भवितव्यम्। यथा लक्षणत्वे नाप्युच्यमाने ब्राह्मणजातीयो न हन्तव्य इति न द्विवचनान्तेन निर्देशो भवति, ब्राह्मणौ न हन्तव्यौ इति। आह, जात्याख्यायामेकस्मिन् बहु-वचनं भवति, बहुषु वा एकवचनं भवति, न तु एकस्मिन् बहुषु च द्विवचनं भवति, तेन अत्र बहुवचनान्तेन निर्देशः, एकवचनान्तेन वा बहुषु निर्देशो भवति। अत्रोच्यते,

जात्याख्यायामेतदेवं भवति, न च तच्छब्देन जातिरभिधीयते, सन्निहितव्यक्तिवचन एष भवति । तस्मादेकस्य कस्यचिल्लङ्ग्रा इति ।

## यस्य वा सन्निधाने स्याद् वाक्यतो ह्यभिसम्बन्धः ॥ ४१ ॥ (३य पू०)

इदं पदोत्तरं सूत्रं, यदा एकस्य सङ्ख्रासम्बन्धः, तदा अनियमः, यः कश्चिद् विशेषाश्रवणात् इति ।

एवं प्राप्ते ब्रूमः, यस्य वा सन्निधाने स्यात्, यस्य शब्दस्य सन्निधाने सङ्ख्राशब्दः उच्चरितः, सोऽर्थः सङ्ख्राविशिष्टः प्रतीयेत, अनन्तरमुच्चरितेन हि सहैकवाक्यता भवति । कुतः ? । अनन्तरसम्बद्धं हि विशेषणं विज्ञानं विशेष्टुं शक्नोति, न हि व्यवहितम् । व्यवहिताश्च गवादयो माषैः, वाक्यञ्च प्रकरणाद् बलीयः । तस्मान्माषाः सङ्ख्रया सम्बध्येरन्निति ।

## असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात् सर्वाधिकारः स्यात् ॥ ४२ ॥ ( ४य पू० )

तुशब्दः पक्षं व्यावर्त्तयति । माषाः सङ्ख्रायुक्ता इति, नैतदेवं, सर्वव्यापिनी सङ्ख्रा स्यात्, सर्वैर्गवादिभिः सम्बध्येत ; असंयुक्ता केवलैर्माषैः सङ्ख्रा, तुल्यवदितराभिः द्रव्यश्रुतिभिर्माषाः श्रूयन्ते । कथम् ? । तिलाश्च माषाश्चेतिचशब्देन तिलैः सहिता माषा इति गम्यते, गवादिभिः सहितानां सङ्ख्रासम्बन्धः, चशब्दश्रुतिरर्थान्तर-

सम्बन्धमेषामाह। चशब्दश्रवणस्यैतत्सामर्थ्यं, यस्माच्चशब्दः पर उच्चार्य्यते, तस्यार्थान्तरसम्बन्धं श्रुत्यैवाह, न वाक्येन। यदि हि वाक्येन स्यात्, पुरस्तादप्युच्चार्य्यमाण एतमर्थं कुर्य्यात्, सङ्ख्या तु वाक्येन सम्बध्यते। यदि च पूर्वं न चार्थोऽवकल्पेत, चशब्दश्रवणमनर्थकं स्यात्, न हि असावुत्तरकाले सम्बध्यते सङ्ख्यासम्बन्धे अभिनिर्वृत्ते, तस्य द्वादशशतं चेति अन्य एवावगम्येत, द्वादशशतमन्यच्च किञ्चिदिति, न च तदन्यत् किञ्चिदुच्चार्य्यते। तस्मात् पूर्वं चयोगः, पश्चात् सङ्ख्यासम्बन्धः, समर्थतराणि समानविभक्तीनि, दुर्बलो विभक्तिः।

अपि च समानविभक्तीनि समर्थतराणि, तेषां हि आशुतरा आवृत्तिः, विलम्बिता विविभक्तीनां, स्वार्थे समानविभक्तीनि समर्थतराणि प्रथमान्तानि भवन्ति। परपदार्थं षष्ठ्यन्तो विशिनष्टि। तस्मात् समुच्चितानि वा इतरेतरयुक्तानि वा सङ्ख्येयानि सङ्ख्यया सम्बध्यन्ते। समाहारो वैषां सङ्ख्यया युक्तः। तस्मात् सर्वैः सङ्ख्या सम्पादयितव्या। किमेवं भविष्यति ?। सङ्ख्यासम्बन्धे न कश्चिद्वर्ज्जितो भविष्यति, विनिगमनायां हेत्वभावे यमेव सङ्ख्या सम्बन्धो वर्जयेत्, तत्रैव प्रत्ययो बाध्येत। तस्माद्गवादिराशिः सङ्ख्ययैतया सम्बध्येत इति।

असंयोगाद्विधिश्रुतावेकजाताधिकारः स्यात् श्रुत्याकोपात्क्रतोः ॥ ४३ ॥ ( सि० )

नैतदस्ति, सर्वसम्पादनीया सङ्ख्या इति, असंयोगा-

द्विधिश्रुतौ सर्वसम्पादने सम्बन्धो नास्ति, न श्रूयते, गवादिराशिः सङ्ख्या भवतीति, न गवादिराशिः शब्देन निर्दिश्यते, यः सर्वनाम्ना प्रतिनिर्दिश्येत, गवादयस्तु शब्देनोक्ताः, तेन ते सर्वनाम्ना प्रतिनिर्देशमर्हन्ति, न चात्र गवादीनां प्राधान्यमित्युक्तं, दाक्षिण्येन हि सङ्ख्या सम्बध्यत इति सङ्ख्याविशेषणं सर्वनामशब्दः सङ्ख्यां विशेष्टुमुपादीयते। तत्रैकवचनं विवक्षितमेव, तत्रैषां नानाजातीयानां निर्दिष्टानामन्यतमदेकं प्रतिनिर्देशेन सङ्ख्याविशेषणमुपादीयते। तस्मान्नानाजातीयानां निर्दिष्टानामेकं स्यात्, स एकजातीय एव भवति। तस्माद् एकजाताधिकारः, इति सूचितम्। किमेवं भविष्यति ?। एवमेकश्रुतिर्न कोपिता भविष्यति, इतरथा, वाक्येन द्रव्यस्य भवन्ती प्रवृत्तिविशेषमकुर्वती नाप्रवृत्तिविशेषकरा प्रकरणवशेन क्रतोः कल्पिता भविष्यति, तस्य क्रतोर्द्वादशशतं दक्षिणा इति। तस्मादेकजातीयस्य द्वादशशतं दक्षिणा इति।

## शब्दार्थश्चापि लोकवत् ॥ ४४ ॥ (यु०)

अपि च लोकवदेतत् द्रष्टव्यं, लोके हि निर्विशेषिते सङ्ख्याशब्दे उच्चरिते, एकजातीये प्रत्ययो भवति। कुतः ?। अन्यथा व्यवहारानुपपत्तेः, असति एकस्मिन् जातिविशेषे, सर्वत्रान्यैः सह परार्द्धसङ्ख्या निविष्टा, परार्द्धस्य चावान्तरसङ्ख्याभिः संव्यवहारः क्रियते। येषामेकेन केनचित् सम्बन्धः, तेषां तमेकं सम्बन्धिनमपेक्ष्य सङ्ख्या निविशते। स तत्रैकः सम्बन्धी वक्तव्यः, प्रकृतो वा ग्रहीतव्यः, अर्थाद्वा

य आपद्येत, स उपादेयः । इह च प्रकृता नानाजातीया-स्तेषामन्यतमः सङ्ख्यया सम्बद्धः स्यात् इति । यथा, शत-मास्यां दीयताम् इति, एकजातीयानां शतं, न भिन्न-जातीयानां, यथा द्रव्यं गुणः कर्मावयव इत्येवमादीनाम् ॥ (१०।३।११अ०) ॥

---

तस्य द्वादशशतं दक्षिणा इत्यनेन पशुगवसङ्ख्याभिधानाधिकरणम् ।

सा पशूनामुत्पत्तितो विभागात् ॥४५॥ (१ सि०)

एकजातीयस्य सङ्ख्येत्येतत्समधिगतम् । सा पशूनाम्, उत माषाणाम् ? इत अनियमे प्राप्ते उच्यते, पशू-नाम् इति । कुतः ? । उत्पत्तितो विभागात् औत्पत्ति-केन विभागेन पशवः संव्यवहारेषु सङ्ख्यायन्ते, पञ्चभिरश्वैः-क्रीतः, पञ्चभिर्गोभिः क्रीतः इति, न व्रीह्यादीनाम् औत्प-त्तिकेन विभागेन संव्यवहारेषु सङ्ख्या सङ्कीर्त्यते, निग-दाभिप्राया मानाभिप्राया वा भवति, न हि भवति, पञ्चभिर्माषैः क्रीत इति, पञ्चभिर्माषाणामाढकैर्द्रोणैर्वा कुडवैर्वा खारीभिर्वेति भवति, तत्र आढकादिभरनुच्चार्य्य-माणैः साकाङ्क्षमिव वाक्यमपरिपूर्णमप्रमाणमर्थस्य कस्य-चित् ।

अथ माषाणामपि औत्पत्तिकेन विभागेन कस्मादिह परिक्रयो न क्रियते ? इति । अत्रोच्यते, मूलस्य सतः परिक्रये विशेष उच्यते, द्वादशशतं दक्षिणा इति न च

द्वादशशतं व्रीह्यादिबीजानां, भृतित्वेन ऋत्विजामवकल्पते। त्रिभिः प्रकारैर्भृतिर्भवति व्यापारतः, फलतः वचनत इति। व्यापारस्तावन्न माषबीजानां द्वादशशतं भृतिः, कर्म कुर्वाणा हि कर्मकराः पादिकमभ्यहर्लभन्ते। फलानुरूप्यं नैव ज्ञायते। वचनं नु भृतौ सत्यां परिमाणविशेषपरं भवति। यत्र हि पादिकमभ्यहनं लभ्यते न सा दक्षिणा भवति, न हि सा तस्मिन् कर्मणि दक्षं करोति, स हि द्वाहा अन्येन वा प्रकारेण कृत्स्नमहः कर्म कुर्य्यात्, न व्रीहीणां द्वादशशतेन प्रोत्साहितः।

आह, यः कश्चित् कस्याञ्चिदवस्थायां व्रीहीणां द्वादशशतेन प्रोत्साह्यते, तस्य किं सा दक्षिणा भवेत्?। न इति ब्रूमः, दक्षकरणी हि दक्षिणा, दक्षश्च बलं, या न आश्रितत्वं करोति, नासौ बलकरणी, तस्माद् या न आश्रितत्वा, नासौ दक्षिणा। आश्रितत्वाया आधिक्यं वचनस्य विषयः।

आह, व्रीहिबीजानामपि द्वादशशतं याञ्च यावतीं बलमात्रां करोति। अत्रोच्यते, आपेक्षिकं इदं बलं नाम, स एव हि पुरुषः कञ्चित् प्रति बलीयान्, कञ्चित् प्रति अबलः तत्र यावदाश्रितत्वं नास्ति, तावद् अबलता, बलवत्तरो हि आश्रितेन भवतीति आश्रितत्वादूर्द्ध्वं बलकरणं, तस्मादाश्रितत्वं यत् द्रव्यं, सा भृतिः, सा दक्षिणा, ततोऽधिकं दक्षिणात्वे सिद्धे वचनप्रामाण्यात् भवति। विकृतौ ऋतपेये वचनप्रामाण्यादल्पबलकरणमपि दक्षिणायाः स्थाने विधीयते सोमचमसः, स आश्रयात् सिध्यति।

पशवस्तु सर्वे मुख्यबलकरणे समर्थाः, तेषु सत्सु, न व्रीह्यादि-बीजानि सङ्ख्यया सम्भन्त्स्यन्ते इति ।

## अनियमोऽविशेषात् ॥४६॥ (पू०)

यदा पशूनां द्वादशशतं, तदा अनियमो गवादीनां, अन्यतमस्य कस्यचिद्द्वादशशतम् । एवमनियमे लाघवं भविष्यति, प्रयोगप्राशुभावश्च, तत्राधिकारशास्त्रं महाविषयं भविष्यति इति ।

## भागित्वाद्वा गवां स्यात् ॥ ४७ ॥ (२ सि०)

वाशब्दोऽनियमं व्यावर्त्तयति । गवां द्वादशशतं स्यात् । कुतः ? । भागित्वात्, भागवत्यो हि गावो महाभागाः, महति उपकारे वर्त्तन्ते इत्यर्थः । एवमृत्विजामुपकारभूयस्त्वं भविष्यति, ऋत्विजाञ्च उपकारः कर्त्तव्यः । महत्तमे हिते उपकारे वर्त्तन्ते, उपकुर्वतां चोपकर्त्तव्यमिति सदाचारः । एवं सदाचारोऽनुगृहीतो भविष्यति, यदि महाभागानां भूयसी सङ्ख्या दीयते, गावश्च महाभागाः, तस्मात् तासां द्वादशशतम् । अश्वा उपकारकतरा भवेयुः, यद्येषां दानप्रतिग्रहविक्रया न प्रतिषिध्येरन्, न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णाति इति श्रुतिः । स्मर्य्यते च, नाश्वं विक्रीणीते इति । तस्माद् द्वादशशतं गवां स्यात् ।

## प्रत्ययात् ॥ ४८ ॥ (यु०)

अतश्च गवां सङ्ख्या । कुतः ? । प्रत्ययात् । सङ्ख्या-

सम्पादनार्थं, उपादीयमानेषु प्रकृतेषु अन्येन उपायेन स्मर्यमाणेषु पूर्वं गावः प्रतीयन्ते, अतस्ताः सङ्ख्यया सम्बध्यन्ते, न च तत्र विरोधः कश्चिदस्ति, गोषु सम्बद्धासु न पुनरश्वादयः सम्बध्यन्ते, एकजातीयो हि सम्बद्धव्यः, स च सम्बद्ध इति । तस्मात् गवां सङ्ख्या ।

## लिङ्गदर्शनाच्च ॥ ४९ ॥ (यु० २)

लिङ्गं खलु एतमर्थं दर्शयति । किं लिङ्गं भवति ? । एवमाह, सहस्रं दक्षिणा । सहस्रं स्तोत्रीया यावदस्य साहस्रस्य उत्तराधरा गौर्गवि प्रतिष्ठिता तावदस्मात् लोकादसौ लोकः इति गाः प्राप्ता दर्शयति । तथा तां वा एतां शवलीं समामनन्ति । इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतिरदिति सरस्वति महि विश्रुति । एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं क्रतात् इति गवामेतानि नामानि सहस्रतमीञ्च दक्षिणामिवमाह, एतानि ते नामानि इति यदि सा गौः, एवमेतदवकल्पते । तस्मादपि गवां सङ्ख्या इति ॥ ( १० । ३ । १२ अ० ) ॥

---

विभज्य गोदक्षिणाया दानाधिकरणम् ।

## तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥ (सि०)

ज्योतिष्टोमे गवादयो दक्षिणा, तत्रैषोऽर्थः समधिगतः,

शवां सङ्ख्या इति। अथेदानीमिदं सन्दिह्यते, किं यस्य यावान् भाग आभजति, स्वयमेव यजमानेन विभज्य तस्य तावान् कल्पयितव्यः, उत परिषदैव विभज्यत इति। किं प्राप्तम्? अनियमो विभज्याविभज्य वा दातव्यम्, एतावद्धि श्रूयते, दातव्यम् इति, न, विभज्याविभज्य वा इति। तस्मादनियम इति।

एवं प्राप्ते ब्रूमः, विभज्य दातव्यमिति, दातव्यस्यैव तद्रूपं, यत् स्वत्वपरित्यागेन परस्वत्वापादनं, तच्च यजमानेन स्वयं कर्त्तव्यम्। तस्मात् स्वयं प्रयोगी स्यात् इति। यो यस्यांश आभजति, स तस्मै अनिर्दिष्टो न शक्यते तेन सम्बन्धयितुं, तेन यस्तं निर्दिशति स दानमभिनिर्वर्त्तयति। यजमानेन च दानं निर्वर्त्तयितव्यम्। तस्माद् यजमानो विभज्य निर्दिशेत्, प्रदानानां पृथक्त्वात्। असति विभागे न शक्यः स्वेन भागेन सम्बन्धः कर्त्तुम्। तस्माद्विभज्य दक्षिणा दातव्येति।

## परिक्रयाच्च लोकवत् ॥ ५१ ॥ (यु० १)

अस्ति च परिक्रयार्थं दानं, न धर्ममात्रं, परिक्रयार्थञ्च भर्त्ता भृत्येन सह पणितव्यम्। यदि च परिषदं प्रत्युच्येत, परिषच्च विभजेत, न स्वामिना सह अपणिष्यत, तत्र परिक्रय एव नाभविष्यत्। यथा लोके काष्ठवाहप्रभृतिभ्यो गृहीयते, तत्र काष्ठवाहाः स्वामिना सह पणन्ते, तेभ्यः स्वामी विभज्य निर्दिशति, इदं तुभ्यमिदं तुभ्यमिति, तद्वदिहापि द्रष्टव्यम्। तस्माद्विभज्य दक्षिणा दातव्येति।

## विभागञ्चापि दर्शयति ॥ ५२ ॥ (यु० २)

अपि च दर्शयति विभागं, यत् विभागाभिधायिनं मन्त्रमामनन्ति तुथो वो विश्ववेदा विभजतु इति । कृष्णाजिनेन विन्नास्य दक्षिणां ददाति इति । तथा अग्नीधेऽग्रे ददाति, अग्निमुखानेव पितॄन् प्रीणाति, ब्रह्मणे ददाति प्रस्तोतृभ्यो ददाति प्रस्तोत्रे होत्रे ददाति नेष्ट्रे ददाति हविर्द्धाने आसीनेभ्य अध्वर्युभ्यो ददाति, उद्गातृभ्यो ददाति, अन्तःसदसि आसीनेभ्यो यथाश्रद्ध प्रासर्पकेभ्यो ददाति इति । एवं विभागदर्शनमुपपद्यते । तस्माद्विभज्य दातव्यमिति ॥ ( १० । ३ । १३ अ० ) ॥

---

ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम् ।

## समं स्यादश्रुतित्वात् ॥ ५३ ॥ (१ पू०)

ज्योतिष्टोमे सामाम्नायते, गौश्चाश्वश्च अश्वतरश्च इति । तत्रायमर्थः समधिगतः, विभज्य दातव्यम् इति । इदमिदानीं सांशयिकं, किं समो विभागः, उत कर्मकृतं वैषम्यं, उत श्रद्धकृतम् ? इति । किं प्राप्तम् ?, समो भागः स्यात् अश्रुतित्वात् विशेषस्य, यत्र विशेषो न श्रूयते, तत्र समो विभागो भवितुमर्हति । कथमिव ? । एकस्मै सर्वं दातव्यं प्राप्नोति, यद्यपरस्मै दातव्यं न भवति । तत्र यावति एकस्मै दीयमाने नान्यः संविभज्यते, तावत् तस्मै

एकस्मै न दातव्यम्, अविशिष्टं दातव्यं, एवमेकैकस्मै, तस्माद्विशेषाश्रवणात् समं देयमिति।

अपि वा कर्मवैषम्यात् ॥ ५४ ॥ (२पू०)

अपि वेति पक्षव्यावृत्तिः, न समं स्यात्, कर्मकृतं वैषम्यं भवेत्, यो बहु कर्म करोति, तस्मै बह्वी भृतिर्दीयते। तस्मात् कर्मानुरूप्येण वैषम्यमिति।

अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयात् न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाभ्युदये ॥ ५५ ॥ (सि०)

न चैतदस्ति, कर्मकृतं वैषम्यम् इति, किन्तर्हि उपकारकृत्। स उपकारः श्रुत्या विज्ञायते, तस्मात् श्रुतिकृतं वैषम्यम्। तेन अतुल्याः परिक्रये भवेयुः। विषमा हि एषाम् आख्या, केचित् अर्द्धिनः, केचित् तृतीयिनः केचित् पादिनः, येषामर्द्धं ते अर्द्धिनः, कथं च तेषामर्द्धं भवति?, यदि तेभ्यः अर्द्धं दीयते। एवं तृतीयिनः, पादिनः इति च दीक्षा विधिश्रुतौ समाख्यायन्ते, सा परिक्रयात् कर्मकृते वैषम्ये न उपपद्यते। क्व पुनरयं विशेषो दृश्यते?। अभ्युदये, अभ्युदय इति अभ्युदयफलं ऋद्धिफलं द्वादशाहं ब्रूमः। अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं, ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्द्धिनो दीक्षयति। ब्रह्मणाच्छं-

सिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः, ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति। अग्नीधं ब्रह्मणः, प्रतिहर्त्तारमुद्गातुः, अच्छावाकं होतुः, ततस्तं उन्नेता दीक्षयित्वा पादिनो दीक्षयति। पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः, ततस्तमन्यो दीक्षयति ब्रह्मचारी वा आचार्य्यप्रेषितः इति अर्द्धिनः तृतीयिनः पादिनः इति द्वादशाहे अनुवादः। यदि प्रकृतौ यथासमाख्यम् अमीषामिमे भागाः, ततो द्वादशाहे दर्शनमुपपद्यते। तस्मादर्द्धादिभिः समाख्यानात् समाख्याश्रुतिकृतं वैषम्यं भवितुमर्हतीति॥ (१०।२।१४ अ०)॥

---

भूनामैकाहे तस्य धेनुः इत्यनेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम्।

## तस्य धेनुरिति गवां, प्रकृतौ विभक्तचोदितत्वात् सामान्यात् तद्विकारः स्यात् यथेष्टिर्गुणशब्देन ॥ ५६ ॥ (पू०)

इदमामनन्ति, अथैष भूर्वैश्वदेवः त्रिवृदेव सर्वस्तस्य विश्ववत्यस्तोत्रीया धेनुर्दक्षिणा इति। अत्र सन्देहः, किं धेनुर्गवां निवर्त्तिका, उत कृत्स्नाया दक्षिणायाः? इति। तत्र इदं तावत् परीक्ष्यं, किं प्रकृतौ विभक्तं दाक्षिण्यं, उत, समस्तम्? इति। तत इदं तच्च संहत्याधिकरणं क्रियते, किं प्रकृतौ विभक्तं दाक्षिण्यं, धेनुर्गवां निव-

र्त्तिका। उत, अविभक्तं, कृत्स्नाया दक्षिणाया निर्वर्त्तिका? इति। किं प्राप्तम्?। तस्य धेनुः इति श्रूयमाणे ब्रूमः, धेनुः गवां निवर्त्तिका इति।

तत एतत्तावद् विचार्य्यते, प्रकृतौ विभक्तं दाक्षिण्यमिति। किमिदं विभक्तम्? इति। गवादीनामेकैकं द्रव्यं दक्षिणा इति। कथम्?। गौश्च अश्वश्च अश्वतरश्च दक्षिणा इति प्रकृतौ गवादिभिर्दक्षिणाशब्दः प्रत्येकं परिसमाप्यते, निर्दिष्टा हि गवादयः, न तेषां समुदायः। चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः, परपदविशेषणार्थन्तु समुच्चयमुपादत्ते। यदि हि निर्दिशेत्, क्रियागुणैः समुच्चयः सम्बध्येत। समुच्चयः शोभनः समुच्चयो द्रष्टव्य इति यथा भवति, एवं च शोभनः च द्रष्टव्य इति वा भविष्यति। तथा, यथेह समुच्चेययोः षष्ठी भवति, धवखदिरयोः समुच्चय इति, एवं धवः खदिरश्चेत्यत्रापि अभविष्यत्। न तु भवति। तस्मान्न चशब्दः समुच्चयं निर्दिशति, श्रुत्या निर्दिष्टेन च एकवाक्यता न्याय्या, न गवादिलक्षितेन समुदायेन। तस्माद् गौर्दक्षिणा, अश्वो दक्षिणेत्येवं सम्बन्धः। लक्षयित्वा हि गवादीन्, तेषां दक्षिणात्वं विधीयते, तच्च गुणभूतं प्रतिप्रधानं भिद्येत। चशब्दश्चैवं समर्थितो भविष्यति, गौर्दक्षिणा अश्वश्च दक्षिणा इति, न गौरश्वादिसहितो गवादीनां वा समाहार इति।

यदि विभक्तं दाक्षिण्यं, तदा प्राप्ता गौर्दाक्षिण्ये, पुनर्विशेषार्थमुच्चार्य्यते, धेनुर्दक्षिणा इति, याऽसौ गौर्दक्षिणा सा धेनुरिति अन्यासां दक्षिणानामविकारेण, यथाप्रकृति-

भावेन चोदकानुग्रहो भविष्यति। शब्देनैव गवि एष गुण उच्यते धेनुत्वं नाम। गौरेव हि धेनुर्नान्या, यथेष्टिः गुणशब्देन, सौर्य्यं निर्वपेत् इति सूर्य्यसम्बन्धं कुर्य्यात्, द्रव्यस्येति विवक्षिते निर्वपणाश्रय एव प्रयोगः शब्देन निर्दिश्यते इति, सनिर्वपणकात् प्रयोगात् अनेन निर्वपणशब्देन ऐष्टिको विध्यन्तो नियम्यते, एवमिहापि गोर्गुणवचनेन धेनुशब्देन गोदक्षिणाविकारः क्रियते, नान्या दक्षिणा विक्रियते इति।

**सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्य्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात् तस्मात् समवायाद्धि कर्मभिः॥ ५७॥ (सि०)**

वाशब्दः पक्षं व्यावर्त्तयति, सर्वस्य क्रतुदाक्षिण्यस्य निवर्त्तिका धेनुरिति प्रतिज्ञायते। तत्रैतद्वर्ण्यते समस्तं दाक्षिण्यम् इति। किमिदं समस्तं दाक्षिण्यम्? इति। न प्रतिद्रव्यं दक्षिणाशब्दः सम्बध्यते, गौर्दक्षिणा, अश्वो दक्षिणा, अश्वतरो दक्षिणा इति, कथन्तर्हि गवादयो दक्षिणेति। न हि गवादीन् उद्दिश्य, दक्षिणासम्बन्धो विधीयते, ये गवादयस्ते दक्षिणा इति, तथा हि दक्षिणाशब्दो गवादीन् दक्षिणासम्बन्धविधानार्थं यौगपद्येन अन्तर्गतसम्बन्धमभिवदन् बहुवचनान्तः स्यात्। गवादयो दक्षिणाः इति, यथा अग्नीषोमौ देवते प्राणापानौ अभिसमभवताम् इति। गुणवचनानां शब्दानाम् आश्रयतो लिङ्गवचनानि भवन्ति। कथं तर्हि, दक्षिणामुद्दिश्य गवा-

दयो विधीयन्ते, का दक्षिणा ?, गवादयः इति। दक्षिणा नाम दक्षतेरुत्साहकर्मणः, दक्षिणा उत्साहिका इति, एकः सः गुणः, स च प्राधान्येन विवक्षितः, तद्विशेषणत्वेन गवादयः। गुणवचनानाञ्च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, न द्रव्यवचनानामाश्रितगुणवशेन, यथा विश्वे देवा देवता इति। का पुनर्दक्षिणा ?, गौश्च अश्वश्च अश्वतरश्च इति दक्षिणाशब्दो दाने सम्बध्यते, ऋत्विग्भ्यो ददातीति, न गवादयः। एको हि दक्षिणानामर्थः, ऋत्विजाम् आनमनम्। सकृच्च आनतास्ते भवन्ति, भूय आनमनेन अर्थो नास्ति, गवादीनामपि गुणानामेकं कार्य्यं दक्षिणात्वम्।

यदा समस्तं दाक्षिणत्रं, तदा विकृतौ भुवि तस्मिन् प्राकृते अर्थे धेनुः श्रुतिभूता, सा च प्राकृतं कार्य्यमभिनिर्वर्त्तयति। क्रतुसंयोगेन हि श्रूयते, तस्य क्रतोः धेनुर्दक्षिणा इति, तस्मिन्निर्वृत्ते सर्वं चोदकप्राप्तमानुमानिकं निवर्त्तते। तया समवायाद्धि कर्मभिः ऋत्विजः सम्बध्यन्ते श्रुतिभूतया।

अपि च चशब्दश्रुत्या ससहायं गोद्रव्यमिति प्रतीयते, दक्षिणासम्बन्धोऽस्य वाक्येन, श्रुतिश्च वाक्याद् बलीयसी। तस्मात् पूर्वं चयोगः, पश्चात् दक्षिणासम्बन्धः, इतरेतरयुक्ताः दक्षिणात्वेन सम्बध्यन्ते गवादयः अर्थाः। तस्मात् कृत्स्नस्य क्रतुदाक्षिणत्रस्य निवर्त्तिका धेनुरिति।

**चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् ॥ ५८ ॥ (आ० नि०)**

यदुक्तं, यथेष्टिर्गुणशब्देन इति, अत्रोच्यते, आग्नेयो-पांशुयाजाग्नीषोमीयानां प्राकृतानां सौर्य्यार्यमणप्राजापत्यनैर्ऋतीनां चोदनानां न किञ्चित् एकं कार्य्यं, यद्वैकृती चोदना आश्रयेत्, तत्र वक्ष्यते, एकस्य कर्मणो वैकृतं कर्म विध्यन्तं गृह्णातीति। तत्र कस्य ग्रहीष्यति ? इति सन्देहे युक्तो लिङ्गेन नियमः, इह तु अदिष्टो हेतुः, गवादीनामेकं कार्य्यं दक्षिणात्वं, तस्मिंश्च धेनुः श्रुतिभूता चोदकप्राप्तान् निवर्त्तयितुमर्हति इति॥ (१०।३। १५ अ०)॥

---

यस्य सोममपहरेयुः इत्यादौ एकां गाम् इत्यादिना गौणतत्त्वबाधाधिकरणम्।

## एका पञ्चेति धेनुवत्॥ ५८॥ (पू०)

यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यादभिदग्धे पञ्च गाः इति। अत्र सन्देहः, एकां पञ्च च गावः श्रूयमाणाः किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिकाः, उत गवाम् ? इति। किं प्राप्तम् ?, एका पञ्चेति धेनुवत्। यथा धेनुः कृत्स्नस्य निवर्त्तिका एवमेका पञ्च च भवेयुः, दक्षिणासम्बन्धो हि तासां प्रत्यक्षः श्रूयते, तेन ताः प्राकृतीनां कार्य्यमभिनिर्वर्त्तयन्ति, प्राकृत्यश्च आनुमानिक्यो निवर्त्तन्त इति।

इदं तावदपर्य्यवसितं तिष्ठतु। अथाधिकरणान्तरं प्रस्तूयते,

---

साद्यस्क्रे त्रिवत्सेन सर्वेषां क्रयार्थानां बाधाधिकरणम् ।

## त्रिवत्सश्च ॥ ६० ॥ ( सि० )

अस्ति साद्यस्क्रे साण्डस्त्रिवत्सः सोमक्रयणः स्पर्द्धमानानाम् इति । सन्ति क्रयार्थानि द्रव्याणि चोदकप्राप्तानि, अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, अश्वशफेन क्रीणाति, वाससा क्रीणाति इत्येवमादीनि । तत्र संशयः, किं त्रिवत्सः ऋषभस्य निवर्त्तकः, अथ वा सर्वेषां क्रयार्थानां द्रव्याणाम् ? इति । किं प्राप्तम् ?, ऋषभस्य निवर्त्तक इति । कुतः ? । पुङ्गवत्वात्, पुङ्गवत्वेन, सामान्येन, पुङ्गवोऽसौ विधीयते । कुतः पुङ्गवत्वम् ? । साण्डश्रवणात् । तस्मात् ऋषभस्य निवर्त्तक इति ।

एवं प्राप्ते ब्रूमः, त्रिवत्सश्च ; किम् ? । कृत्स्नस्य क्रयार्थस्य निवर्त्तक इति । प्रत्यक्षः स क्रीणातिना सम्बध्यते, तेन चोदकप्राप्तं निवर्त्तयति, तस्मात् कृत्स्नस्य क्रयार्थस्य निवर्त्तक इति ।

## तथा च लिङ्गदर्शनम् ॥ ६१ ॥ ( यु० )

एवञ्च कृत्वा लिङ्गं दर्शयति । किं लिङ्गं भवति ? । एवमाह, अपरस्मिन् साद्यस्क्रे स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषां स्पर्द्धा इति । यदि सर्वस्य क्रयार्थस्य निवर्त्तिका स्त्री गौः ततः सैव एकाकिनी केन सह स्पर्द्धिष्यते ? इति । इतरथा सर्वस्यानिवर्त्तिकायां सङ्गस्य

स्पर्द्धा भवेत्, तत्रास्यां वर्त्तमानायां स्पर्द्धायां व्यावृत्ता ह्येषां स्पर्द्धा इति नोपपद्यते। तस्मात् सर्वस्य निवर्त्तिकेति, त्रिवत्सोऽपि तत्समानश्रुतिः, सोऽपि च सर्वस्य निवर्त्तक इति।

एवं वा, यदि त्रिवत्सः सर्वेषां निवर्त्तकः, तदा तम् अपबाधमाना साद्यस्क्रान्तरे स्त्री गवी श्रूयमाणा केवला स्यात्, तत्र व्यावृत्ता ह्येषां स्पर्द्धा इति दर्शनमुपपद्यते, इतरथा हि केवलस्य ऋषभस्यापबाधितारं त्रिवत्सं निवर्त्तयन्ती सङ्घमध्यपतिता स्पर्द्धतापि, तत्र व्यावृत्ता ह्येषां स्पर्द्धा इति वचनं नावकल्पते। अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकस्त्रिवत्स इति॥ (१०।३।१७ अ०)॥

तत्र एवमन्तरागर्भिणीन्यायो भवतीति अन्यथा सूत्रं वर्ण्यते, इतश्च एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिका त्रिवत्सस्य, तथा च लिङ्गदर्शनं, एवमेतत्-समानश्रुतिस्त्रिवत्सोऽपि सर्वस्य निवर्त्तकः प्राप्नोति, तदेतद्दर्शनम् उपपत्स्यते, व्यावृत्ता ह्येषां स्पर्द्धा इति।

## एके तु श्रुतिभूतत्वात् सङ्ख्यया गवां लिङ्गविशेषेण ॥ ६२ ॥ (सि०)

स्थितादुत्तरम्। यदुक्तम्, एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिकेति, एतन्न, एके तु अर्था निवर्त्तन्ते, एके गावो निवर्त्तन्ते, अश्वादयो न निवर्त्तन्ते। एका देया पञ्च देयाः इति य एष नियमः, स गोविषयः। कुतः?। गोविशिष्टया सङ्ख्यया सम्बन्धात्। यदेतत् एकां

ददाति पञ्च ददाति इति, नैवमभिसम्बन्धः क्रियते, एकां दक्षिणां ददातीति, कथन्तर्हि एकां गामिति, गोसङ्ख्यासम्बन्धो हि मुख्यत्वात् बलीयान् ।

अपि च गोशब्देन सह सङ्ख्यायाः प्रत्यक्षः सम्बन्धः, गोशब्दव्यवधानात् परोक्षो दक्षिणाशब्देन, गोशब्दश्चैवं मुख्यार्थो भवति, इतरथा लक्षणा स्यात्, एकां गामश्वादि चेति। तेन गवां लिङ्गविशेषेण सङ्ख्या गोषु निविशते। एवञ्च सर्वेषामनिवृत्तावश्वादीनां यथा प्रकृतिभावे चोदकानुग्रहो भविष्यति, तस्मादेका पञ्च च गवां निवर्त्तिका इति ॥ (१०।३।१६ अ० ) ॥

---

अश्वमेधे प्राकाशावित्यनेनाध्वर्यु भागबाधाधिकरणम् ।

## प्राकाशौ तथेति चेत् ॥ ६३ ॥ (पू०)

अश्वमेधे श्रूयते, हिरण्मयौ प्राकाशावध्वर्यवे ददाति इति। तत्रैषोऽर्थः सांशयिकः, किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकौ, उत अध्वर्युभागस्य निवर्त्तकौ? इति। कुतः संशयः?। इह प्राकाशावित्येष यदि ददातिना सम्बध्यते, ततः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकः, अथ अध्वर्युणा, तदा अध्वर्युभागस्य। किं प्राप्तम्? कृत्स्नस्येति। तत्र एतद्वर्ण्यते, प्राकाशाविति-शब्दो ददातिना सम्बध्यत इति। कुतः?। एवं ददाति-सम्बन्धविधाने श्रुतिरनुगृहीता, अध्वर्युणा सम्बन्धे

वाक्यम्। अपि च प्राकाशाविति द्वितीया कारकविभक्तिः सामर्थ्यादेवाख्यातेन सम्बध्यते, न नाम्ना। तस्माद् ददातिना सम्बन्धः। अध्वर्य्युसम्बन्धे चाध्वर्य्युशब्दात् षष्ठी अभविष्यत्, तस्मादपि ददातिना सम्बन्धः। ददातिं लक्षयित्वा प्राकाशौ विधीयेते, तत्र न शक्यो ददातिरध्वर्य्युणा विशेष्टुं, वाक्यं हि तदा भिद्येत। अपि च विशेषणे सत्यपि यदि ददातिरविशिष्टः पदान्तरेण सम्बध्यते, अविशिष्ट एव कार्य्यं प्राप्नोति, प्रयुज्यमानमपि हि विशेषणमशक्तं न विशेष्यं विशिनष्टि। तस्मात् योऽध्वरं युनक्ति, सोऽध्वर्य्युरिहाभिप्रेतः। अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकौ प्राकाशाविति।

## अपि त्ववयवार्थत्वात् विभक्तप्रकृतित्वात् गुणेदन्ताविकारः स्यात् ॥ ६४ ॥ ( सि० )

अपि त्विति पक्षव्यावृत्तिः। दक्षिणावयवकार्य्यार्थौ प्राकाशौ, न कृत्स्नदक्षिणाकार्य्यार्थौ, विभक्ता हि तेषां भागा अध्वर्य्वादीनाम्, अयम् अध्वर्य्योर्भागः, इमे अन्येषाम् इति। तस्मात् गुणेदन्ताविकारः स्यात्। किमिदं गुणेदन्ताविकारः इति ?। गुणस्य इदन्ता गुणेदन्ता, इदंभाव इदन्ता, गुणेदन्ताया विकारो गुणेदन्ताविकारः, अध्वर्य्योर्भागस्य निवर्त्तकौ प्राकाशौ। कथमिव ?। एकमिदं हि वाक्यं, हिरण्मयौ प्राकाशौ इति, नेयं प्रथमा, नापि दक्षिणाशब्देन सम्बन्धः, येन दक्षिणाकार्य्ये वर्त्तेयाताम्। का तर्ह्येषा ?। द्वितीया, ददातिनैव सम्बध्यते। तदेकं

वाक्यं, हिरण्मयौ प्राकाशावध्वर्य्यवे ददाति इति, अध्वर्य्यु-सम्प्रदानकेन ददातिना एतयोः सम्बन्धस्तस्मात् तत्राध्वर्य्यु-ददातिभागं निवर्त्तयतः। यदा सर्वविशेषणविशिष्टो ददातिरपूर्वो विधीयते। दृष्टार्थत्वादध्वर्य्योरन्यान् आनत्यर्थान् प्रत्याख्यास्यति।

अथ यदुक्तं, प्राकाशयोर्ददातिसम्बन्धो विधीयत इति तथा हि श्रुतिरनुगृहीता भविष्यति इति। नासौ वाक्यानपेक्षिणी श्रुतिः, असति ददातिना आनत्यर्थे नावकल्पते। यदप्युच्यते, कारकविभक्तिराख्यातेन सम्बन्धयोग्या इति। योग्यत्वं दर्शनेन बाध्यते, दृश्यते त्वानत्यर्थं प्राकाशयोरध्वर्य्युशब्देन। यदप्युक्तं, तत्सम्बन्धे षष्ठी अभविष्यत् इति। सत्यं प्राप्नोति षष्ठी, न तु तदभावे सम्बन्धो नास्ति अध्वर्य्युणा, गम्यते हि स वाक्येन। आह, चतुर्थीश्रुतिरत्र या, सा वाक्यमपबाधिष्यते इति। न, अविधीयमाना बाधितुम् उत्सहते। कथं तर्हि अविधित्सिते सम्प्रदाने श्रूयते? इति। सामर्थ्यप्राप्तस्यानुवादेनेति। तस्माददोषः। उक्तं वा सर्वविशेषणविशिष्टं दानं विधीयत इति। एवमन्येषामनिवृत्तौ यथाप्रकृतिभावे चोदकानुग्रहो भविष्यति। तस्मादध्वर्य्युभागस्य निवर्त्तकौ प्राकाशाविति ॥ (१०।३।१८अ०)॥

---

उपहव्ये अर्थेन कृत्स्नक्रतुदाचिख्यस्य बाधाधिकरणम्।

**धेनुवच्चाश्वदक्षिणा, स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥ (सि०)**

अस्ति उपहव्यः, उपहव्यो अनिरुक्तस्तेनाभिशस्यमानं याजयेत् । अग्निष्टोमो यज्ञः पञ्चदशस्तोमो रथन्तरसामाश्वः श्वेतो दक्षिणा । उपहव्यो निरुक्तः तेनाभिशस्यमानं याजयेत् । उक्थ्यो यज्ञः सप्तदशस्तोमो बृहत्पृष्ठः अश्वः श्यावो रुक्मललाटो दक्षिणा । तत्र श्रूयते, स ह्यनिरुक्तः स ब्रह्मणे देयः इति । तत्र सन्देहः, किमश्वो ब्रह्मभागस्य निवर्त्तकः, उत कृत्स्नस्य क्रतुदाक्षिण्यस्य ? इति । किं प्राप्तम् ? ब्रह्मभागस्य निवर्त्तकः इति । कुतः ?। कर्तृसम्बन्धाद् अवयवार्थत्वात् विभक्तप्रकृतित्वाच्च गुणेदन्त्वाविकारः स्यात् । स्रग्वत्, यथा, स्रजमुद्गात्रे ददाति इति उद्गातृभागस्य निवर्त्तिका स्रक्, न कृत्स्नस्य क्रतुदाक्षिण्यस्य । एवमिहापि इति ।

एवं प्राप्ते ब्रूमः, धेनुवत् अश्वदक्षिणा स्यात्, कृत्स्नस्य निवर्त्तिका इति । कुतः ?। दक्षिणाशब्दसम्बन्धात्, अश्वः श्यावो रुक्मललाटो दक्षिणा इति प्रत्यक्षश्रुतेनाश्वेन आनमनं कर्त्तव्यं, एवञ्चेत् आनुमानिकं निवर्त्तितुमर्हति । ननु कर्तृसम्बन्धोऽस्य श्रूयते, स ह्यनिरुक्तः स ब्रह्मणे देयः इति । उच्यते, एकेन वाक्येन देशकप्राप्तानां निवृत्तिः, द्वितीयेन वाक्येन विनिवृत्तौ सत्यां पुरुषापनयः क्रियते, यथा, हिरण्यस्य सर्वं ब्रह्मणे परिहरति इति । तस्मात् कृत्स्नस्य निवर्त्तकोऽश्व इति ।

**एके तु कर्तृसंयोगात् स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६ ॥ (आ०)**

अथ यदुक्तं, एके अर्था निवर्त्तन्ते, कर्त्तृसंयोगात् लिङ्गविशेषेण स्रग्वद् इति तत्परिहर्त्तव्यम् ।

अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् ॥ ६७ ॥ (आ० नि०)

अपि वेति पक्षव्यावृत्तिः, तदधिकारात् दक्षिणाधिकारात् दक्षिणाशब्देन दक्षिणामधिकृत्याश्वसम्बन्धः कृतः । तस्मात् कृत्स्नदक्षिणाविकारोऽश्वः । अतो हिरण्यवदेव भवति, न स्रग्वत् ॥ (१० । ३ । १८ ) ॥

---

ऋतपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यबाधाधिकरणम् ।

तथा च सोमचमसः ॥ ६८ ॥ (पू०)

ऋतपेये श्रूयते, औदुम्बरः सोमचमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देयः इति । तत्र सन्देहः, किं ब्रह्मभागस्य निवर्त्तकः सोमचमसः, उत कृत्स्नस्य क्रतुदाक्षिण्यस्य ? । किं प्राप्तम् ?, तथा सोमचमसः स्यात्, यथा स्रक् उद्गात्रे तद्भागस्य निवर्त्तिका, उद्गातृसंयोगात्, एवं ब्रह्मसंयोगात् ब्रह्मभागस्य निवर्त्तकः सोमचमसः ।

सर्वविकारो वा क्रत्वर्थे प्रतिषेधात् पशूनाम् ॥ ६९ ॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति, न ब्रह्मभागस्य निवर्त्तकः,

किन्तर्हि कृत्स्नस्य क्रतुदाक्षिण्यस्य। कथमवगम्यते ?। पशुप्रतिषेधानुवादात्, एवमाम्नायते, ऋतं वै सोमोऽनृतं पशवो यत् पशून् दद्यात् सोऽनृतं कुर्य्यात्। औदुम्बरः सोमचमसो दक्षिणा इति, पशुदानमपोह्य सोमचमसो विधीयते, यः पशून् दद्यात् तस्यैष दोषो भवेत्, एतस्मात् न पशवो दातव्या इति वक्तव्ये तमेवार्थमुक्तं मन्यमानः, सोमचमसो दक्षिणा इत्याह। सोमचमसदानेन पशवो न दीयन्त इति गम्यते। तदेवं कृत्स्नस्य निवर्त्तकोऽवकल्पते। ब्रह्मदानस्य निवर्त्तके सति अन्येभ्यः पशवो दीयेरन्। तस्मात् कृत्स्नस्य निवर्त्तक इति।

## ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥ (आ०)

इति चेत् पश्यसि पशुदानविप्रतिषेधात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तक इति। ब्रह्मदानेऽप्येतदवकल्पते, ब्रह्मणे सोमचमसो देयः, यः पशून् दद्यात् स ब्रह्मणे इति गम्यते। तस्मान्न नियोगतः कृत्स्नस्यैव क्रतुदाक्षिण्यस्य निवर्त्तके पशुप्रतिषेधानुवादोऽवकल्पते, ब्रह्मणे दानेऽपि तदुपपद्यत इति।

## उत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म्म स्यात् न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥ (आ० नि०)

न चैतदस्ति, ब्रह्मभागस्य निवर्त्तकः सोमचमस इति, कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकः स्यात्। अस्य सोमचमसस्य य उत्सर्गः, स क्रत्वर्थः स्यात्, दक्षिणाशब्देन हि सम्बध्यते, सोमचमसो दक्षिणा इति। न च प्रकृताविकैको गवादिर्दक्षिणा, उक्तमेवेदं (५७सू०) गवादीनां समुदाये दक्षिणाशब्द इति। तदेवं सोमचमसदानेन प्रतिषिद्धेषु पशुषु यदि ब्रह्मदानेऽप्येतद्विशिष्टमिति कृत्वा अन्येभ्यः पशवो दीयेरन् प्रतिषिद्धं क्रियेत। यो हि ब्रह्मभागो न सा दक्षिणा, दक्षिणावयवो हि सः, दक्षिणावयवे दक्षिणाशब्दो निविशमानो गौणः स्यात्, न च विद्यमाने मुख्ये गौणः उपादीयते। सोमचमसस्य हि प्रयोजनं दक्षिणानिवृत्तिः, सर्वेषामृत्विजाम् आनमनं प्रयोजनं दक्षिणानां, न ब्रह्मदानम्। तस्मात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकः सोमचमस इति।

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥**
**सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥**
**॥ ७३ ॥ (प्र०)**

प्रयोजनसूत्रद्वयमिदम्। यदि तु ब्रह्मभागस्य निवर्त्तकः सोमचमसः, ततः ब्रह्मभागोना सा दक्षिणा, एतेन विकारेण अन्या दीयेरन् यथा पूर्वः पक्षः। यथा तर्हि सिद्धान्तः तथा सर्वं निवर्त्तते। तस्मिन् निवर्त्तिते, ततः पुरुषापनयः क्रियते, स ब्रह्मणे देयः इति। तासां दक्षिणानां क्रतुप्रधानत्व

भवति। सर्वलिङ्गानमनेन हि क्रतुः सिध्यति, न ब्रह्मानत्या केवलया, सोमचमसेन च सा सर्वानतिः कृतेति नान्यत् किञ्चन दीयेत, एतत्प्रयोजनं भवत्येव पञ्चोक्तं यथोपवर्णितम् इति।

एवं वा,

---

सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम्। (वर्णकान्तरम्)।

## यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात्॥ ७२॥ (पू०)

ऋतपेये श्रूयते, औदुम्बरः सोमचमसो दक्षिणा। स प्रियाय सगोत्राय ब्रह्मणे देयः इति। तत्रैषोऽर्थः सांशयिकः, किं ब्रह्मभागीनोनं दातव्यम्, उत सोमचमस एव केवलो दातव्यः? इति। ननु सोमचमसो दक्षिणेत्येष सम्बन्ध इत्युक्तम्। तत्रोच्यते, सोमचमसो ब्रह्मण इत्येष सम्बन्ध इति कृत्वा चिन्ता। यद्येवं, ब्रह्मणः सोमचमस इति सम्बन्धो विवक्षितः, सोमचमसेन ब्रह्मभागो निवर्त्तितोऽवशिष्टं दातव्यं तदूनो विकारः स्यादिति।

## सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात्॥ ॥ ७३॥ (सि०)

सर्वं वा सोमचमसेन निवर्त्त्येत। कुतः?। सोमच-

मसो दक्षिणा इत्येष सम्बन्धः प्रत्यक्षः, तेन निवर्त्तिते सर्व-स्मिन् दाक्षिण्ये पुरुषापनय एव क्रियते, तासां क्रतुप्रधान-त्वात्, दक्षिणानां सोमचमसो यः क्रतुदक्षिणा, स सर्वं क्रतुदाक्षिण्यं निवर्त्तयतीति ॥ (१०।३।२० अ०) ॥

---

वाजपेये रथस्य भागनियामकताधिकरणम् ।

## यजुर्युक्ते त्वध्वर्य्योर्दक्षिणा विकारः स्यात् ॥ ७६ ॥

अस्ति वाजपेयः, तत्रेदं समाम्नायते. यजुर्युक्तं रथम-ऽध्वर्य्यवे ददाति इति तत्रायमर्थः सांशयिकः, किं यजुर्युक्तो ध्वर्य्योर्भागस्य निवर्त्तकः, किं भागे नियमः ? इति । किं प्राप्तम् ? । यजुर्युक्ते दक्षिणा तु अध्वर्य्योः विकारः स्यात् । तुशब्दः संशयव्यावृत्त्यर्थः, न खलु संशयोऽस्ति । यजुर्युक्तं रथमध्वर्य्यवे ददाति, नान्यदिति गम्यते, स रथोऽध्वर्य्युभागं निवर्त्त्य कृतार्थः अवशिष्टानां चोदकप्राप्तानां निवृत्तिं न शक्नोति कर्त्तुम् । नैवमभिसम्बन्धः क्रियते, यजुर्युक्तं रथं वाजपेये ददातीति, येन क्रतुसंयोगो गम्यते । कुतः ? । प्रकृतो हि वाजपेयः, अध्वर्य्युः पुनर्वाक्येन श्रूयते । वाक्यं पुनः प्रकरणाद् बलीयः । तस्मादध्वर्य्युभागस्य निवर्त्तको रथ इति ।

## अपि वा श्रुतिभूतत्वात् सर्वासां तस्य भागो नियम्यते ॥ ७७ ॥

अपि वेति पक्षव्यावृत्तिः । श्रुतिभूता हि सर्वे रथाः

सामान्येन वचनेन, सप्त सप्तदशकानि ददाति इति, सप्तदश रथाः, सप्तदश निष्काः, सप्तदश दास्यः, सप्तदश च युग्मानि, सप्तदश गवां शतानि, यवसो वयस्यश्च सप्तदश इति । तेनाविशेषेण सप्तदश रथाः सर्वेषां प्राप्ता विभक्तव्याः, तत्र न ज्ञायते कस्य को रथः ?, तत्राध्वर्य्योर्यजुर्युक्तः पक्षे प्राप्तः स नियम्यते, यजुर्युक्तमध्वर्य्यवे ददाति, न अन्यं, न चान्यस्मै । एवम् ऋग्भिर्युक्तं होत्रे, नान्यंन चान्यस्मै । सामभिर्युक्तमुद्गात्रे ददाति, नान्यं, न चान्यस्मै । तत्र पक्षे विधानार्थं यजुर्युक्तग्रहणं, न अध्वर्य्योर्भागं निवर्त्तयितुमुत्सहते । तस्यानिवृत्तौ चोदकानुग्रहो भविष्यति । तस्मादध्वर्य्योर्भागे रथो नियम्यते, न तद्भागं निवर्त्तयतीति । ( १० । ३ । २१ अ० ) ।

इति भट्टश्रीशवरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य तृतीयः पादः ॥

---

# मीमांसा-दर्शने

## १० अध्याये ४ पादः ।

---

अग्न्यादौ नारिष्टहोमादिभिः नक्षत्र्यादीनां समुच्चयाधिकरणम् ।

**प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥ (सि०)**

अस्ति अग्निः, य एवं विद्वानग्निं चिनुते इति। तत्र नक्षत्रेष्टिः, अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत् सोऽनु जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा अम्बायै स्वाहा नियतये स्वाहा अभ्रपत्न्यै स्वाहा निवर्गपत्न्यै स्वाहा निपुणिकायै स्वाहा इति। सन्ति तु प्रकृतौ नारिष्टहोमाः, नारिष्टान् होमान् जुहोति इति। तत्र संशयः, किं नारिष्टहोमानां निवृत्तिः अथवाऽनिवृत्तिः, समुच्चयः? इति। तथा श्येने श्रूयते, लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति इति। अस्ति प्रकृतौ, निवीतं मनुष्याणां, प्राचीनावीतं पितॄणाम्, उपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते इति, तदिह चोदकेन प्राप्तम्। तत्र संशयः, किमुपवीतस्य निवृत्तिः उत अनिवृत्तिः, समुच्चयः? इति। तथा पृष्ठ्ये षडहे श्रूयते, मध्वाशयेत् घृतं वा इति। अस्ति तु प्रकृतौ, पयोव्रतं ब्राह्मणस्य यवागूराजन्यस्यामिक्षा वैश्यस्य इति। तदिह चोदकेन प्राप्तम्। तत्र संशयः, किं तस्य निवृत्तिः उतानिवृत्तिः, समुच्चयः? इति।

किं प्राप्तम्? तस्य निवृत्तिरिति, प्रत्यक्षश्रुता उपहोमादयः चोदकप्राप्तानाम् आनुमानिकानां निवर्त्तका इति। अपि च प्रकृतिलिङ्गसंयोगो भवति, जुहोति, निवीताः, प्रचरन्ति, आशयेत् इति। यथा, शरमयं बर्हिर्भवति इति शराः कुशान्निवर्त्तयन्ति।

एवं प्राप्ते ब्रूमः, अनिवृत्तिः, समुच्चय इति। कुतः?। प्रकृतिलिङ्गासंयोगात्, प्रकृतेन लिङ्गेन कार्य्येण संयोग

एषाम् उपहोमादीनां नास्ति, स हि प्रत्यक्षदर्शनेन वा भवति, यथा नैवारश्चरुः इति। अभावे विधानेन वा भवति, यथा, जुह्वा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः सन्तिष्ठते। न बहु वदेन्नान्यं पृच्छेन्नान्यस्मै प्रब्रूयात् मधु आश्नीयेत् घृतं वा इति। विकारेण वा, यथा, नैर्ऋतश्चरुर्नखावपूतानाम् इति। स्वशब्देन वा भवति, यथा,परिधौ पशुं नियुञ्जीत इति। प्रतिषेधेन वा भवति, यथा, न गिरा गिरेति ब्रूयात् यो गिरा गिरेति ब्रूयादात्मानं तदुद्गाता गिरेद्रैरं कृत्वोद्गेयम् इति। अन्येन वा, येनावगम्यते प्राकृतं कार्य्यमभिनिर्वर्त्तयतीति, तदिह न किञ्चिदप्यस्ति। न चैतावता निवृत्तिः, इदं प्रत्यक्षश्रुतम्, इदं चोदकेन प्राप्तमिति। प्रकृतिलिङ्गसंयोगे निवृत्तिर्भवति नान्यथा।

नन्विदानीमेवोक्तं, भवतीह प्रकृतिलिङ्गसंयोगः, जुहोति, निवीताः, प्रचरन्ति, आश्नीयेत् इति। उच्यते, प्रकृतानां जुहोत्यादीनां जुहोत्याद्यन्तराणि इमानि विधीयन्ते। तत्र तावत् जुहोतिरदृष्टार्थः, कथमसौ गम्येत प्राकृतस्यार्थे वर्त्तेत इति। तथा, उपवीतमदृष्टार्थं, कथं तस्य कार्य्ये निवीतं वर्त्तेत इति गम्यते। तथा, व्रतं वृत्त्यर्थं, मध्वशनं घृताशनञ्च तस्मिन्नर्थे वर्त्तेत इत्येतन्न ज्ञायत एव। तस्मान्नास्ति प्रकृतिलिङ्गसंयोगः।

अथोच्यते, नैवोपहोमा जुहोत्यन्तरं, प्रकृते होमे मन्त्रा विधीयते इति। तच्च न, विधायकस्याभावात्। सोऽनु जुहोति इति परिसमाप्ते वाक्ये केवलस्य मन्त्रस्याम्नानं,

नास्ति वचनम्, एवं जुहोतीति। भिन्नान्येतानि वाक्यानि, सोऽनु जुहोति इति विधिवाक्यम्, अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा इत्येवमादीनि मन्त्रवाक्यानि। तस्मात् न मन्त्रविधानार्थं जुहोतेः पुनःश्रवणम्। होमविधानार्थं श्रुतिर्विधायिका भवति, मन्त्रविधाने वाक्यं, तस्मादपि न मन्त्रविधानं, अतः समुच्चयः। उभयमपि प्रमाणेन प्राप्तं, प्रत्यक्षश्रवणं प्रमाणं, चोदकोऽपि प्रमाणं, नानाकार्य्यत्वान्नैतयोर्विरोधः। तस्माद्यथा, प्रयाजादीन्न बाधन्ते एवं नारिष्टहोमानपि न बाधेरन्। अत एवंजातीयकं कर्मसंस्कारं विकृतावधिकं स्यात् इति।

## चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥ (आ० नि०)

अथ यदुक्तं, शरमयं बर्हिर्भवति इति यथा शराः कुशान् निवर्त्तयन्ति, एवमिहापीति। अत्रोच्यते, युक्तं शरमये, भवति हि तत्र प्रकृतिलिङ्गेन संयोगः, बर्हिःशब्देन, एवंविशिष्टं वा बर्हिर्भवति, शरा वा बर्हिषः कार्य्यं वर्त्तन्त इति। इह तु प्रकृतिलिङ्गासंयोगः, तस्माद्विषमं बर्हिषेति॥ (१०।४।१ अ०)॥

—

शरमयबर्हिषा कौशबर्हिर्बाधाधिकरणम्। (प्रथमवर्णकम्)।

एवं वा। इदमाम्नायते, सौमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन् इति। तत्रेदं श्रूयते, शरमयं

बर्हिर्भवति इति । तत्र संशयः, किं कौशं निवर्त्तते, न ? इति । किं प्राप्तम् ? उभयस्य प्रमाणावगतत्वात् समुच्चयः ।

एवं प्राप्ते ब्रूमः, चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत इति । अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिःशब्देन संयोगः, तस्मात् प्राकृतस्य निवृत्तिरिति ।

---

वाजपेये रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोरेव बाधाधिकरणम् ।

(द्वितीयवर्णकम्)

एवं वा, अस्ति वाजपेयः, शरदि वाजपेयेन स्वाराज्यकामो यजेत इति । तत्र श्रूयते, रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति । दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति इति । अस्ति च प्रकृतौ, उपावर्त्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः, किं रथघोषेण दुन्दुभिघोषेण यो नादः स मन्त्रस्य निवर्त्तकः, यत् द्रव्यं तत् दर्भयोः, उतोभयम् उभयस्य निवर्त्तकम् ? इति । किं प्राप्तम् ?, शब्दत्वेन सामान्येन नादो मन्त्रस्य निवर्त्तकः, द्रव्यत्वेन द्रव्यं दर्भयोः । ननु तत्पुरुषनिर्देशोऽयं, तेन परार्थेन रथस्य घोषविशेषणत्वेनोच्चारणं, न स्वकार्य्येण निर्देशः ।

अत्रोच्यते, द्वन्द्वनिर्देशोऽपि ईदृशो भवति, तत्रायमप्यर्थः, न रथः परार्थ उच्चरिष्यते । श्रुतिर्हि तथा हीयेत, लक्षणा च स्यात् । चोदनालिङ्गसंयोगाश्च बाध्येत, तस्मात् घोषो मन्त्रस्य निवर्त्तको द्रव्यं दर्भयोः इति ।

एवं प्राप्ते ब्रूमः, चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत, उभयस्य चोदनालिङ्गसंयोगो नैककस्य, रथघोषेणेति श्रूयते, न रथेन घोषेण चेति। रथविशिष्टो घोषो लक्षणं स्तोत्रोपाकरणस्य, प्रकृतौ दर्भौ लक्षणं मन्त्रश्च। ननु इदानीमिवोक्तं द्वन्द्वनिर्देशो भविष्यति इति। नैतदेवं, द्विवचनं हि तथा स्यात्, एकवचनेन च निर्देशः, तेनैको लक्षणं, स च घोषः, तेन हि समभिव्याहारः तृतीयायाः। ननु समुदायेन समभिव्याहारो भविष्यति। न हि समुदायस्य अशब्दार्थत्वात्। अथ समुदायो निर्दिश्येत, ततोऽभ्युपगतमुभयस्य निवर्त्तकमिति। ननु मन्त्रो वाचक एव उपावर्त्तव्यमिति। नेत्युच्यते, उपावर्त्तनमात्रस्याभिधायको मन्त्रो न चोपावर्त्तनमात्रं स्तोत्रोपाकरणम्। अथाप्यभिधानं स्यात्, तथापि तस्य निवर्त्तकः, लक्षणेनोपाकर्त्तव्यमितिप्रत्यक्षा श्रुतिः, अभिधानेन उपाकर्त्तव्यमिति चोदकः, श्रुतिश्च चोदकाद्बलीयसी। तस्मादुभयस्य निवर्त्तको रथघोषो दुन्दुभिघोषश्चेति। किं भविष्यति प्रयोजनम्? यदि रथो न घोषविशेषणम्, अरथविशिष्टोऽपि घोषस्तत्रोपाकरणं लक्षयेदिति॥ (१०।४।२ अ०)॥

---

बृहस्पतिसवादौ वार्हस्पत्यग्रहादिभिः प्राकृतेन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम्।

**सर्वत्र तु ग्रहाम्नानमधिकं स्यात् प्रकृतिवत्॥ ३॥ (सि०)**

बृहस्पतिसवे श्रूयते, वार्हस्पत्यं ग्रहं गृह्णाति विषुव-

त्यकं ग्रहं गृह्णाति इति । महाव्रते शुक्रग्रहं गृह्णाति इति । अश्वमेधे सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णाति इति । सन्ति तु प्रकृतौ ऐन्द्रवायवादयो ग्रहाः, त इह चोदकेन प्राप्ताः । तत्र संशयः, वैकृतैस्ते निवर्त्यन्ते उतानिवृत्तिः, समुच्चयः ? इति । किं प्राप्तम् ? प्रत्यक्षश्रुता वैकृताश्चोदक-प्राप्तान् प्राकृतान् निवर्त्तयितुमर्हन्ति, अस्ति हि तेषां प्रकृतिलिङ्गेन ग्रहशब्देन संयोगः इति ।

एवं प्राप्ते ब्रूमः, तत्र तत्र सर्वत्र ग्रहाम्नानमधिकं भवितुमर्हति, प्राकृतस्यानिवृत्तिः इति । कुतः ? उभयेषां प्रमाणावगतत्वात्, चोदकोऽपि प्रमाणं, प्रत्यक्षश्रवणमपि । ग्रहशब्दः प्रकृतिलिङ्गम् इति चेत् । नैवं, यदि ग्रहशब्दमुच्चार्य्य गुणो विधीयते, ततः प्राकृता एव ग्रहा गुणविकृता भवेयुः। अथ ग्रहसम्बन्धेनाग्रहो विधीयते, ततो ग्रहकार्य्ये वर्त्तत इति प्राकृतं निवर्त्तयेत्, यथा, खलेवाली यूपः इति । अन्यः पुनरेष ग्रहशब्दो ग्रहणवचनः, अर्कं नाम ग्रहं गृह्णाति, महिमानौ नाम ग्रहौ गृह्णाति इति । अत्रापूर्वा ग्रहणक्रिया विधीयते । तस्मान्न ग्रहशब्दश्चोदनालिङ्गमेकार्थानां हि विकल्पो वा बाधो वा भवति, न चैषां वैकृतैरेकार्थता ।

ननु यागनिर्वृत्त्यर्थाः सर्वे, तेनैषामेकार्थता इति । उच्यते, यागं प्रति संहत्यकारिण एते, न निरपेक्ष एकैक एषां साधकः, न ह्येषां पृथक्त्वेन यागसम्बन्धः, अर्केण यजेत, शुक्रेण यजेत इति, कथन्तर्हि प्रयोगवचन एषां ग्राहकः, स च सन्निहितानां, न च सन्निधाने विशेषोऽस्ति,

तस्मात् सर्वेषां प्राकृतानां वैकृतानाञ्च संग्राहकः प्रकृति-वत्, यथा प्रकृतौ ऐन्द्रवायवग्रहणं चोदितं, मैत्रावरुण-ग्रहणं पुनश्चोद्यते, विभागश्चादृष्टार्थः संस्कारो देवतोद्देशश्च, अदृष्टत्वात् कार्य्यस्य, न ज्ञायते पूर्वं उत्तरस्य कार्य्यं भवति इति, प्रयोगवचनग्रहणाच्च समुच्चयः, न केवलं मैत्रावरुणा-दिभिः सह अप्रकरणाधीताभ्यामंश्वदाभ्याभ्यामपि। एवं वि-कृतावपि समुच्चयो भवितुमर्हति।

आह, ननु ग्रहं सङ्कीर्त्त्य गुणो विधीयते, अश्वमेधे सौवर्णराजताभ्याम् इति। अत्रोच्यते, न तौ प्राकृतौ ग्रहौ रूपज्ञा वोत्पत्तिसंयोगात् इति ग्रहकर्मणी भिद्येते। आह, इह तर्हि वार्हस्पत्यं गृह्णाति इति देवताविधानार्थं स्यात्। उच्यते, ग्रहे विधीयमाने श्रुतिरनुगृहीता, देवतायां वाक्यं, श्रुतिश्च वाक्याद्बलीयसी। आह, आग्नेयवत्, यथा अग्नि-ष्टुति आग्नेया ग्रहा भवन्तीति देवताविधानं भवति, एव-मेकवचनान्तेनापि तस्याविवक्षितत्वात्, यथा ग्रहं सम्माष्टि इति सर्वग्रहाणां सम्मार्गोऽभिधीयते, एवमिहापि सर्व-ग्रहाणां देवता विधीयते। अत्रोच्यते, उक्तमेतच्छ्रुतेर्बलीय-स्त्वादिति। आग्नेया ग्रहा भवन्तीति तु वाक्यमविरुद्धं श्रुत्या, न हि तत्राग्नेयं ग्रहं गृह्णातीति, आग्नेयसत्ता तत्र वाक्येन श्रुत्यविरुद्धेन चोद्यमाना युक्तैवेति। तस्मात् प्राकृ-तेभ्यो व्यतिरिक्तो वार्हस्पत्यः प्राकृतैः समुच्चीयते। यथा प्रकृतौ अंशुं गृह्णाति अदाभ्यं गृह्णाति इति अप्राकर-णिकौ प्राकरणिकैः समुच्चीयेते, एवमिहापि वैकृताः समु-च्चीयेरन्निति।

## अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥ (यु०)

इतश्च पश्यामः समुच्चय इति । कुतः ? । निःसन्दिग्धैश्च अधिकैः सुराग्रहैरेकवाक्यत्वं भवति । कथम् ? । सप्तदश एते ग्रहा गृह्यन्ते द्वये प्राजापत्याः सोमग्रहाः सुराग्रहाश्च, अत्र व्यक्तमधिकाः सुराग्रहाः, तेषु गृह्यन्ते इति ग्रहणं चोद्यते, नानूद्यते । सकृदुच्चरितः गृह्यन्ते इति शब्दः सोमग्रहैरपि सम्बध्यते । तस्माच्चोदनान्तरं ग्रहाणामनेन असन्दिग्धेन अन्यदप्येवमेवावगम्यते ।

## लिङ्गदर्शनाच्च ॥ ५ ॥ (हे०)

लिङ्गमप्येतमर्थं दर्शयति । किम् ? । विरण्शी वा एष यज्ञक्रतुर्यद् वाजपेय अतीव ह्यग्निष्टोमं क्रामत्युक्थ्यमति षोड़शिनं नातिरात्रम् आप्नोति इति । विरण्शशब्दो विस्तीर्णे भवति, यथा विरण्शानि अरण्यानि विस्तीर्णानीति गम्यते, यदि समुच्चयः, एवं विस्तीर्णता, बाधायां नोपपद्यते, तस्मादपि समुच्चय इति ॥ (१० । ४ । ३ अ० ) ॥

---

वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् ।

## प्राजापत्येषु चाम्नानात् ॥ ६ ॥

अस्ति वाजपेयः, वाजपेयेन स्वाराज्यकामो यजेत इति । तत्र प्राजापत्याः पशवः, सप्तदश प्राजापत्यान् पशूनालभते इति । सन्ति तु प्रकृतौ क्रतुपशवः, ते इह चोद-

केन प्राप्ताः। तत्र संशयः, किं ते प्राजापत्यैः क्रतुपशवो बाध्यन्ते, उत समुच्चीयन्ते ? इति। किं प्राप्तम् ? प्रत्यक्षाः प्राजापत्याः चोदकप्राप्तान् क्रतुपशून् बाधेरन्निति।

एवं प्राप्ते ब्रूमः, प्राजापत्येषु च समुच्चयः स्यात्। चशब्दः अन्वाचयार्थः। आम्नायन्ते हि क्रतुपशवः, ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोड़शी नातिरात्रः इति। अथ कस्माद् वाजपेयेन सर्वे यज्ञक्रतवोऽवरुध्यन्ते, पशुभिरिति ब्रूयात् यदाग्नेयं पशुमालभतेऽग्निष्टोमे तेनावरुन्धे ऐन्द्राग्नेनोक्थ्यम् ऐन्द्रेण षोड़शिनं सारस्वत्याऽतिरात्रं मारुत्या बृहत्स्तोत्रमेतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे इति समुच्चयं दर्शयति। ननु दर्शनमिदमुपदिश्यते, कोऽत्र न्यायः ? इति। उच्यते, प्रकृतिलिङ्गासंयोगः। ननु पशुशब्दः प्रकृतिलिङ्गम्। नेत्याह, नात्र पशुमनूद्य देवता विधीयते, सङ्ख्याश्रवणात्। सङ्ख्यादेवताश्रवणात् कर्मान्तरं चेदमुक्तं, पृथक्त्वनिवेशात् सङ्ख्यया कर्म्मभेदः स्यात् इति। अतो ग्रहाणामिव समुच्चयो भवितुमर्हतीति॥ (१०। ४। ४ अ०)॥

---

साङ्ग्रहणीष्टौ आमनहोमैः अनुयाजानां समुच्चयाधिकरणम्।

## आमने लिङ्गदर्शनात्॥ ७॥

अस्ति साङ्ग्रहणीष्टिः, वैश्वदेवीं साङ्ग्रहणीं निर्वपेद् ग्रामकामः इति। तत्र श्रूयते, आमनमस्या देवा इति तिस्र

आहुतीर्जुहोति इति। सन्ति तु प्रकृतौ त्रयोऽनुयाजाः, तेऽत्र चोदकेन प्राप्ताः। तत्र संशयः, किमामनहोमैरनुयाजा निवर्त्तन्ते, उत तैः समुच्चीयन्ते? इति। किं प्राप्तम्?, प्रत्यक्षश्रुतैरामनहोमैरानुमानिका अनुयाजा निवर्त्येरन्। अपि च नित्यं प्रकृतिलिङ्गयोगो भवति।

एवं प्राप्ते ब्रूमः, आमने समुच्चयः स्यात्। कुतः?। लिङ्गदर्शनात्, लिङ्गं हि इममर्थं दर्शयति। किं लिङ्गम्? वहिरात्मा वै प्रयाजानुयाजा आत्मा देवता यत् प्रयाजानुयाजानां पुरस्ताद्वा उपरिष्टाद्वा जुहुयाद्वहिरात्मानं सजातानामादधीत, अथ यन्मध्यतो जुहोति मध्यत एव सजातानामात्मानं धत्ते इति अनुयाजानाम् अनिवृत्तिं दर्शयति। आह, ननु नित्यं प्रकृतिलिङ्गसंयोगः। नेत्याह, न हि सङ्ख्यामात्रमनूद्य शक्यते गुणो विधातुं, न हि, कस्यचित् काचित् सङ्ख्या न भवति। तस्मान्न सङ्ख्या प्रकृतिलिङ्गसंयोगः। लिङ्गदर्शनं त्विदम् अपदिष्टं, प्राप्तिरत्र वक्तव्येति। उच्यते, आहुतीर्जुहोति इति श्रुत्या आहुतिसत्ता, वाक्येन मन्त्रविधानं, त्रिसङ्ख्या चानुवादत्वे नावकल्पते। सङ्ख्यामन्त्रवन्ति तु यागान्तराणि विधीयन्ते। तेषां चोभयप्रमाणावगतत्वात् समुच्चयो न्याय्य इति॥ (१०।४।५ अ०)॥

———

महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम् ।

उपगेषु शरवत् स्यात् प्रकृतिलिङ्गसंयोगात् ॥८॥
(पू०)

महाव्रते श्रूयते, पत्न्य उपगायन्ति पिच्छोलाभिरुपगायन्ति, काण्डवीणादिभिरुपगायन्ति आपाटलिकाभिरुपगायन्ति इति। अस्ति तु प्रकृतौ ऋत्विज उपगायन्ति इति। तदिह चोदकेन प्राप्यते। तत्रायमर्थः सांशयिको भवति, किं पत्नीभिः उपगायन्ति इति ऋत्विज उपगायन्तो निवर्त्तन्ते, उत न निवर्त्तन्ते ? इति। तत्रैतत् तावच्चिन्त्यते, किं गानोपगानमेतत्, उत वादित्रोपगानम् ? इति। तत्रापि द्वैतं, किं गानस्योपगानम्, गानोपगानं, उत गानमेवोपगानं गानोपगानम् ? इति। किं तावत् प्राप्तम् ? प्राकृतं निवर्त्तते इति। तत इदं वर्ण्यते, गानस्योपगानमिति, पत्न्यो गायतां गानमुपचिन्वन्ति इति, गानं प्राप्तमेव प्राकृतम्, उपचय उपसर्गार्थो विधीयते। तस्माद्गानस्योपगानम् इति।

अथ वा गानमेवोपगानं, गानशब्दो हि शारीर्यां गीतौ प्रसिद्धः, तस्माद्गानमेतदुपगानं, गानस्य वोपगानमिति। यदा एतयोरन्यतरं, तदा ऋत्विक्कार्य्यं पत्न्यो वर्त्तन्ते। अतः प्रकृतिलिङ्गसंयोगात् प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्त्तते शरवत्, यथा शरमयं बर्हिर्भवति इति शराः प्रत्यक्षश्रुताः चोदकप्राप्तान् दर्भान् निवर्त्तयति, एवमिहापीति।

आनर्थक्यात् त्वधिकं स्यात् ॥ ९ ॥ (सि०)

तुशब्दः पक्षं व्यावर्त्तयति, न निवृत्तिरिति, समुच्चयः स्यात् । तत एतच्चिन्त्यते, वादित्रस्यैतदुपगानम्, अस्ति ह्यत्र वादित्रं, दिक्षु दुन्दुभयो नदन्ति इत्येवमादि, तस्योपगानं वादित्रस्योपगानम् । कथम् ? । प्रत्ययेन हि श्रुत्या धात्वर्थस्य सत्ता उच्यते, विप्रकृष्टा उपसर्गार्थस्य सत्ता अर्थविप्रकर्षात् दुर्बला भवति । तस्मादुपसर्गार्थसत्ताविधानं धात्वर्थसत्ताविधानेन बाध्यते ।

अथ वा वादित्रमिदमुपगानम्, एवं ह्याह, पत्न्य उपगायन्ति काण्डवीणादिभिरुपगायन्ति इति । काण्डवीणादिभिर्वादित्रमुपगानं भवति, भवति च तन्त्रीगाने गानशब्दः । तस्माद् वादित्रमुपगानम् । तत्र यद्येवं वादित्रस्योपगानं, यदि वा वादित्रमुपगानम्, उभयथा प्राकृतादर्थान्तरे भवति । तस्मात् समुच्चयः । कुतः ? । आनर्थक्यात्, एवं चोदकानर्थक्यं न भविष्यति, चोदकोऽनुग्रहीष्यतीत्यर्थः । तस्मात् समुच्चय इति ॥ (१०।४।६ अ०) ॥

---

अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयाधिकरणम् ।

## संस्कारे चान्यसंयोगात् ॥ १० ॥ (सि०)

अस्ति अञ्जनाभ्यञ्जनो नाम एकोनपञ्चाशद्रात्रः । तत्रेदं समाम्नायते, गौग्गुलवेन प्रातःसवने समञ्जते अभिवाञ्जते पैलुदारवेण माध्यन्दिने सवने सौगन्धिकेन तृतीयसवने इति । अस्ति तु प्रकृतौ नवनीतेनाभ्यञ्जनं, तदिह

चोदकेन प्राप्तम्। तत्र संशयः, किं तद् वैकृतेन बाध्यते, उत न? इति। किं प्राप्तम्?। प्रत्यक्षश्रुतत्वात् वैकृतेषु अङ्क्ते अभि वाङ्क्ते इति च, प्रकृतिलिङ्गसंयोगाद्बाध्यते इति। आह, ननु सुत्याकालम् अञ्जनमभ्यञ्जनञ्च सत्रे, दीक्षाकाले नवनीतेनाभ्यञ्जनं प्रकृतौ, अन्यकालत्वात् प्रयोजनान्तरे वर्त्तते इति बाधो न स्यात्। उच्यते, प्रयाजवदन्यकालमपि तत्कार्य्यमेव द्रष्टव्यं, कालमात्रमन्यत्, पदार्थस्तु स एव। यथा तिष्ठन्तं पशुं प्रयजन्ति इति तिष्ठति पशौ प्रयाजा वर्त्तमानाः प्राकृतकार्य्यका एव भवन्ति, एवमिहापि द्रष्टव्यम्।

एवं प्राप्ते ब्रूमः, संस्कारे अञ्जनेऽभ्यञ्जने च प्राकृतेन सह समुच्चयः स्यात्। कुतः?। अन्यसंयोगात्। अन्यकालमिदं कार्य्यान्तरे वर्त्तते, एवं चोदकोऽनुग्रहीष्यते। तस्मात्समुच्चयः इति।

## प्रयाजवदिति चेत् ॥ ११ ॥ (आ०)

इति यदुक्तं तत्परिहर्त्तव्यम्।

## नार्थान्यत्वात् ॥ १२ ॥ (आ० नि०)

न च प्रयाजवत् भवितुमर्हतीति। कुतः?। अर्थान्यत्वात्, स्नेहनार्थम् आदौ नवनीतं सुखप्रचाराय। प्रवृत्ते कार्य्ये सुत्याकालं गौग्गुलवेनाभ्यञ्जनं विरूक्षीकरणार्थं प्रत्यक्षं कार्य्यान्तरे वर्त्तत इति, न प्राकृतं निवर्त्तयितुमर्हति ॥ (१०।४।७अ०)॥

——

महाव्रते अहतवाससः तार्प्यादिभिः समुच्चयाधिकरणम् ।

## आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् ॥ १३ ॥ ( पू० )

महाव्रते श्रूयते, तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी इति। अस्ति तु प्रकृतौ, अहतवासः परिधत्ते इति। तदिह चोदकेन प्राप्तम्। तत्र संशयः, किम् अहतस्य वाससो निवृत्तिः, न ? इति। किं प्राप्तम् ?। आच्छादने तु प्राकृतस्य विकारः स्यात्। कुतः ?। एकार्थ्यात्, एको ह्यर्थः प्राकृतस्य वैकृतस्य च कौपीनम् आच्छादयितुं, प्रकृतौ विकृतौ च प्रच्छादनं क्रियते। तस्मात् प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्त्तेत।

## अधिकं वान्यार्थत्वात् ॥ १४ ॥ ( सि० )

वाशब्दः पक्षं व्यावर्त्तयति, अधिकम् इदं प्राकृताद्वाससो भवितुमर्हति इति। कुतः ?। तत् हि निवर्त्तकं भवति, यदनिवर्त्त्य न शक्नोति निवेष्टुं, यत् तु अनिवर्त्त्यापि शक्नोति भवितुं, न तत् निवर्त्तयति, तत् हि निवर्त्तयत् अप्रतिषेधकं सत् चोदकं प्राप्तं बाधेत। ननु कौपीनप्रच्छादने परिधत्ते इति भवति, नान्यकार्य्ये। उच्यते, नैतदेवं, उपरि वाससोऽपि कार्य्ये परिधत्ते इति भवति। तद्यथा, कम्बलं परिधत्ते, रौरवं परिधत्ते इति। सर्वतो धत्ते परिधत्त इति अवयवप्रसिद्धा भवति। तस्मादहतस्य वाससो न निवृत्तिः, समुच्चय इति।

## समुच्चयञ्च दर्शयति ॥ १५ ॥ ( यु० )

समुच्चयञ्च वासःशब्देन बहुवचनान्तेन दर्शयति, वासांसि वाराही चोपानहौ विमुञ्चति इति। कृष्णविषाणया वासांसि विस्रंसयति, ततोऽध्वर्युः परिधत्ते इति। तस्मादपि पश्यामो अनिवृत्तिः समुच्चय इति ॥ ( १० । ४ । ८ अ० ) ॥

---

महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणम् ।

## सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥

महाव्रते श्रूयते, श्लोकेन पुरस्तात् सदसः स्तुवते अनुश्लोकेन पश्चात् सदसः क्रौञ्चेन चात्वालमवेक्ष्यमाणः इति। सन्ति तु प्राकृतानि सामानि इह चोदकेन प्राप्तानि। तत्र संशयः, किं प्राकृतानां साम्नां निवृत्तिः, उत अनिवृत्तिः, समुच्चयः ? इति। किं प्राप्तम् ?। स्तुवते इति प्रकृतिलिङ्गसंयोगे प्रत्यक्षश्रुते चोदकप्राप्तानि सामानि निवर्त्यन्ते इति। यथा, कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, श्रुद्धाशुद्धीये भवतः, भर्गयशसी भवतः। क्रौञ्चानि भवन्ति इति श्रुतेषु चोदकप्राप्तानि निवर्त्यन्ते, एवमिहापि द्रष्टव्यम्।

एवं प्राप्ते ब्रूमः, सामसु श्लोकेन पुरस्तात् स्तुवते इत्येवमादिषु श्रूयमाणेषु प्राकृतानाम् अविकारः प्रतीयेत। कुतः ?। अर्थान्तरश्रुतेः, अर्थान्तरेण हि सम्बन्धः श्रूयते,

पुरस्तात् सदसः स्तुवते इत्येवमादिषु । यच्च पदं केनचित् पदेन सम्बध्यते विशेषणत्वेन न तत् पदान्तरेण सह सम्बन्धमर्हति सकृदुच्चरितम् । यथा, भार्य्या राज्ञः, पुरुषो देवदत्तस्य इति भार्य्याविशेषणत्वेनोच्चार्य्यमाणः राज्ञः इतिशब्दो न पुनः पुरुषशब्देन सम्बध्यत इति, एवं पुरस्तात् सदसः स्तुवते इत्यनेन सम्बध्यमानो न पुनः श्लोकेन स्तुवते इति सम्बन्धमर्हति ।

यदि स्तुतौ देशसत्ता विधीयते, श्लोकेन चेति अनूद्येत, तत उपपद्येत एकं वाक्यमिति । यदा तु पुनर्देशसत्ता विहिता, तदा परिपूर्णं वाक्यं, श्लोकेन चेत्येतदपि विधातव्यं, तदा पुनर्विधिप्रत्ययो हृदयम् आनेतव्यः, हृदयम् आनेतुमुच्चारयितव्यः । न चोच्चारितः, तस्माद् अनुच्चारितो वा कल्पयितव्यः,उच्चारणं वा कल्पयितव्यं, कल्पनायाञ्च शब्दो बाध्येत । तस्मात् नैवम् । कथन्तर्हि ?, देशसानविशिष्टा स्तुतिः श्रुत्या विधीयते, न चैकेन केनचित् सम्बन्धे विहिते, परिपूर्णे वाक्ये पुनरपरं वाक्यं कल्पयितव्यं भवति । उभयविशेषणविशिष्टा हि स्तुतिः श्रुत्या यदा विहिता, तदा परिपूर्णं वाक्यं, न तदा पुनरपरेण केनचित् सम्बन्धः कल्पयितव्यो भवति, यदर्थं किञ्चित् द्विरुच्चार्य्येत, तस्मात् स्तुत्यन्तरमिदं विधीयते, न प्राकृतं निवर्त्त्यते, समुच्चयः इति ।

## अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात् ॥ १७ ॥ ( यु० )

अथ यदुपवर्णितं, यथा कौत्सं भवति, काण्वं भवति,

वशिष्ठस्य जनित्रे भवतः इत्येवमादिभिरिव प्राकृतानां निवृत्तिः, इति, तत् परिहर्त्तव्यम्। अत्रोच्यते, युक्तमत्र यत् प्राकृतं निवर्त्त्यते, अत्र हि अर्थान्तरं न श्रूयते, प्राकृतस्यैव शेषः श्रूयते, तस्मात् तत्र वैकृतेन प्रत्यक्षश्रुतेन प्राकृतस्य निवृत्तिरिति, इह तु अर्थान्तरश्रवणाद् वाक्यभेदप्रसङ्गात् अनिवृत्तिरित्युक्तम्।

---

विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम्।
(द्वितीयवर्णकम्।)

एवं वा, क्वचित् श्रूयते, कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, कौत्सानि भवन्ति इति, सन्ति तु प्रकृतौ सामानि तत्र चोदकेन प्राप्तानि। किं तानि निवर्त्त्यन्ते, न? इत्येषोऽर्थः सन्दिह्यते। किं प्राप्तम्?। अनिवृत्तिः, समुच्चय इति। कुतः?। साममात्रं विधीयते, न स्तुवते इति प्रकृतिलिङ्गसंयोगोऽस्ति। तस्मादधिकमिति।

एवं प्राप्ते ब्रूमः,

### अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात् ॥ १७ ॥

तुशब्दः पक्षं व्यावर्त्तयति, अश्रूयमाणेऽप्यर्थे प्राकृतस्य विकारः स्यात्, शेषभूतं हि प्रकृतौ साम, इदमपि साम श्रूयते, तत्सामत्वेन सामान्येन साम्नः कार्य्यं भवितु-

मर्हति। तद्यथा, दधि घृतं शाकं शालयः देवदत्तो भोजयितव्यः, देवदत्तवत् यज्ञदत्तस्तैलेनेति, यद्यपि तैलेन स्नेहयितव्य इति न श्रूयते, तथापि स्नेहने एव तैलं भवति, तत्समर्थत्वात्। एवं यद्यपि साम्ना ऋक् संस्कर्त्तव्येति न श्रूयते, एवमपि तत्समर्थत्वात् साम ऋक्संस्कारे एव भवितुमर्हति ॥ (१०।४।८अ०) ॥

——

कौत्सादिभिर्व्यवस्थया एकादिबाधाधिकरणम्।

सर्वेषामविशेषात् ॥ १८ ॥ ( पू० )

क्वचित् श्रूयते, कौत्सं भवति काण्वं भवति वशिष्ठस्य जनित्रे भवतः शुद्धाशुद्धीये भवतः भर्गयशसी भवतः क्रौञ्चानि भवन्ति इति। सन्ति तु प्राकृतानि सामानि तत्र चोदकेन प्राप्तानि, तानि प्राकृतानां निवर्त्तकानीत्येतत् समधिगतम्। अथैषोऽर्थः सन्दिह्यते, किं सर्वाणि सर्वेषां निवर्त्तकानि, अथ किमेकम् एकस्य, द्वे द्वयोः, बहूनि बहूनाम्? इति। किं तावत् प्राप्तम्?, सर्वाणि सर्वेषामिति। कुतः?। विशेषाभावात्, न हि विशेषः कश्चिदस्ति, येनावगम्यते, इदमस्य निवर्त्तकं, नान्यस्येति। तस्मात् सर्वं सर्वस्य निवर्त्तकमिति।

एकस्य वा श्रुतिसामर्थ्यात् प्रकृतेश्चाविकारात् ॥ १९ ॥ (सि०)

न चैतदस्ति, सर्वाणि सर्वेषां निवर्त्तकानीति। एकमेकस्य, द्वे द्वयोः, बहूनि बहूनाम् इति। कुतः ?। श्रुतिसामर्थ्यात्, कौत्सं भवति काण्वं भवति इति एकैकस्य निवृत्तिं कृत्वा श्रुतिः समर्था अर्थवतीति। एवं वशिष्ठस्य जनित्रे भवतः शुद्धाशुद्धीये भवतो भर्गयशसी भवतः इति द्वयोर्निवृत्तौ कृतायां श्रुतिसामर्थ्यमनुगृहीतं भवति। तथा क्रौञ्चानि भवन्ति इति त्रिभिः त्रीणि निवर्त्त्यं कृतसामर्थ्या श्रुतिर्भवति। यद्येकस्मिन् श्रुते एकमेव निवर्त्त्यते, ततो यावत्येव असौ अङ्गीकृता प्राकृती सामसङ्ख्या तावत्येव भवति, एवं सर्वत्र। किमेवं भविष्यति ?। प्रकृतेरविकारः, प्राकृतानामवशिष्टानां साम्नां ग्रहणं भविष्यति, तत्र चोदकोऽनुग्रहीष्यते। तस्मादेकम् एकस्य निवर्त्तकं, द्वे द्वयोः, बहूनि बहूनामिति ॥ (१०।४।१० अ०)॥

---

विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाधिकरणम्।

## स्तोमविवृद्धा त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वात् ॥ २० ॥

सन्ति विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतवः, एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामम् इति। तथा द्वात्रिंशाः पवमाना अभिषेचनीयस्य। तत्र नव राजसामानि, एकादश राजसामानि, बलीवअवसे वशिष्ठस्य जनित्रे च साक-

श्रवेदनाव्याहुः। शुद्धाशुद्धीये च संश्रवोपपदे चोभे। तथा रथहविर्धाने पुनःस्तोमस्य यज्ञस्य, तथा अपचितिवत्यः पुनःस्तोमस्य यज्ञस्य,

पुनःस्तोमस्य सवनं मध्यमं द्वादशं स्मृतम्।
कार्य्यौ नवदशस्तोमावभितः सवने उभे॥ इति।

तदत्र क्वचित् प्राकृती स्तोत्रसङ्ख्या विवृद्धा, क्वचिद्धीना। तत्र सन्देहः, किं विकृतौ विवृद्धौ हानौ च प्राकृतानां साम्नां निवृत्तिः, उत हानौ निवृत्तिः, विवृद्धावनिवृत्तिः? इति। किं प्राप्तम्?। उभयत्र निवृत्तिः, प्रत्यक्षश्रुतेन हि चोदकप्राप्तं निवर्त्त्यते। साम्नां चोत्पत्तिरर्थवती भविष्यति अपूर्वेषु क्रियमाणेष्विति।

एवं प्राप्ते ब्रूमः, स्तोमविवृद्धौ अनिवृत्तिराधिक्यं स्यात्। कुतः?। आगमेन हि साम्नां सङ्ख्यापूरणं वक्ष्यते, आगमेन वा स्यादभ्यासस्याश्रुतित्वात् (१०।५।२३सू०) इति। एवं चोदकानुग्रहो भविष्यति। अविवृद्धौ तु प्राकृतं निवर्त्त्येत, यावता निवृत्तेन सा सङ्ख्या पूर्य्यते, तावत् प्राकृतं बाधितव्यं, अन्यत् प्राकृतमेव स्यात्। कुतः?। इतरस्य अश्रुतित्वात्, इतरं न श्रूयते, आगमः कर्त्तव्य इति, सङ्ख्यामात्रं श्रूयते। तस्मात् विवृद्धस्तोमकेषु अनिवृत्तिः, हीनस्तोमकेषु यावदर्थं निवर्त्तयितव्यम्। अथ यदुक्तं, साम्नां उत्पत्तिरर्थवती भविष्यति इति। उच्यते, बाध्यतां आर्षं चोदकेन, गुणमात्रमविशिष्टार्षम्। गुणश्चोदकः इति॥ (१०।४।११अ०)॥

पवमान एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणम् ।

## पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ ॥ २१ ॥

इह वृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतव उदाहरणं, त एव ये पूर्वस्मिन्नधिकरणे उदाहृताः । तत्रैषोऽर्थः समधिगतः, विवृद्धस्तोमकेष्वनिवृत्तिरविवृद्धस्तोमकेषु निवृत्तिः इति । अथेदानीम् इदं सन्दिह्यते, किं यस्मिन् कस्मिंश्चिदावापो यतः कुतश्चिदुद्वापः, उत पवमानेष्वेव अवापोद्वापौ ? इति । किं प्राप्तम् ? । अविशेषात् अनियमः इति ।

एवं प्राप्ते ब्रूमः, पवमाने आवापोद्वापौ स्याताम् इति । कुतः ? । अस्मिन्नेव हि तौ दृश्येते, त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुप्, अत्र ह्येवावपन्ति अत एवोद्वपन्ति इति ।

ननु दर्शनमिदं प्राप्तिरुच्यताम् । उच्यते,

## वचनानि त्वपूर्वत्वात् ॥ २२ ॥

असति न्याये वचनान्येव एतानि कल्प्यन्ते । तस्मात् पवमान एव आवापोद्वापस्थानमिति ॥ (१०।४।१२ अ०) ॥

---

यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् ।

## विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ ॥ २३ ॥

तौ दर्शपूर्णमासौ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति। तत्रेदमाम्नायते, यदाग्नेयोऽष्टाकपालो अमावास्यायां पौर्णमास्यां चाच्युतो भवति इति। सन्ति चाग्नेरभिधानानि, अग्निः शुचिः पावकः धूमकेतुः कृशानुर्वैश्वानरः शाण्डिल्यः इत्येवमादीनि। तत्र सन्देहः, वाचिषु निगमेषु किं येन केनचिदग्नेः शब्देनाभिधानं कर्त्तव्यम्, उत विधिशब्देनाग्निशब्देन ? इति। किं प्राप्तम् ?। येन केनचिदिति। कुतः ?। अग्न्यर्थनिर्देशात्, अग्न्यर्थेन पुरोडाशः संबद्धव्यः, अग्न्यर्था देवता कर्त्तव्या, त्यागकाले उद्देष्टव्या, सा येन शब्देन शक्यते उद्देष्टुं, तेनोद्देशनीया, सा एषां शब्दानामन्यतमेन शक्या उद्देष्टुम्। तस्माद् येन केनचित् वाचिषु निगमेषूद्देशः कर्त्तव्य इति।

एवं प्राप्ते ब्रूमः, विधिशब्देनैव अग्निशब्देनोद्देष्टव्या, नान्येन शुच्यादिना इति। कुतः ?। तेन चोदना, तेन विधिशब्देनास्य हविषः सम्बन्धः चोदना भवति। कथमिव ?। आग्नेयः कर्त्तव्य इत्यग्निरस्य देवता कर्त्तव्येत्यर्थः।

का पुनरियं देवता नाम ?। एकं तावन्मतं, या एता इतिहासपुराणेष्वग्न्याद्याः सङ्कीर्त्यन्ते नाकसदस्ता देवता इति।

उच्यते, तासु देवतासु अहरादीनां शार्दूलादीनां वा न संग्रहः। स्मर्य्यते च कालवाचिनां देवतात्वं, कालेभ्यो भवति, मासो देवता संवत्सरो देवता इति।

अपरं मतं, येषु देवताशब्दो मन्त्रब्राह्मणे श्रूयते,

अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता इत्येवमादिषु ते(अ)त्र देवताशब्देनोच्यन्ते इति।

तत्राप्यहरादीनाम् अनुपसंग्रह एव। किञ्च सामान्यवचनस्य शब्दस्य लौकिके व्यवहारे अभावादर्थस्याप्रसिद्धिः स्यात्। तस्मात् सूक्तभाजो हविर्भाजश्च देवताः। काः सूक्तभाजः?। इमं स्तोममर्हते जातवेदसे रथमिव सम्महेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयन्तव (ऋ० १९।४ म०) इति, हविर्भाजः, आग्नेयमष्टाकपालं निर्वपेत्। अग्नीषोमीयमेकादशकपालम् इति। आह, यदि हविर्भाजो देवताः कपालानामपि देवतात्वं प्राप्नोति, तान्यपि हविर्भाञ्जि। एवं तर्हि सा हविर्भाग् देवता, यां प्रति तादर्थ्यं हविषः, सूक्तस्याप्येवमेव। अत्र हि देवताशब्दः स्मर्यते, अग्निदेवत्यं सूक्तम्, अग्निदेवत्यं हविः इति। तथा अतिथिदेवत्यं पितृदेवत्यम् इति। एवं मूर्त्तानाममूर्त्तानां चेतनानामचेतनानां श्रुत्या कञ्चिदर्थं प्रति तादर्थ्येन सङ्कल्पनीयानां देवतात्वं भविष्यति, सामान्यवचनत्वं चोपपत्स्यते

किमतः?। यद्येवं, यस्याः वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामीति सङ्कल्पः क्रियते, सा देवता भवति तत्र।

नन्वेवं सति सुतरां येन केनचिदग्नेः शब्देन निर्देशः करणीयः।

अत्रोच्यते, भवेदेतदेवं, यद्यग्निशब्दोऽर्थप्रत्ययनार्थमुच्चार्येत, अर्थोऽपि हविःसम्बन्धार्थं प्रत्याय्येत, न त्वत्रा-

ग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्य्यते, यत्र ह्यर्थे कार्य्यमासाद्यते, तत्र शब्दोऽर्थप्रत्यायनार्थो भवति, यत्रार्थे न प्रयोजनं, यत्र पुनः शब्दे एव कार्यं, तत्र कार्य्यसम्बन्धार्थः शब्द एव प्रत्यापयितव्यः। देवतायाश्च यज्ञसाधनभावो न रूपेण भवति, केन तर्हि ?, सम्बन्धिना शब्देन। यथा अध्वर्य्यु-र्हस्ताभ्यामुपकरोति, एवं देवता शब्देनोपकरोति, यथा होतुः पाणौ हविर्लेपेनोपस्तृणाति इति पाणिसम्बन्धेऽपि होतैव उपकरोति, एवं सम्बन्धिना शब्देन उपकुर्वती देवता उपकारिणी गम्यते। देवतायामप्युपकारिण्यां चोदितायां शब्दस्यैव यज्ञे समवायः। तस्मान्न शब्दोऽर्थ-प्रत्यायनार्थमुच्चारितः। स चार्थः पुनः शब्दं प्रत्याययेदिति लक्षितलक्षणा हि तथा स्यात्। किन्तर्हि ? शब्द एव हविषा सम्बध्यते, तत्सम्बन्धादर्थोऽपि देवता भविष्यति, यस्य हि शब्दो हविषा तादर्थ्येन सम्बध्यते, सा देवता, शब्दे कार्य्यस्यासम्भवादर्थे कार्य्यं विज्ञायते, इह तु शब्द एव कार्य्यं सम्भवति। तस्मान्नार्थप्रत्ययनार्थः शब्द इति। तदुक्तं वृत्तिकारेण, न वा शब्दपूर्वको ह्यर्थसम्प्रत्ययस्तस्मा-दर्थनिष्पत्तिः इति। एवं चेदग्निशब्देन हविषः सम्बन्धः, नास्ति प्रसङ्गः शुच्यादीनां शब्दानामिति। तस्मात् मन्त्रत्वे विधिशब्द उपादातव्य इति।

उच्यते, नन्वेवं शब्द एव देवता प्राप्नोति। अत्रोच्यते, नैतदस्माभिः परिहर्त्तव्यं, न हीदमुच्यमानमस्मत्पक्षं बाधते, सुतरां शुच्यादीनामप्रसङ्ग इति।

शेषाणां चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते ॥

॥ २४ ॥ (यु०)

इतश्च विधिशब्देन वाचिषु वचनं कर्त्तव्यम् । कुतः ? । शेषाणां मन्त्राणाम् एकः शब्दः, य एवासौ विधिशब्दः, स एव सर्वत्र श्रूयते अपाट्कारे उज्जित्यां स्वाहाकारे च, अपालग्नेः प्रिया धामानि अपाट् सोमस्य प्रिया धामानि अपालिन्द्रस्य प्रिया धामानि इति अपाट्कारे । अग्नेरुज्जितिमनूज्जेषं सोमस्योज्जितिमनूज्जेषम् इत्युज्जित्याम् । स्वाहाऽग्निं स्वाहा सोमम् इत्येवमादि स्वाहाकारे । एवञ्च नित्यवत् श्रूयमाणा अपाचिका भविष्यन्ति, यथाऽस्माभिर्न्यायोऽपदिष्टः । तस्मात् विधिशब्दस्य मन्त्रत्वे भावः स्यात् इति ॥ (१० । ४ । १३ अ०) ॥

---

अतिदेशस्थलेऽपि विधिशब्देनैव देवताभिधानाधिकरणम् ।

तथोत्तरस्यान्ततौ तत्प्रकृतित्वात् ॥ २५ ॥

अस्ति चरुः, सौर्य्यं चरुं निर्वपेत् ब्रह्मवर्च्चसकामः इति । सन्ति सूर्य्यस्याभिधानानि, सूर्य्य आदित्यो भास्करः सविता दिवाकरः इति । तत्र किं वाचिषु निगमेषु येन केनचिच्छब्देनाभिधानं कर्त्तव्यम्, उत विधिशब्देन सूर्य्यशब्देन ? इति । किं प्राप्तम् । अग्निशब्दसंयुक्तास्ते प्रकृतौ निगमा इह चोदकेन प्राप्ताः, न सूर्य्यशब्देनेति, सूर्य्यशब्दो

ङ्खि चरौ, न उज्जियादिषु, ते यथार्थं विपरिणमयितव्याः, सूर्यार्थश्च तेषु सङ्कीर्त्तयितव्यः, स च येन केनचित् सूर्य्य-वाचिना शब्देन सङ्कीर्त्त्यते, तस्मादनियमः। ये च प्रकृता-वग्निशब्दसंयुक्ता निगमास्ते इहोदाहरणं, न असंयुक्ताः।

एवं प्राप्ते ब्रूमः, तथोत्तरस्यान्ततौ तत्प्रकृतित्वात् इति। यथा प्रकृतौ, तथा उत्तरस्यां ततौ विकृतौ कर्त्तव्याः, तत्-प्रकृतित्वात् तेषां, चोदकानुग्रहाय प्रकृतौ च विधिशब्दा-भिप्रायो अग्निशब्दः प्रयुक्तः, न अग्न्यभिधानपरः। इहापि तत्प्रकृतित्वात् विधिशब्दाभिप्रायेणैव निगमाः प्रयोक्तव्याः। न चायं चरुणा सूर्य्यशब्दस्य सम्बन्धः, किन्तर्हि प्रयोगेण, सौर्य्यं निर्वर्त्तयेत् इति प्रयोगेण सम्बन्धः, न सौर्य्यश्चरुः इति, कारकविभक्तिर्हि द्वितीया सा आख्यातेन सम्ब-ध्यते, तस्मात् तत्रापि सूर्य्यशब्देन संयुक्ताः कर्त्तव्या इति॥ (१०।४।१४ अ०)॥

---

आधानेऽग्नेः सगुणनाभिधानाधिकरणम्।

## प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात्॥ २६॥ (सि०)

अस्ति आधानं य एवं विद्वानग्निमाधत्ते इति। तत्र पवमानहवींषि श्रूयन्ते, अग्नये पवमानायाष्टाकपालं नि-र्वपेत्, अग्नये पावकायाग्नये शुचये इति। तत्र संशयः क्रियते, किं सगुणस्याग्नेरभिधानं कर्त्तव्यं, उत निर्गुणम्?

इति। किं प्राप्तम्?। प्राकृतस्य निर्गुणस्य सगुणेन अभिधानं कर्त्तव्यमिति।

**अविकारो वा अर्थशब्दानपायात्स्यात् द्रव्यवत् ॥ २७ ॥ (पू०)**

अविकारो वा स्यात्, निर्गुणमभिधानम्। कुतः?। अर्थशब्दानपायात्, एवं शब्दोऽर्थश्चानपेतौ भवति, य एव असौ अग्निः, स एव पवमानः, पावकः शुचिश्च। या देवता निर्दिष्टव्या, सा निर्दिष्टैव भवति, असत्यपि गुणवचने, द्रव्यवत्, यथा, सा वा एषा सर्वदेवत्या यदजावशा, वायव्यामालभेत भूतिकामः इति, अजावशाशब्देन चोदिते कर्मणि छागाशब्देन वाचिषु निगमा भवन्ति, अर्थः शब्दोऽनपेत इति कृत्वा। एवमिहापि द्रष्टव्यम्। तस्मान्निर्गुणेन अभिधानं कर्त्तव्यमिति।

**तथारम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २८ ॥ (उ०)**

अथ वा, चोदितेन, सगुणेनाभिधीयेत। कुतः?। आरम्भासमवायात्, न हि आरम्भेण देवता कर्मणि समवैति, न स्वेन रूपेण देवतायाः कर्मणि साधनभाव इत्युक्तम्। यदि हि रूपेण समवेयात्, तथा सति अग्निशब्देन पवमानोऽपि प्रत्याय्यते इति गुणाभिधानं न क्रियेत। कथं

तर्हि साधनभावः ? । श्रुतिसमवायित्वात् देवतार्थस्य, देवताशब्दस्य च हविषश्च सम्बन्धः साक्षादुच्यते, यस्य शब्दस्य सम्बन्धः, स शब्दो वदितव्यः, एवमसौ सम्बन्धः कृतो भवति । यदि च गुणाभिधान न क्रियते, गुणश्रामन-मनर्थकं स्यात् । एवमर्थं हि तत्र शब्द उच्चार्यते, कथमसौ कर्मणि सम्बध्येत इति । तत्र यदि गुणो न सम्बध्नीयात्, गुणवचनवैयर्थ्यं स्यात् । तस्मात् सगुणेनाभिधानं कर्त्तव्य-मिति ।

## द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् ॥ २८ ॥ (आ० नि०)

अथ यदुक्तं द्रव्यवत् इति, सा वा एषा सर्वदेवत्या यदजावशा, वायव्यामालभेत भूतिकामः इति, अजावशा-शब्देन चोदिते कर्म्मणि छागाशब्देन निगमा वाचिषु भव-न्तीति यदुक्तं, तत् परिहर्त्तव्यम् । अत्रोच्यते, युक्तं द्रव्येष्वा-रम्भसमवायः, रूपेण समवायं गच्छति द्रव्यं, तत्र छागा-शब्देन वा असौ आलब्धा यदि वशा यद्यवशा, तत्र सा-ऽभिधीयत इति गम्यते । तस्मादर्थे साधने सति अविकारे-ऽप्यर्थे वचनसामर्थ्यमुपपद्यत इति विना गुणवचनेन, अभि-धानं स्यात् चोदकानुग्रहाय । इह श्रुतिसमवायित्वादवश्यं चोदकप्राप्तस्य विकारः कर्त्तव्य इति ॥ (१०।४।१५ अ०) ॥

——:o:——

आधानाज्ययोरग्नेर्निर्गुणेनाभिधानाधिकरणम्।

## बुधन्वान् पवमानवद्विशेषनिर्देशात् ॥ ३० ॥(पू०)

अस्ति आधानं य एवं विद्वानग्निमाधत्ते इति। तत्र पवमानेष्टयः, अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये इति। तत्राज्यभागौ प्रकृत्य श्रूयते, बुधन्वान् आग्नेयः कार्य्यः,पावकवान् सौम्यः इति। तत्रायमर्थः सांशयिकः, किं सगुणमग्नेरभिधानं कर्त्तव्यम्, उत निर्गुणम् ? इति।

तत्रैवं तावत् परीक्ष्यते, किं देवतानिर्देशोऽयं, मन्त्रनिर्देशः ? इति। देवतानिर्देशे सति सगुणमभिधानं, मन्त्रनिर्देशे निर्गुणमिति। किं तावत् प्राप्तम् ?। सगुणमभिधानमिति। तत्र एतद्वर्ण्यते,देवतानिर्देशः इति। कुतः ?। रूपत एव मन्त्राणां प्राप्तत्वात् विधानमनर्थकं, देवता पुनर्न प्राप्नोति, तस्या विधानमर्थवत् भवति, बुधन्वान् आग्नेयः कर्त्तव्य इति देवतया बुधन्वत्गुणयुक्ता भवति बुधन्वान् आग्नेयः। तस्मात् सगुणमभिधानं, यथा पावमानेष्टिषु अग्निः पवमान इति। एवमत्रापि अग्निर्बुधन्वानिति विशेषनिर्देशोऽर्थवान् भविष्यति। तस्मात् सगुणमभिधानमिति।

## मन्त्रविशेषनिर्देशात् न देवताविकारः स्यात् ॥ ३१ ॥ (सि०)

न चैतदेवं, सगुणमभिधानमिति, निर्गुणं कर्त्तव्यम्।

तत्र एतद् वर्णयन्ति, मन्त्रविशेषनिर्देशोऽयम् इति। कुतः । ? मन्त्रविशेषरूपोऽयं शब्दः, आग्नेयो यो विशिष्टाग्निर्विशिष्टः स बुधन्वान् कर्त्तव्यः नाग्निः । अथ अग्निर्बुधन्वान् क्रियते, तत्र बुधन्वानग्निर्देवता स्यात्, तत्राग्नेय इति सापेक्षे तद्धितनिर्देशो न स्यात्, न हि सविशेषणानां वृत्तिर्भवति । न खल्वपि वृत्तस्य विशेषणं प्रयुज्यते । तस्मान्नाग्नेर्विशेषणं बुधन्वत्ता । कस्तर्हि बुधन्वत्तया विशिष्यते ? । आग्नेयः, तस्य बुधो मन्त्रः,तेनासौ बुधन्वान् भवति यागः, अग्निं स्तोमेन बोधय समिधानो अमर्त्त्यम् इति । अथ वा मन्त्र एवाभिसम्बध्यते, बुधन्वान् आग्नेय इति ।

अथ यदुक्तं, रूपादेव मन्त्रः प्राप्नोति न विधातव्यः इति । उच्यते, यः कश्चिदग्न्यभिधानो मन्त्रः प्राप्नोति, तन्निषेधार्थमिदमुच्यते, बुधन्वान् कर्त्तव्यः, अग्निं स्तोमेन बोधय इति । एवं चेत् न देवताविशेषणम् । तस्मान्निर्गुणमभिधानं देवतायाः कर्त्तव्यम् । एवं चोदकानुग्रहो भविष्यति ॥ ( १० । ४ । १६ अ० ) ॥



———

गवानुबन्धनपृषदाज्यहोमयोर्विधिशब्दाभ्यामेव उक्षावनस्पतिशब्दाभ्यामभिधानाधिकरणम् ।

## विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३२ ॥ (पू०)

अस्ति ज्योतिष्टोमः, तत्र श्रूयते, गौरनुबन्ध्योऽजोऽग्नी-

## यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३३ ॥

(सि०)

यथोक्तेन वा शब्देन वचनं कर्त्तव्यं, गोः उस्राशब्देन, स हि तत्राम्नातः, उस्रायै वपायै मेदसोऽनुब्रूहि इति । आह, मन्त्राम्नानमेतत् न वचनमस्ति, अनेन कर्त्तव्यम् इति । वचनं पुनश्चोदको विधिभिन्नेन वक्तव्यम् इति । नैतदेवं, न विप्रतिपत्तिं चोदकः प्रापयति, न हि यत् प्रकृतावस्ति तद्विकृतौ कर्त्तव्यमिति केनचित् प्राप्यते, किन्तु यत् प्रकृतौ चिकीर्षितं शब्देनाभिहितं न अर्थात् प्राप्तं, तत् चोदकः प्रापयति । न च, प्रकृतौ विधिनिगमभेदो विवक्षितः, छागस्य वपायै मेदसोऽनुब्रूहि इत्येतद्वक्तव्यमिति विधीयते, तत्रार्थाद् विधिनिगमभेदो जातः । छागशब्दविधानं श्रुत्या गम्यते, विधिनिगमभेदो लक्षणया । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्मान्न येन केनचिदभिधानं, आम्नानसामर्थ्याद् उस्राशब्देन । तथा पृषदाज्ये देवतायां यो विधिशब्द उक्तः, तेन वचनं कर्त्तव्यं, विधिनिगमविप्रतिपत्तिर्न चोद्यते । तस्माद् वनस्पतिशब्देन निर्देशः कर्त्तव्यः इति ॥ (१०।४।१७अ०) ॥

---

अवभृथे अग्नीवरुणयोः स्विष्टकृच्छब्देनाभिधानाधिकरणम् ।

## स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्त्तेत ॥ ३४ ॥

(पू०)

अस्ति अवभृथः, वारुणेनैककपालेनावभृथं यन्ति इति। तत्र इदमाम्नायते, अग्नीवरुणौ स्विष्टकृतौ यजति इति। तत्रायमर्थः सांशयिकः, किं निगमेऽस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम्, उत सस्विष्टकृच्छब्दकम्? इति। तत्र एवं तावत् परीक्ष्यते, किं सांविज्ञायिकः स्विष्टकृच्छब्दः, उत स्विष्टं करोतीति एतेन गुणेन प्रवृत्तः इति गौणो न रूढ़ः? इति। यदि रूढ़ः, अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम्, अथ व्युत्पाद्यते, ततः सस्विष्टकृच्छब्दकम्। किं प्राप्तम्?, सांविज्ञायिकः, न व्युत्पाद्यते इति। कुतः?। न तावत् स्विष्टं कृतवान्, अथ च तस्मिन्नेव काले स्विष्टकृदित्युच्यते, स्विष्टकृतं यजति इति, न ह्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ भवतः। अग्निरेव स्विष्टकृच्छब्देनोच्यते, तयोर्यः स्विष्टं कृतवान्। यदा सांविज्ञायिकः, तदा अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम्। कुतः?। अग्नेर्हि देवतायाः असौ वाचकः, नाग्नीवरुणयोः, विकृतौ अग्नेर्देवताया अभावात् अग्नीवरुणाभ्यां निवर्त्त्येत। तस्मादस्विष्टकृच्छब्दकं वचनं कर्त्तव्यमिति।

**संयोगो वा अर्थापत्तेरभिधानस्य कर्मजत्वात्॥ ३५॥ (सि०)**

न चैतदस्ति, अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् इति। किन्तर्हि सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् इति। तत एतद्वर्ण्यते, गौणमिदमभिधानमिति, स्विष्टकरणात् स्विष्ट-

कृदिति गम्यते, गम्यमानं न न्याय्यं अविवक्षितं कल्पयितुं, क्रियानिमित्तत्वम् अवयवशब्देभ्यो गम्यते। समुदायस्य चाग्नौ अप्रयोगात् लोकेऽनभिधानत्वं नाध्यवसीयते। तस्मान्न सांविज्ञायिकः। एवं चेत् सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम्, अर्थापत्तेः, अग्नेरर्थे अग्नीवरुणौ श्रूयेते, अग्नीवरुणौ स्विष्टकृतौ यजति इति, क्रियासंयोगित्वाच्च शक्नोति स्विष्टकृच्छब्दः अग्निवरुणौ वक्तुम्। तस्मात् सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् इति। अथ यदुक्तं, स्विष्टं कृतवति चैष शब्दः, न चाग्निः स्विष्टं कृतवान्, इति। अत्र ब्रूमः, मत्पचे भूतकालता हीयेत, त्वत्पचे सा च सोपपदस्य धात्वर्थः। अपि च ततः पूर्वान् यागानपेक्ष्य स्विष्टं कृतवानग्निः॥ (१०।४।१८ अ०)॥

---

अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाधिकरणम्।

## सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात्॥ ३६॥ (पू०)

अस्ति सोमे पशुरग्नीषोमीयः। तत्र श्रूयते, अग्नीषोमीयस्य वपया प्रचर्य्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति इति। तत्र स्विष्टकृति गुणलोपः श्रूयते, अग्निं यजति इति। तदत्र संशयः, किं याग एव स्विष्टकृतो गुणलोपः अवशिष्टेषु निगमेषु यथा प्रकृति भावः, उत सर्वत्रैव गुणलोपः? इति। किं प्राप्तम्? स्विष्टकृतो

अग्नेः सगुणस्य गुणलोपे श्रूयमाणे ब्रूमः, यत्रैवोच्यते, गुण-लोपस्तत्रैव स्यात्, यागे चोच्यते, अग्निं यजति इति, यागे गुणलोपे उच्यमाने यदि सर्वनिगमेषु गुणलोपोऽध्यवसीयेत, अश्रुतं कल्प्येत। यावांश्च श्रुतस्योत्सर्गे दोषः, तावान् अश्रुतकल्पनायाम्। तस्माद् याग एव लोपः स्यात्, न सर्वेषु निगमेष्विति।

## सर्वस्य वैककर्म्यात् ॥ ३७ ॥ ( सि० )

सर्वस्य वा निगमस्थस्यापि स्विष्टकृतोऽग्निशब्दस्य गुणो लुप्येत। कुतः? एककर्म्यात्, नैष स्विष्टकृद्याग एव गुणो लुप्येत, किन्तर्हि यागप्रयोगे। कथम्?। अग्निं यजति इति प्रयोगवचन एष शब्दः, सर्वस्मिन् स्विष्टकृद्यागप्रयोगे लुप्येत, अन्येऽपि हि स्विष्टकृन्निगदाः स्विष्टकृद्याग एव। तस्मात् सर्वत्र लोप इति ॥ ( १० । ४ । १९ अ० ) ॥

---

अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम्।

## स्विष्टकृदावापिकोऽनुयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३८ ॥

स्तो दर्शपूर्णमासौ। तत्र स्विष्टकृत्, अनुयाजेष्वग्निं स्विष्टकृतं यजति इति। तत्र सन्देहः, किं स्विष्टकृद्यागो-ऽनुयाजेष्वारादुपकारकः, उत संस्कारकः? इति। किं

प्राप्तम् ? आरादुपकारकः इति । कुतः ? । एतद्धि कर्मणां प्रसिद्धं कार्य्यं, यत् आरादुपक्रिया, तथा हि भूतस्य भव्यार्थता भविष्यति, श्रुत्या च विधानम् । इतरथा भव्यस्य भूतार्थता स्यात्, वाक्येन च विधानम् । तस्मादारादुपक्रियेति ।

एवं प्राप्ते ब्रूमः, स्विष्टकृदावापिकः स्यात् न बाह्यः, किमिदम् आवापिकः इति ? । आज्यभागस्विष्टकृतौ अन्तरा आवापः स्थानं, तत्र भवः आवापिकः । बहिरावापादनुयाजस्तान्त्रिकः, या तु स्विष्टकृद्देवता तत्र, सैवासौ प्रधानदेवता आवापिकी । तस्मादावापिक इत्युच्यते । यदा चैवं, तदा संस्कारकर्म स्यात्, तथा प्रयोजनवद्भवति, प्रयोजनवती अग्नेरुपकरोति इति । अपि च द्विविधानि अङ्गानि, आरादुपकारकाणि, सामवायिकानि च । आरादुपकारकेभ्यः सामवायिकानि गरीयांसि, तत्र हि साक्षाद्वाक्यम् । आरादुपकारकेषु प्रकृतेन परोक्षैकवाक्यता स्यात् । तस्मात् संस्कारकर्मेति ॥ ( १० । ४ । २० अ० ) ॥

---

दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताधिकरणम् ।

## अन्वाहेति च शब्दवत् कर्म स्यात् चोदनान्तरात् ॥ ३९ ॥ ( पू० )

दर्शपूर्णमासयोः श्रूयते, याज्यामन्वाह पुरोनुवाक्या-

मन्वाह इति। तत्र संशयः, किं याज्यापुरोनुवाक्यानुवचनं प्रधानकर्म, उत संस्कारकर्म ? इति। किं प्राप्तम् ? अन्वाहेति प्रधानकर्म स्यात्। कुतः ?। चोदनान्तरात्, यदि संस्कारकर्म ततोऽस्वरूपादेव तयोर्वचनं प्राप्नोति, पुनः अन्वाहेति वचनमनर्थकं, प्रधानकर्मत्वे तु वक्तव्यं, न ह्यन्यथा तस्य कर्त्तव्यता गम्यते इति। अतः श्रुत्या कर्त्तव्यतावगमात् प्रधानकर्मेति। शस्त्रवत्, यथा स्तोत्रशस्त्रे स्तौति शंसति इति कर्त्तव्यतावगमात् प्रधानकर्मणी। एवमिहापि द्रष्टव्यम्।

**संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥ ४० ॥ ( सि० )**

संस्कारकर्म वा स्यात्। कुतः ?। चोदितस्य अर्थस्य यः शब्दः, स तद्वचनार्थो भवति, स तस्य दृष्टोऽर्थः। तस्मिन् सति अदृष्टकल्पनायां हेतुर्नास्ति। तस्मात् संस्कारकर्मेति। अवाच्यत्वान्नेति चेत् इति यदुक्तं, तत् परिहर्त्तव्यम्,

**स्याद्गुणार्थत्वात् ॥ ४१ ॥ ( आ० नि० )**

स्यात् उपपद्येत अन्वाहेति वचनम्। कुतः ?। गुणार्थत्वात्, तिष्ठन् याज्यामन्वाह आसीनः पुरोनुवाक्यामन्वाह इति स्थानासनगुणार्थं पुनर्वचनं उपपद्यते। तस्मात् संस्कारकर्मणी याज्यापुरोनुवाक्ये इति ॥ ( १०।४। २१ अ० ) ॥

मनोतायामूहाभावाधिकरणम्।

## मनोतायान्तु वचनादविकारः स्यात् ॥ ४२ ॥

अस्ति वायव्यः पशुः, वायव्यं श्वेतमालभेत भूतिकामः इति। अस्ति तु प्रकृतावग्निषोमीये पशौ मनोतामन्त्रः, त्वं ह्यग्ने प्रथमो मनोता। अस्याधियो अभवो दस्म होता (तै० ब्रा० ३।६।१०) इति। स इह चोदकेन प्राप्यते। तत्र सन्देहः, किं यथादैवतमूहितव्यो मनोतामन्त्रः, अथ वा अविकारेण प्रयोक्तव्यः? इति। उच्यते, ननु प्रकृतावन्यायनिगदोऽयम्. अग्नीषोमौ हि प्रकृतौ देवता, अयमप्याग्नेयः, असमवेताभिधानादविकारेण प्रयोक्तव्यः। अत्रोच्यते, सत्यमग्नीषोमौ देवता प्रकृतौ, तौ तु अग्निश्च सोमश्च। तत्राग्निर्देवता न त्वसमवेतः, अग्निप्रत्ययेन या अत्र देवता सा प्रतीयते। अयमिह वायुर्देवताकार्य्यं यूयते, स देवताकार्य्यं श्रूयमाणो अग्निकार्य्यमपि करोति देवताप्रत्ययम्। तस्मात्तदर्थापत्तेस्तद्धर्मा स्यात् (१०।२।३५ सू०) तस्मात् यथादैवतं मनोतामन्त्रः प्रयोक्तव्य इति।

एवं प्राप्ते ब्रूमः, मनोतायां तु वचनादविकारः स्यात् इति। वचनमिदं भवति, यद्यप्यन्यदेवत्यः पशुः, आग्नेय्येव मनोता कार्य्या इति, किमिव वचनं न कुर्य्यात्, नास्ति वचनस्यातिभारः। तस्मादविकारेण मनोतामन्त्रः प्रयोक्तव्य इति॥ (१०।४।२२ अ०)॥

———

कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ।

## पृष्ठार्थेऽन्यद्रथन्तरात् तद्योनिपर्वत्वात् स्यादृचां प्रविभक्तत्वात् ॥ ४३ ॥ (पू०)

अस्ति वैश्वस्तोमः वैश्यो वैश्वस्तोमेन यजेत इति । तत्र श्रूयते, कण्वरथन्तरं पृष्ठं भवति इति । उभयविकारः कण्वरथन्तरमित्युक्तम्, अप्राकृते तद्विकाराद् विरोधाद्व्यवतिष्ठेरन् (९।२।४८ सू०) इति । तत्र संशयः, किं रथन्तरयोनौ बृहद्योनौ वा अनियमेन कण्वरथन्तरं गेयम्, उत रथन्तरयोनौ, अथ वा स्वयोनौ ? इति । किं प्राप्तम् ?, चोदकेन अनियमः, लाघवं हि तथा भवति, ततः प्रयोगप्राशुभावः ।

एवं प्राप्ते ब्रूमः, पृष्ठार्थे यदेतत् अन्यत् रथन्तरात्, कण्वरथन्तरं श्रूयते, तद्रथन्तरयोनौ स्यात् । ज्योतिष्टोमपूर्वको हि वैश्वस्तोमः, ज्योतिष्टोमे रथन्तरयोनौ पृष्ठं कृतम् । ननु बृहद्योनावपि तत्र कृतम् । नैवम्, ऋचां प्रविभक्तत्वात्, ऋचां प्रविभाग इह गम्यते, यथा रथन्तरयोनिर्भवति इति । कुतः ?। कण्वरथन्तरे रथन्तरशब्दः श्रूयते, तेन गम्यते रथन्तरविशेषः कण्वरथन्तरम् इति । अर्थान्तरे कण्वरथन्तरशब्दो भवेत् यदि रथन्तरधर्मा न भवेयुः, तेषु सत्सु यूपवदुपपद्यते । यथा औदुम्बरो यूपो भवति इति, न हि औदुम्बरो यूपद्रव्यं प्रकृतौ सङ्कीर्त्तितम् । धर्मनिमित्तस्त्वयं शब्दः उपपद्यते । एवमिहापि धर्मनिमित्तः कण्वरथन्तरे रथन्तरशब्दो भवति, नान्यथेति

## स्वयोनौ वा सर्वाख्यत्वात् ॥ ४४ ॥ (सि०)

न चैतदस्ति, रथन्तरयोनौ गीयेत इति, किन्तर्हि, स्वयोनौ । कुतः ? । सर्वाख्यत्वात् सर्वविशेषणविशिष्टस्य हि रथन्तरशब्दो वाचकः, प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवतः सर्वस्य सस्तोभस्वरकालाभ्यासस्य कण्वरथन्तरमित्याख्या भवति, तस्मात् योनिरपि विशेषणम् । अपि च अर्थान्तरे कण्वरथन्तरे रथन्तरशब्दः कल्प्यः स्यात् । तस्मात् स्वयोनौ गेयमिति ।

## यूपवदिति चेत् ॥ ४५ ॥ (आ०)

इति चेत् पश्यसि, स्वयोनौ गेयमिति रथन्तरशब्दः तेनोपपद्यते, स हि रथन्तरधर्मेषु सत्सु यूपवदुपपद्यते इति ।

## न कर्मसंयोगात् ॥ ४६ ॥ (आ० नि०)

न एतदेवं, कर्मसंयोगात् काष्ठस्य यूपता, न हि लोके यूप इति सञ्ज्ञातः कश्चित् वृक्षोऽस्ति । यत्र ते संस्काराः, स यूपः, तस्मात् औदुम्बरो यूपो भवति इति संस्कारनिमित्तः, इह पुनरेवंविशेषणविशिष्टः कण्वरथन्तरशब्दो लोक एवास्ति, नासौ कण्वानां रथन्तरं कण्वरथन्तरमित्येवं कृत्वा उच्यते, रथन्तरत्वे कण्वसम्बन्धे वा अस्य विधीयमाने वाक्यभेदः प्रसज्येत । तस्मात् सांविज्ञायिकः कण्वरथन्तरशब्दः । अत एव स्वयोनौ गीयते ॥ ( १० । ४ । १३ अ० ) ॥

---

कखरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ।

## कार्य्यत्वादुत्तरयोर्यथाप्रकृति ॥ ४७ ॥ (पू०)

कखरथन्तर एव भवति संशयः, उत्तरयोर्गायति इति । किं रथन्तरयोन्युत्तरयोः बृहद्योन्युत्तरयोर्वा गेयम्, उत स्वयोन्युत्तरयोः ? इति । किं प्राप्तम् ?, बृहद्योन्युत्तरयोर्वा रथन्तरयोन्युत्तरयोर्वा इति । कुतः ? । चोदकानुग्रहात् । न तत्रैष दोषो भवति स्वयोनिविशिष्टं कखरथन्तरम् इति, उत्तरयोर्हि यत्कार्य्यं, तत्र स्वयोनिरवश्यं ज्ञातव्या भवति । तस्मात् प्रकरणमपेक्षितव्यमिति ।

## समानदेवते वा तृचस्याविभागात् ॥४८॥ (सि०)

न चैतदस्ति, बृहद्योन्युत्तरयोः रथन्तरयोन्युत्तरयोर्वा गेयम् इति, किन्तर्हि, स्वयोन्युत्तरयोः । कुतः ? । तृचशब्दात्, समानच्छन्दसि समानदेवताके च अविशेषितस्तृचशब्दो भवतीत्युक्तम् । अतः श्रुत्या चोदको बाध्यत इति स्वयोन्युत्तरयोर्गेयमिति ॥ ( १० । ४ । २४ अ० ) ॥

---

अग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् ।

## ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ४९ ॥ (सि०)

अस्ति अग्निष्टुत् एकाहः । तत्र श्रूयते, आग्नेया ग्रहा

यदुक्तं विष्णुर्देवतेति तत् गृह्यते, न त्वमावास्याया-मुपांशुयाज इति। विधायको हि तस्य शब्दः पौर्णमास्याम्, आज्यस्यैव नो उपांशु पौर्णमास्यां यजन् इति. तं मन्त्राम्नानं न शक्नोति अमावास्यायामाक्रष्टुम्। उपांशुयाजे मन्त्रस्य विधानात, यत्रोपांशुयाजः तत्र मन्त्र इति गम्यते, न, यत्र मन्त्रस्तत्रोपांशुयाज इति, उपांशु-याजस्य हि मन्त्रो विधीयते, न मन्त्रस्योपांशुयाजः।

## आनन्तर्य्यञ्च सान्नाय्यस्य पुरोडाशेन दर्शयति अमावास्याविकारे ॥५५॥ (४र्थ पू०यु०)

इतश्च न अमावास्यायामुपांशुयाजः, अमावास्याविकारे हि साकंप्रस्थाय्ये सान्नाय्यस्यानन्तर्य्यं पुरोडाशेन दृश्यते। कथम्?। आज्यभागाभ्यां प्रचर्य्याग्नेयेन च पुरोडाशे-नाग्नीधे स्रुचौ प्रदाय सहकुम्भीभिरभिक्रामन्नाह इत्या-ग्नेयादानन्तर्य्यं सान्नाय्यस्य दर्शयति, न उपांशुयाजस्य। तस्मान्नामावास्ययामुपांशुयाज इति।

## अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधी-यते ॥ ५६ ॥ ( ५म पू० )

तुशब्दः पक्षं व्यावर्त्तयति। नैतदेवं, पौर्णमास्यामेवो-पांशुयाज इति। उभयत्र स्यात्, देवताविकल्पश्च। कुतः?। अविशेषेण हि उपांशुयाजः श्रूयते, उपांशुयाजमन्तरा यजति इति, यदेतत् आज्यस्यैव नो उपांशु पौर्णमास्यां यजेरन् इति, देवताविधानमेतत् पौर्णमास्याम्। तस्मा-

दग्नीषोमदेवत्यः पौर्णमास्यामुपांशुयाजः, मन्त्राम्नानात् वैष्णवोऽमावास्यायामिति देवताविकल्पः स्यात्।

## प्रतिषिद्ध-विधानात् वा विष्णुः समानदेशः स्यात् ॥ ५७ ॥ ( सि० )

न चैतदस्ति, यदुक्तमुभयत्र उपांशुयाजः देवताविकल्पश्च इति, किन्तर्हि पौर्णमास्यामेवोपांशुयाजस्तत्रैव च विष्ण्वाद्या देवताः इति। कुतः।? प्रतिषिद्ध विधानात्। किमिदं प्रतिषिद्ध विधानात्? इति। अमावास्यां वर्जयित्वा पौर्णमास्यां विधानात् इति। कथम्?। आज्यस्यैव नो उपांशु पौर्णमास्यां यजन् इति प्रकृत्य, समाम्नायते, जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशु याजमन्तरा यजति इति, पौर्णमास्यामिति गम्यते, तत्रैव चेदं वचनं विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमौ उपांशु यष्टव्यावजामित्वाय इति। तत्र पौर्णमास्यामेवोपांशुयाजस्तत्रैव च विष्ण्वाद्या देवता इति।

## तथा चान्यार्थदर्शनम् ॥ ५८ ॥ ( यु० १ )

इतश्च न अमावास्यायामुपांशुयाजः। कुतः?। अन्यार्थोऽप्येतमर्थं दर्शयति। कथम्?। चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम् इति चतुर्दश भवेयुः, त्रयोदशेति नोपपद्यते, तस्मान्नामावास्यायामुपांशुयाज इति।

न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात्
॥ ५९ ॥ ( यु० २ )

इतश्च न अमावास्यायां, न हि सकृत् श्रूयमाणम् अनङ्गम् उभयत्र भवति, अङ्गं हि प्रधानार्थत्वादुभयत्र स्यात्, प्रधानञ्चेदं, नाङ्गं, तस्मात् पौर्णमास्यां श्रूयमाणं नामावास्यायां भवेत्, असम्बन्धात्, न हि प्रधानं प्रधानेन सम्बन्धं याति इति ।

गुणानां च परार्थत्वात्, प्रकृतौ विधिलिङ्गानि
दर्शयति ॥ ६० ॥ ( यु० ३ )

गुणानां च परार्थत्वात् प्रधानेषु प्रवृत्तौ विधिलिङ्गानि दर्शयति, न प्रधानानामपरार्थत्वात् । कथम् ? । अग्ने, मन्तावाज्यभागौ यजति इति एकादश प्रयाजान् यजत्येकादशानुयाजान् इति । तस्मादपि उपांशुयाजो नामावास्यायामिति ।

विकारे चाश्रुतित्वात् ॥ ६१ ॥ ( यु० ४ )

अमावास्याविकारे च साकं प्रस्थाय्ये उपांशुयाजो न श्रूयते । कथम् ? । आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सहकुम्भीभिरभिक्रामन्नाह इति आग्नेयादनन्तरं सान्नाय्यं दर्शयति, नोपांशुयाजम् । तस्मादपि न अमावास्यायामुपांशुयाज इति ॥ ( १० । ८ । १७ अ० ) ॥

---

एकपुरोडाशायामप्युपांशुयाजाधिकरणम्।

## द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥ (पू०)

दर्शपूर्णमासयोरिदमामनन्ति, उपांशुयाजमन्तरा यजति इति, तत्रायमर्थः समधिगतः, पौर्णमास्यामुपांशुयाजः, तत्र च विष्णुाद्या देवताः इति। अस्ति चोर्ध्वं सोमात्, द्विपुरोडाशा पौर्णमासी। प्राक् सोमात्, एकपुरोडाशा। तत्रायमर्थः सांशयिकः। किं द्विपुरोडाशायामेव उपांशुयाजः, उत, द्विपुरोडाशायामेकपुरोडाशायाञ्च? इति। किं प्राप्तम्? द्विपुरोडाशायां स्यात। कुतः?। अन्तरार्थत्वात्, अन्तरासंयोगेन हि श्रूयते उपांशु याजमन्तरा यजति इति प्राक् पुरोडाशसंकीर्त्तनात्, पुरोडाशौ अन्तरेति गम्यते, द्विपुरोडाशायामन्तरा शक्यं कर्त्तुं, न एकपुरोडाशायां, तत्र क्रियमाणम् अयथाश्रुतं स्यात्। तस्मात् द्विपुरोडाशायामेवेति।

## अजामिकरणार्थत्वाच्च ॥ ६३ ॥ (यु०)

इतश्च द्विपुरोडाशायामेवेति। कुतः?। अजामिकरणार्थत्वमत्र श्रूयते, जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाय इति, जामि साद्दश्यमिति। पुरोडाशयोश्च साद्दश्यदोष उच्यते, जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ पुरोडाशं

त्वा पुनरनूचीनः पुरोडाश एवेति, यत्र दोषस्तत्र दोष-विघातार्थेन भवितव्यम् । तस्मात् द्विपुरोडाशायामेवेति ।

## तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥ (आ०)

इति चेत्पश्यसि, तदर्थत्वात् अन्तरार्थत्वात् द्विपुरोडाशायामेव भविष्यति इति, तन्न, तत्प्रधानत्वात्, पौर्णमासी प्रधानतः, अन्तरार्थो गुणतः, उपांशुयाजः पौर्णमासस्यावयवो विधीयते, उपांशुयाजस्याप्यन्तरालं गुणः, एकपुरोडाशापि भवत्येव पौर्णमासी, तस्यामुपांशुयाजः तेन न स्यात्, अन्तरालं गुणोऽसम्भवान्न भविष्यति इति । तस्मादसति अन्तराले एकपुरोडाशायामुपांशुयाजः कर्त्तव्य इति ।

## अशिष्टेन च सम्बन्धात् ॥ ६५ ॥ ( यु० )

अशिष्टेन च अश्रुतेन अन्तरालार्थेन उपांशुयाजस्य सम्बन्धः कर्त्तव्यः स्यात् अन्तरालगुणक उपांशुयाज इति । न हि अन्तरालं गुणत्वेन विधीयमानं पश्यामः । तस्मात् एकपुरोडाशायामपि उपांशुयाजः कर्त्तव्यः इति ।

## उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वात् विधानादन्तरार्थस्य नैमित्तिकत्वात् तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥ (आ०नि०)

तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति, गुणत्वेनान्तरालं न श्रूयते इति, उत्पत्तिवाक्ये नैवोपांशुयाजोऽन्तराले

निविशते, अन्तरालमस्य गुण उत्पत्तिवाक्येन श्रूयते, उपांशुयाजमन्तरा यजति इति। तस्मात् अस्य गुणस्य अनुरोधेन गुणी निविशेत, न एकपुरोडाशायां स्यात्, नैकपुरोडाशायामक्रियमाणोऽनर्थको भवति, अन्तरालार्थो हि द्विपुरोडाशायां विद्यते। तदभावे अन्तरालार्थस्य अभावे, अश्रुतौ यदि द्विपुरोडाशा न श्रूयेत, ततः स्यादेकपुरोडाशायामुपांशुयाजः, अस्ति त्वनकाशी द्विपुरोडाशा पौर्णमासी। तस्मात् एकपुरोडाशायां न स्यादिति।

## उभयोस्तु विधानात्॥ ६७॥ (सि०)

तुशब्दः पक्षं व्यावर्त्तयति। उभयोः पौर्णमास्योरुपांशुयाजः, एकपुरोडाशायामपि स्यादित्यर्थः। कुतः?। विधानात्, विधीयते हि स एकपुरोडाशायामपि, सापि हि पौर्णमासी, आज्यस्यैव ना उपांशु पौर्णमास्यां यजन् इति पौर्णमासीशब्द एकपुरोडाशां वर्जयन् उपलभ्येत। तस्मात् एकपुरोडाशायामपि स्यात्।

## गुणानाञ्च परार्थत्वादुपवेषवद्यदेति स्यात्॥ ६८॥ (यु०)

गुणश्चान्तरालं प्रधानार्थं श्रूयते उपांशुयाजार्थेन, अन्तरालेन उपांशुयाजस्योपकर्त्तव्यमिति। नासौ एकपुरोडाशायामुपांशुयाजं निवर्त्तयितुमर्हति, पौर्णमास्यां श्रूयमाण उपांशुयाज एकपुरोडाशाया अपि पौर्णमासीत्वात् तत्र प्राप्नोति, अन्तराले च श्रुतत्वादन्तरालेऽपि प्राप्नोति।

एकपुरोडाशायामन्तरालाभावात् न अन्तराले स्यात्। तस्मादन्तरालस्य गुणस्य शास्त्रं यदा पौर्णमासी तदेति स्यात्, उपवेषवत्, यथा उपवेषेण कपालान्युपदधाति इति यदोपवेषस्तदा तेनेति गम्यते, एवमिहापि यदा अन्तरालं, तदा अन्तराले भविष्यति। तस्मात् एकपुरोडाशायामपि स्यादिति।

## अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६८ ॥ ( आ० नि० )

उच्यते, ननु अन्तरालगुणक उपांशुयाजः श्रूयमाणोऽन्तरालाभावादुच्यमानोऽपि पौर्णमास्यां एकपुरोडाशायां वैगुण्यात् फलस्यासाधक इति न क्रियेत, न हि, पौर्णमासीविशेषे यत्रान्तरालमिति अन्तरालगुणता विधीयते, अविशेषेण हि द्विपुरोडाशायाम् एकपुरोडाशायां च तद्विधानं, तस्मात् एकपुरोडाशायां प्रयोजनाभावान्न करिष्यते इति। आह, एवं सति उपांशुयाजाभावादेकपुरोडाशा नैव कर्त्तव्या। अत्रोच्यते, नैष दोषः, फलवती हि सा भविष्यति, यदि द्विपुरोडाशा सम्भविष्यति इति। अत्रोच्यते, यद्येकपुरोडाशायां वैगुण्यं उपांशुयाजस्य स्यात्, ततो न क्रियेत, न तु वैगुण्यमस्ति, न ह्यन्तरालं गुणतः श्रूयते, किन्तर्हि कालं लक्षयितुं, यौ पुरोडाशौ तयोर्मध्ये इति। कथम्?। अनूद्य हि तौ पुरोडाशौ एतद्विधीयते, जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति इति, यौ तावनूदितौ यथा व्यवहितौ भवतः,

तथोपांशुयाजः कर्त्तव्यः तस्मिन् काल इति गम्यते, अनपायश्च तस्य कालस्य एकपुरोडाशायामपि। कथम्?। यो हि द्वयोः पुरोडाशयोर्मध्य इति कालोऽवगम्यते, स एव पूर्वस्मादुत्तर इति। एवं चेत् यद्यप्येकपुरोडाशायां द्वौ पुरोडाशौ न स्तः, तथापि स पूर्व आग्नेयोऽस्ति, तस्मादुत्तरः स एव कालः, योऽसावन्तरालेन लक्षितः। यथा, नागवेलायामागन्तव्यं, शङ्खवेलायामागन्तव्यं, पटहवेलायामागन्तव्यमिति, यस्मिन् ग्रामे न नागाः न शङ्खाः न पटहस्तस्मिन्नपि स एव कालः, तत्र हि आगमनं क्रियते। एवमिहापि द्रष्टव्यम्। तस्मात् एकपुरोडाशायाम् उपांशुयाजः कर्त्तव्य इति।

प्रशंसार्थमजामित्वम् ॥ ७० ॥ ( आ॰ नि॰ )

अथ यदुक्तम्, अजामिकरणार्थत्वात् इति, तत् परिहर्त्तव्यम्, अत्रोच्यते, प्रशंसा एषा उपांशुयाजस्य, वैचित्र्येण, न ह्येतदेवात्र फलं विधीयते, यदजामित्वमिति। कुतः?। विहितस्य हि प्रयोजनं विधीयते। न चैवं सति उपांशुयाजो विहितः स्यात् विधाने चार्थद्वयविधानं दोषः। न च, अजामिकरणं नाम किञ्चिदिष्टं फलम्। तस्मात् प्रशंसैषा, यथोपस्तरणाभिघारणयोरमृतार्थत्वम्, अमृतं वा आज्यं मर्त्यं हविर्यदुपास्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति इति। तस्मात् एकपुरोडाशायामप्युपांशुयाजः कर्त्तव्य एवेति ॥ ( १०। ८। १८ अ॰ ) ॥

इति श्रीमच्छबरस्वामिकृतौ मीमांसाभाष्ये दशमस्याध्यायस्याष्टमः पादः समाप्तः ॥

# मीमांसा-दर्शने

## ११ अध्याये १ पादः।

आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकलाधिकरणम्।

**प्रयोजनाभिसम्बन्धात् पृथक्सतां ततः स्यादैक-कर्म्यमेकशब्दाभिसंयोगात्॥ १॥**

दशमेऽध्याये बाधाभ्युच्चयलक्षणं वृत्तम्। इदानीमेकादशे तन्त्रावापलक्षणं निर्वर्त्तयिष्यामः। तत्र यत्सकृत्कृतं बहूनामुपकरोति तत् तन्त्रमित्युच्यते, यथा, बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः। यस्तु आवृत्त्या उपकरोति स आवापः। यथा तेषामेव ब्राह्मणानामनुलेपनम्। श्लोकमुदाहरन्ति,—

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः।
एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ॥ इति

साधारणं भवेत्तन्त्रमित्युक्तार्थम्। परार्थे त्वप्रयोजकः इति, यः परार्थमुत्पन्नः तदर्थमेव चानुष्ठीयमानः परस्योपकरोति, स परः तस्याप्रयोजकः। यथा, पश्वालम्भो यागार्थमुत्पन्नस्तदर्थमेव चानुष्ठीयमानो लोहितसक्त्कर्मणोरप्युपकरोतीति। एवमेव प्रसङ्गः स्यात्, अयं तु विशेषः, विद्यमाने स्वके विधौ इति। यद्यप्यस्य अन्यो विधिर्विद्यते परविधिना तु कृतार्थत्वान्न क्रियते। यथा, प्रयाजाः पशोरपि

षोडकेन प्राप्ताः पशुपुरोडाशस्यापि, पश्वर्था एव तु कृताः पशुपुरोडाशस्योपकुर्वन्तीति न पुनस्तदर्थं क्रियन्ते।

प्रकृतमिदानीमुच्यते, तन्त्रावापलक्षणं प्रतिज्ञातं, तदुच्यते, दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि, तेषां स्वर्गः फलं श्रूयते, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति। स किं तेषां तन्त्रेण भवति, उत भेदेन ? इति। एवं चातुर्मास्यादिष्वपि द्रष्टव्यम्।

ननु च नैवात्र स्वर्गः फलं श्रूयते, स्वर्गकामपदेन तावत् पुरुषोऽभिधीयते, यजेतेत्यनेनापि यागनिर्वृत्तिः, तयोर्वाक्येन सम्बन्धः, केनेदानीं फलमुच्यते ?। अनेनैव स्वर्गकामपदेनेत्याह। ननु पुरुषस्य अयं वक्ता। न खलु कश्चित् पुरुषः स्वर्गकामो नामास्ति। ननु च यस्य स्वर्गे कामः स स्वर्गकाम इति। एतदेव न जानीमः कस्य स्वर्गे काम इति, य एव हि स्वर्गकामः स एवास्वर्गकामो भवति इति। एवं तर्हि कालोपदेशोऽयं भवति, यदा स्वर्गकामस्तदा यजेत इति। अत्रापि न कश्चित् कालविशेषोऽस्ति, यस्मिन्नियमेन स्वर्गकामः स्यात्, सर्वेषु कालेषु सर्वे कामा अनियमेन उत्पद्यन्ते। तत्र न कश्चित् कालविशेषोऽनेन शक्यते व्यपदेष्टुम्। एवं तर्हि नैवायं पुरुषोपदेशो नापि कालोपदेशः, किं खलु, फलकामो निमित्तं, स्वर्गविषये कामे उत्पन्ने यजेत इति, यथा कपाले नष्टे यजेत इति। अस्य पक्षस्य सूत्रेणैव परिहार उक्तः, फलकामो निमित्तमिति चेत् (६।२।८)। न नित्यत्वात् (६।२।१०) इति। नित्यानि अग्निहोत्रादीनि कर्माणि, तानि यदि

निमित्ते विधीयन्ते, नित्यत्वमेषां विहन्येत। तत्र नित्यचोदना यावज्जीविकाद्या अपरुध्यन्ते, लिङ्गानि च अप वा एष स्वर्गाल्लोकात् च्यवते यो दर्शपूर्णमासयाजी सन् पौर्णमासीम् अमावास्यां वाऽतिपातयेत् इत्येवमादीनि।

परिशेषात् फलसंयोग एवायम्। कथं पुनरनेन शक्यते फलं विधातुम्। तदुच्यते, ? स्वर्गकामो यजेत इति यदि वा स्वर्गकामो यागायोपदिश्यते यथा लोहितोष्णीषाः। यदि वा यागः स्वर्गकामाय, यथा मलिनः स्नायात्, बुभुक्षितोऽश्नीयात् इति। तत्र यदि स्वर्गकामः कर्मणि उपदिश्यते, उपदिष्टोऽपि न प्रवर्त्तेत, को हि परार्थं प्रयासमातिष्ठेत्? तथा कर्मचोदनाऽनर्थिकैव भवति। अथ यागः स्वर्गकामार्थः, ततोऽसौ पुरुषस्योपकरोति, तं पुरुषः स्वार्थेन करोति इति। तथा कर्मचोदना अर्थवती भवति। अपि च यागविधौ श्रुत्यर्थः परिगृहीतो भविष्यति, स्वर्गकामविधौ वाक्यार्थः। तस्माद्यागः स्वर्गकामस्योपकारकः। स्वर्गकामस्य अनेकपुत्रपशुग्रामान्नाद्यादिलाभकरः स यदि पुत्रान्नाद्यादीनामन्यतमं करोति, ततः स्वर्गकामशब्दोऽविवक्षितार्थः पुरुषमात्रवचनो भवति। तथा च आनर्थक्यमेव, अन्तरेणापि हि तद्वचनं पुरुषमात्रमाख्यातादेव गम्यते। तस्माद् यागात् स्वर्गो भवति।

तत्रानेककर्मसन्निपाते दर्शपूर्णमासादिषु भवति संशयः, किं तन्त्रमेषां फलम्, उत, भेदेन? इति। किं प्राप्तम्? भेदेन इति। किं कारणम्?। इमानि आग्नेयादीनि प्रधानानि परस्परानपेक्षाभिश्चोदनाभिः पृथग्भू-

तानि उत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति। तत् सन्निधौ स्वर्गादि फलं श्रूयमाणं भेदेनाकाङ्क्षितत्वाद् भेदेनैव सम्बध्यते। तस्मात् प्रतिप्रधानं फलभेद इत्येवं प्राप्तम्।

एवं प्राप्ते इदमारभ्यते, प्रयोजनाभिसम्बन्धात् पृथक्तां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् पृथग्भूतानामपि एतेषामाग्नेयादीनां ततः स्यादैककर्म्यम्। कुतः?। प्रयोजनाभिसंयोगात्, प्रयोजनं फलं, तत् प्रति एषां समेतानां सम्बन्धात् संयोगादित्यर्थः। एककर्म्यमिति, कर्मशब्देनात्र फलम् उच्यते, क्रियत इति। तत् येषामेकं, तानि एककर्माणि, तेषां भाव ऐककर्म्यम्, ऐकफलमित्यर्थः। कथं पुनर्ज्ञायते, समेतानामाग्नेयादीनां फलेन योगः इति?। एकशब्दाभिसंयोगात्, य एषां समुदितानामेकः शब्दो वाचकः, तेन एतानि अभिधाय फलसम्बन्धः कृतः दर्शपूर्णमासाभ्यां स्वर्गकामः इति। अतः समुदितेभ्यः फलं गम्यते, न भेदेन। यथा ग्रामेणोदपानः खेयः, ग्रामेण तडागः खेय इति, ग्रामशब्देन समुदायवचनेन संयुज्य कूपो विधीयमानः समुदितैः पुरुषैरेकः खन्यते, न प्रतिपुरुषं कूपभेदः। एवमिहापि।

शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥

( भा० )

नायमेकान्तः, यत् समुदायशब्देन संयोज्योच्यते, तत् समुदितानामेव भवति इति, भेदेनापि किञ्चिद्भवति। यथा, गणाय स्नानं, गणायानुलेपनम् इति अनुलेपनादि-

शेषो गणशब्देन समुदायवचनेनापि संयोज्योक्तो न समुदायेन सम्बध्यते, केन तर्हि, समुदायिभिः। प्रतिपुरुषं हि स्नानादि आवर्त्तते। अतः शेषवद्वा फलं भिद्येत, कूपवद्वा तन्त्रं स्यात् इति अवैशेषिकोऽयं हेतुः समुदायशब्दसंयोगः। तस्मात् हेत्वन्तरं वक्तव्यं, अत्रैष विशेष इति। सोऽयमुच्यते,

## अविधानात्तु नैवं स्यात् ॥ ३ ॥ (सि०)

नात्र यागमुद्दिश्य फलं विधीयते, स्वर्गेण यागं कुर्य्यात् इति, किन्तर्हि, फलमुद्दिश्य यागो विधीयते, स्वर्गं यागेन कुर्य्यात् इति। किं कारणम्?। यात्र विधायिका विभक्तिः यजेत इति, सा यागं श्रुत्या विदधाति, फलं वाक्येन विदध्यात्। न च श्रुत्यर्थे सम्भवति वाक्यार्थो ग्राह्यः, श्रुत्यर्थस्य मुख्यत्वात्। किं पुनः स्याद् यदि फलं विधीयते?। फले विधीयमाने यजत्यर्थोऽनूद्येत, न हि द्वयोर्विधीयमानयोः सम्बन्धोऽस्ति। अनुवादश्च सन्निहितानाम् आग्नेयादीनां स्यात्। तानि च परस्परानपेक्षाणि मिथो विभक्तानि उत्पन्नानि इति विभागेनैव तैः फलं सम्बध्यते। अथ पुनः यजत्यर्थे विधीयमाने आग्नेयादयो यागाः शब्देन समुदायवचनेन फलनिर्वृत्तावुपादेयत्वेन चोद्यन्ते, चोदितानां समुदितत्वं गुणः सन्निधानविशेषात् दो गम्यते स विवक्षितो भवति, अविवक्षायां कारणाभावात्।

यदि यागा विधीयन्ते, दर्शपूर्णमासशब्देन विशेष्टुं न

शक्यन्ते, न हि विधीयमानस्य विशेषणं भवति, यत्कारणं विशेषणमप्यविधीयमानं न भवति, न च द्वयोर्विधीयमानयोः परस्परसम्बन्धो भवति। किं पुनरत्र विशेषणेन कार्य्यम्? यावता रूपवतामाग्नेयादीनां सन्निधौ अरूपो दर्शपूर्णमासाभ्यां यजेत इति यजतिशब्दः समुदायवचन इति। किमर्थं तर्हि दर्शपूर्णमासशब्दः?। अनर्थकस्य नित्यानुवादमात्रं, यथा, इन्द्रेण देवेन दृष्टं, इडान्ता तिष्ठा मन्तिष्ठते, नानुयाजान् यजति इति। अथ वा, वाक्यार्थस्यैवात्र विधानं न्याय्यं, श्रुत्यर्थे हि विधीयमाने दर्शपूर्णमासशब्दः अनर्थक एवापद्यते, वाक्यार्थे तु दर्शपूर्णमासशब्दो विशेषणेनार्थवान्। यजतिरपि भावनाविधानार्थं प्राप्तोऽपि पुनः श्रूयते। प्राप्तिश्च दर्शपूर्णमासशब्दस्य यागवचनत्वात् इति न किञ्चिदनर्थकम्। तस्मादेष पक्षो ज्यायान्।

## शेषस्य हि परार्थत्वाद्विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥ (आ॰ नि॰)

यत्तु शेषवत् इति, शेषस्य अनुलेपनादेः परार्थेन विधानं पुरुषसंस्कारकत्वेन, एवं दृष्टोऽर्थो भवति, अन्यथा अदृष्टं कल्पयितव्यं स्यात्, तत्र गुणः पुरुषलक्षणार्थो भवति। शक्नोति च सम्बन्धात् पुरुषान् लक्षयितुम्। अदृष्टं वा कल्प्यतां लक्षणा वेति दृष्टा लक्षणा कल्पयितुं न्याय्या, तस्मात् पुरुषलक्षणार्थो गुणः, न च, लक्षणं कार्य्येण सम्बध्यते, किन्तर्हि लक्षितः। तद्यथा शुक्लवाससमानय इति, यदा तु शुक्ले वाससी पुरुषलक्षणार्थम्

उच्येते, न तदा आनयनेन सम्बध्येते इति। एवमिहापि न गणः कार्य्येण सम्बध्यते, किन्तु पुरुषा एव कार्य्येण सम्बध्यन्ते। तस्मादनुलेपनादि प्रतिप्रधानं भिद्यते॥ (११।१।१ अ०)॥

---

अङ्गानामेककार्य्याधिकरणम्।

अङ्गेष्विदानीं चिन्ता, किम् अङ्गानि सम्भूय कार्य्यं कुर्वन्ति, उत, भेदेन? इति। तत्रेदमुच्यते,

**अङ्गानान्तु शब्दभेदात् क्रतुवत् स्यात् फलान्यत्वम्॥५॥ (पू०)**

यथा प्रधानानां समेतानामेकं फलं नैवमङ्गानाम्, अङ्गानां पृथक् प्रयोजनम्, अङ्गस्याङ्गस्य पृथक् फलम्। किं कारणम्?। शब्दभेदात्, चोदनाभेदादित्यर्थः। समिधो यजति, तनूनपातं यजति, इत्येवमादिभिः परस्परानपेक्षाभिश्चोदनाभिः पृथक्केनाङ्गानि चोद्यन्ते, तानि पृथगेव प्रयोजनानि आकाङ्क्षन्ति, न साहित्येन, साहित्यस्यानुक्तत्वात्। अतस्तेषां पृथगेव प्रयोजनैरभिसम्बन्धो विज्ञायते, क्रतुवत्, यथा क्रतुषु पृथक्केन चोदितेषु पृथगेव फलसम्बन्धो भवति।

**अर्थभेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम्॥६॥(सि०)**

युक्तं, यत् क्रतुषु फलभेदः। शब्देन तत्र भिन्नानि

फलानि उक्तानि, सौर्य्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः इति। इह ऐकार्थ्यं, सर्वेषामङ्गानाम् एकोऽर्थः प्रधानेषु उपकारः। उपकारापेक्षायां हि अङ्गानि श्रूयन्ते, तानि सर्वाणि एकार्थानि भवन्ति। नन्वेवं सति एकार्थत्वादेषां विकल्पः प्राप्नोति। वक्ष्यते तत्परिहारः, विधेस्तु एकश्रुतित्वात् (१७ सू०) इत्यत्र यथा विकल्पो न भवति। अत ऐकार्थ्यात् अङ्गानामेकं कार्य्यम् इति।

## शब्दभेदान्नेति चेत् ॥ ७ ॥ (आ०)

अथ यदुक्तं, चोदनाभेदादङ्गानामर्थभेदो न्याय्य इति, तत् परिहर्त्तव्यम्। परिहृतं तत् एकार्थत्वेन। न परिह्रियते, सर्वाणि च प्रधानस्योपकुर्य्युः भिन्नानि च कार्य्याणि कुर्य्युः, तद्यथा कारकाणि कर्त्रादीनि सर्वाणि तावत् क्रियाया उपकुर्वन्ति, अथ च प्रतिकारकं कार्य्यभेदः। इदं तर्हि परिह्रियते, यदि समिदादिभिर्वाक्यैरङ्गानां प्रयोग उच्यते, समिधो यजेः प्रयोक्तव्यः, तनूनपाद्यजिः प्रयोक्तव्य इति, ततः स्यात् प्रयोजनाकाङ्क्षा। सा च भवन्ती भेदेन स्यात्, न त्वत्र प्रयोग उच्यते, किन्तर्हि रूपमात्रमाख्यायते, एवं लक्षणको याग इह भवति इति। तत् कस्य हेतोः?। प्रयोगवचनस्य प्रत्ययस्याभावात्, अन्येन च प्रयोगस्योक्तत्वात्। क्व पुनरेषां प्रयोग उक्तः? उत्तरसूत्रे दर्शयिष्यामः। न चेदत्र प्रयोजनाकाङ्क्षा, कुतः प्रयोजनं, कुतो भेदः।

कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात् ॥ ८ ॥ (आ० नि०)

प्रधानानां प्रयोगे उच्यमाने अङ्गानामपि ताच्छब्द्यं स्यात् प्रयोगस्य, तेनैव प्रधानप्रयोगवचनेनैव शब्देन अङ्गानामपि प्रयोग उच्यते, दर्शपूर्णमासाभ्यां यजेत इति। कुतः?। कर्मार्थत्वात्, क्रियार्थत्वादित्यर्थः। फलस्य क्रियार्थौ दर्शपूर्णमासौ श्रूयेते, दर्शपूर्णमासाभ्यां स्वर्गं कुर्य्यात् इति। तत्र आकाङ्क्षा भवति, कथम्? इति। सा समिदादिभिश्चोदनाभिर्निवर्त्त्यते, समिधो यजति, तनूनपातं यजति इत्येवम् इति। तत् कस्य हेतोः?। तदर्थत्वात्, तदर्था एताः समिदादिचोदनाः, तेनाकाङ्क्षितत्वात्, अफलत्वात्, फलवत्सन्निधानाच्च। सैषा दर्शपूर्णमासयोः फलं साधयतोः इतिकर्त्तव्यता, न च, इतिकर्त्तव्यतामन्तरेण कर्मचोदना अर्थवती भवति। तस्मात् सेतिकर्त्तव्यताकः कर्मणः प्रयोगश्चोद्यते। तथा च सिद्धमेतत् प्रधानप्रयोगवचनेनैव शब्देन अङ्गानां प्रयोगः चोद्यत इति, एवं च सति एकशब्दचोदितान्येव अङ्गानि। तच्च यथा प्रधानानाम् एकशब्दाभिसंयोगात् फलैक्यम् एवमङ्गानामपीति।

अत्राह, न एतद्युक्तम्। कुतः?।

कर्तृविधेर्नानार्थत्वादगुणप्रधानेषु ॥ ९ ॥ (आ०)

कर्त्तुर्यश्च प्रधाने विधिः दर्शपूर्णमासाभ्यां यजेत इति, यश्च अङ्गेषु साङ्गाभ्याम् इति, तयोः नानार्थत्वं, प्रधान-

विधिः फलार्थः अङ्गविधिः प्रधानार्थः । तत्र प्रधानानि फलं प्रति विधातव्यानि, अङ्गानि प्रति अनूद्यानि, न च विध्यनुवादौ युगपत् सम्भवतः । तस्मात् नैकेन वाक्येन प्रधानानि, तेषाञ्च इतिकर्त्तव्यता शक्या विधातुम् । अतो न प्रधानचोदनागृहीतानि अङ्गानि ।

तत्राह, नैतदयुक्तं, युक्तमेतत् । कुतः ? ।

## आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥ (आ०नि०)

आरम्भो व्यापारः क्रियेत्यनर्थान्तरम् । यागेन इह स्वर्गस्य क्रिया उच्यते, यजेत यागेन स्वर्गं कुर्यात्, स्वर्गार्थं व्याप्रियेत इत्यर्थः । इदं तु न ज्ञायते कोऽसौ व्यापारः ? इति, तत्सन्निधौ च अग्न्यन्वाधानादि श्रूयते । तस्मिन् आकाङ्क्षितत्वात् सन्निधानाच्च एतद्भवति, अयमस्मिन् व्यापारः, येन यागः स्वर्गं करोति इति । तस्मिन् विधीयमाने नास्ति वाक्यभेदः ।

अथ वा, प्रधानानां फलं प्रति, अङ्गानाञ्च प्रधानानि प्रति, विधिरविरुद्धः । कथं कृत्वा ? । दर्शपूर्णमासाभ्यां स्वर्गसाधनमपूर्वम् उच्यते, तस्य सविशेषस्य वचनं प्रयुज्यते । यथा, एतस्यैव रेवतीषु वारवन्तीयम् अग्निष्टोमसाम कृत्वा पशुकामो यजेत इति । तस्मात् प्रधानप्रयोगवचनेनैव अङ्गानां प्रयोगो विधीयत इति ॥ (११।१।२ अ०) ॥

——

दर्शपूर्णमासादिकाम्यकर्मणां सर्वाङ्गोपसंहाराधिकरणम् ।

इदं विचार्यते, किम् अग्निहोत्रादीनां कर्मणामेक-देशाङ्गयुक्तानामपि प्रयोगः, अथ वा सर्वाङ्गोपसंहारेणैव ? इति । अथ तत्र किं वृत्तम् ? । सर्वशक्तौ प्रवृत्तिः स्यात् (६ । ३ । १ सू० ) इति । तत्र नैयमिकमारम्भं प्रति चिन्ता कृता, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत इत्यनया चोदनया योऽयं यावज्जीविकः प्रयोगनियम उच्यते, किं तत्र सर्वाङ्गोपसंहारः, उत, न ? इति । इह इदानीं फलार्थे प्रयोगे चिन्ता, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यनया चोदनया योऽयं स्वर्गार्थं आरम्भः, तत्रापि किं नैयमिक-वदेव प्रयोगः, उत, सर्वाङ्गोपसंहारः ? इति । किं तावत् प्राप्तम्,—

## एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् ॥ ११ ॥ (पू०)

एकदेशेनापि अङ्गानां, समाप्येत, कर्म प्रयुज्येतेत्यर्थः । कुतः ? । कृतार्थत्वात्, या असौ, दर्शपूर्णमासाभ्यां स्वर्गार्थं व्याप्रियेत इत्युक्ते कथं व्यापारितव्यमित्याकाङ्क्षा, सा एके-नापि अङ्गेन कृतार्था भवति, समिधो यजति एवं व्यापा-रितव्यं, तथा अङ्गद्वयेन अङ्गत्रयेण च । यो यावन्ति अ-ङ्गानि करिष्यति, स तावत्कृतमुपकारं प्राप्स्यति । यथा क्रत्वन्तरेषु सौर्य्यार्य्यमणप्राजापत्यनैऋतादिषु यो यावन्ति कर्माणि करोति, स तावद्भाः फलमश्नुते । न तु तत्सन्नि-धानाविशेषात् सर्वाण्येवाङ्गानि,प्राप्यन्ते । प्राप्तेषु चोत्तरावत्

स्यात्, तद्यथा, वाग्यतः तिस्रो दोहयित्वा विसृष्टवाग् अनन्वारभ्य तूष्णीमुत्तरा दोहयति इति, यस्य यावत्यो गावः स तावतीर्द्दोहयति इति, तावतीष्वपि कृतार्थ उत्तराशब्दः। एवमिहापि यो यावन्ति अङ्गानि उत्सहते स तावन्ति करिष्यति।

## फलाभावान्नेति चेत् ॥ १२ । (आ०)

इति चेत् भवान् पश्यति, एकदेशगङ्गायुक्तानामनियतानां कर्म्मणां प्रयोग इति। तन्न। कुतः?। फलाभावात्, यावच्छ्रुतं स्वर्गकामस्य, स्वर्गकामेनेदं कर्त्तव्यमिति, तत्साकल्येनाकुर्वतः फलाभावः स्यात्, सर्वं चेदं श्रुतं स्वर्गकामो यजेत इत्युक्ता सर्वस्य अन्व्यन्वाधानादेः कर्म्मकलापस्याम्नानात्।

## न, कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात् ॥ ॥ १३ ॥ (आ० नि०)

नैतदेवम्, अङ्गवैकल्ये फलाभाव इति। कुतः?। कर्म्मसंयोगात्, प्रधानकर्म्मणा हि फलं संयुक्तं, दर्शपूर्णमासाभ्यां स्व[illegible]कामः इति, न अङ्गैः अङ्गानि तु तदाकाङ्क्षया गृह्यन्ते, सा चाकाङ्क्षा एकेनापि कृतार्था भवतीत्युक्तम्। एवं चेत् प्रयोजनम् अङ्गकृत उपकारः, फलं च स्वर्गादि अशब्ददोषं स्यात्, दर्शपूर्णमासयोः फलार्थत्वे दर्शपूर्णमासाभ्यां स्वर्गकामः इत्येवंशब्दो न दुष्येत्, तत्स-

न्निधौ चाङ्गानां विधायका ये समिदादयः, ते च तदुपकारित्वे न दुष्येयुः। तस्मान्नाङ्गाभावे फलाभावः।

ऐकशब्द्यादिति चेत् ॥ १४ ॥ (आ०)

इति चेत् पश्यसि, दर्शपूर्णमासाभ्यां तत् फलं न समिदादिभ्य इति, नैतद्युक्तम्। किं कारणम्?। ऐकशब्द्यात्, एकः शब्द उपदेशकः प्रयोगस्य दर्शपूर्णमासयोः, समिदादीनाञ्च, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति, तेन च फलसम्बन्धः कृतः। तत्र कुतः एतत् दर्शपूर्णमासतः फलं, नेतरेभ्यः इति।

न सर्वाणि फलसंयुक्तानि इति, किन्तर्हि दर्शपूर्णमासावेव। कथं ज्ञायते?। दर्शपूर्णमासाभ्यां स्वर्गं कुर्य्यादिति दर्शपूर्णमासयोरेव स्वर्गं प्रति करणत्वं श्रूयते, न समिदादीनाम्। आकाङ्क्षया हि तेषां ग्रहणं, सा च कथंभावस्याकाङ्क्षा कथं कुर्य्यादिति, न करणस्य, केन कुर्य्यादिति तस्य निर्दिष्टत्वात् दर्शपूर्णमासाभ्यामिति। तस्मान्न समिदादीनां फलेन संयोगः यदि च संयुज्येरन् न समानि आग्नेयादिभिः स्युः।

समत्वाच्च गुणत्वं तत्र यदुच्यते एकदेशाङ्गयुक्तानामपि प्रयोग इत्येतदेव नास्ति ये त्वैककर्म्यादिति सूत्रं पठन्ति तेषामयमर्थ इति चेत् पश्यसि प्रधानानामङ्गवत्तया अङ्गानि क्रियन्ते इति। तस्मादैककर्म्यं भवतु एकमेवाङ्गं प्रयुज्यतामेकेनापि प्रधानमङ्गवद्भवति।

**नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥१५॥ (आ॰नि॰)**

नैतदेवं कस्मादर्थपृथक्त्वादर्थपृथक्त्वं भवति उपकारपृथक्त्व मेकेनाङ्गेनार्थवत्तायामल्प उपकारो बहुभिर्महान् कथं ज्ञायते समत्वादगुणत्वं यद्येकेन बहुभिश्च समः उपकारः स्यात् । तत्र एकस्यैवाङ्गत्वं भवेत् अन्येषामगुणत्वं स्यात् । अनङ्गत्वमित्यर्थः । तत्र बहूनामाम्नानमनर्थकं स्यात् । न चैषां विकल्प इत्युक्तं विधेस्त्वेकश्रुतित्वादित्यत्र तस्मादङ्ग-भूयस्त्वे फलभूयस्त्वमिति ।

**विधेस्त्वेकश्रुतित्वादपर्य्यायविधानात् नित्यवच्छ्रुत-भूताभिसंयोगात् अर्थेन युगपत् प्राप्तेर्यथा-प्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ (सि॰)**

नत्वेतदेवमेकदेशेनाप्यङ्गानां प्रयोग इति । कथं तर्हि सर्वाङ्गोपसंहारेण, कुतः विधेरेकश्रुतित्वात् । एकेन शब्दे-नाङ्गानां प्रयोगो विधीयते दर्शपूर्णमासाभ्यां यजेतेति सर्वापेक्षयेत्युक्तम् । सा त्वपेक्षा कृत्स्ने वाग्न्यन्वाधानादि-व्यापारे तदेकदेशे वा । तत्रैकदेशापेक्षा न युक्ता । कस्मात् अपर्य्यायविधानात् । इमान्यङ्गानि न पर्य्यायेण विधीयन्ते कदाचित् समिधो यजति कदाचित् तनूनपात-मिति । कथं तर्हि नित्यवद्यथाभूतानि च श्रुतानि तथा भूतान्यपेक्षयाभिसम्बध्यन्ते अथोच्येत नित्यवत् श्रुतानामपि

सतामेकदेशोऽपेक्षिष्यत इति। नैतद्युक्तं कुतः? अर्थेन युगपत् प्राप्तेः। अर्थेन प्रधानोपकारेण खलेकपोतवद्युगपत्सन्निपतन्त्यङ्गानि। तत्र गृह्यते विशेषः इदं प्राप्यते। इदं नेति अतः सर्वाणि प्राप्यन्ते। यथाप्राप्तं च सशब्दार्थौ निवीतवत्, यथा "निवीता ऋत्विजः प्रचरन्तीति" ऋत्विग्विशेषाभावात् सर्वेषां च सन्निधानात् सर्वऋत्विजो निवीता भवन्ति। एवमिहापि सर्वप्रयोगे प्रवृत्तिः स्यात्।

## तथा कर्मोपदेशत्वात् ॥ १७ ॥ (हे०)

तथा च कृत्वा चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति आहुतिसंख्या पाक्षिकी न भविष्यति।

## क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ (पू० आ० नि०)

तत्र यदुक्तं यथा क्रत्वन्तरेष्विति, युक्तं तथा क्रत्वन्तरेषु पार्थक्यं "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम" इत्युक्त्वा पुनरुच्यते। "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम" इति। किमतः। अतस्तेषां परस्परानपेक्षाणां कार्यं न सम्भूयेति गम्यते। परिसमाप्ते हि पूर्वस्य विधाने उत्तरः पृथक्त्वेन विधीयते। अथेह विधेस्त्वेकश्रुतित्वादित्यनेन न्यायेन सम्भूयकार्यमङ्गानां युक्तं तस्माद्वैषम्यं क्रतुभिः।

## उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात् सन्दोहे यथा कामी प्रतीयेत ॥ १९ ॥ (पू० आ० नि०)

यथाप्राप्ते चोत्तरावत् स्यादिति यदुक्तं तन्न युक्तं यदुत्तरासु यावत्स्वं दोहनमश्रुतित्वात्। नात्रोत्तराणां दोहनं विधीयते। किं तर्हि अनूद्यते। किं कारणम्?। विशेषाणां वाग्विसर्जनादीनां विधाने कृतार्थं तद्वाक्यं नोत्तराणां दोहनं विधातुमुत्सहते। विधीयमानेऽर्थद्वयी, भिद्येत वाक्यम्। अनुवादश्च प्राप्तस्यार्थस्य भवति। अर्थाच्च यावत्स्वं दोहनं प्राप्तम्। अर्थादन्या न दोह्याः स्वास्तु सर्वाः कथं न दोह्याः। उपरिष्टादेतद्वक्ष्यामः। तथा पयः प्रति-षेधः कुमाराणामित्यत्र तस्माद्यथा कामी प्रतीयेत यावत्यो गावः स तावतीर्दोहयति।

काम्यकर्म्मणः फलाधिक्यायासकृदनुष्ठानाधिकरणम् ॥

काम्येषु कर्मसु चिन्ता। किं काम्यं कर्म सकृदेव प्रयोक्तव्यम् अथ वा फलस्य भूयस्त्वमिच्छता भूयोऽभ्यसितव्यमिति। किं प्राप्तम्?

**कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः ॥ २० ॥ (पू०)**

काम्ये कर्मणि प्रतिप्रयोगं फलभेदः आरम्भभाव्यत्वात् कर्मप्रयोगेण फलं भाव्यते। कथं ज्ञायते। प्राकृतात् कर्मणः फलं नास्ति यदि भवेत्कर्मानर्थकं स्यात्। कर्मोत्तरकाले चास्तीति श्रुतितो गम्यते। यच्च प्राक्कर्मणो नास्ति कर्मोत्तरकाले च भवति तत्तेन कर्मणा भाव्यते

कृषिवत् यथा कर्षणेन धान्यमसकृद्भाव्यते। पुनरपि धान्यवदेतद्भविष्यति।

**अधिकारश्च सर्वेषां कार्य्यत्वादुपपद्यते विशेषः॥ २१॥ (पू० यु०)**

एवं च कृत्वा सर्वेषां कर्मणां पुनः पुनः क्रियमाणानामधिकारो भविष्यति। तत्रेमानि दर्शनान्युपपत्स्यन्ते "तेषां ये प्रथमं यजेरन् तेषां गौरतिरात्रो ये द्वितीयं तेषामायुरिति"। प्रथमं यजेरन् द्वितीयं यजेरन् एतदभ्यासे सति। तस्माद्यावदिच्छमभ्यासः।

**सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥२२॥ (पू० आ०)**

सकृदेव तु काम्यं कर्म प्रयोक्तव्यं कुतः कृतार्थत्वात्। सकृत् कृतेन कृतश्चोदनार्थः। न च कृते पुनः कर्त्तव्यमस्ति कः पुनश्चोदनार्थो, यागस्य कर्त्तुः फलं होमस्य कर्त्तुः फलमिति कथं कृत्वा तदुच्यते इह यजेज्जुहुयादिति धातुना क्रियोच्यते प्रत्ययेन कर्त्ता तयोः कर्त्ता प्रधानभूतः उपसर्जनभूता क्रिया "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः" अनुप्रयोगश्च कर्त्तृप्रधान्य एव भवति पचति देवदत्त इति। तेन होतुर्यष्टुश्च फलमुच्यते। सकृत्तु तेन सकृदिष्टेन वासौ होता यष्टा च जातः। तत्र द्वितीयादिप्रयोगोऽनर्थकः स्यात् कृतार्थत्वादङ्गवत्। तद्यथा प्रधानस्य साङ्गत्वोपपादनायाङ्गानि क्रियन्ते सकृत् कृतैश्च तदुपपादितमिति नाभ्यस्यन्ते तद्वत्।

शब्दार्थश्च तथा लोके ॥ २३ ॥ (निरु०)

लोकेऽपि तथैव शब्दार्थो भवति काष्ठान्याहरेत्युक्तः सकृदाहरति न पुनः पुनः ।

अपि वा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥ (सि०)

अपि वा नैवं स्यादस्मिन्नर्थिनः कर्मणश्च संयोगे सकृदेवार्थी कर्मप्रयोगे वर्त्ततेति कथं तर्हि यथाकामी प्रतीयेत सकृद्वा बहुकृत्वो वा फलभूमार्थी बहुकृत्वः सन्तुष्टः सकृत्, कुतः ? अश्रुतित्वात् । नात्र यष्टुर्हेतुः फलं श्रूयते यत्तु प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति तत्कर्मनिमित्तेषु नामपदेषु पाचको लावक इत्येवमादिषु । आख्याते तु न कर्त्ता क्रियाप्रधानतः, किं तर्हि भावप्रधानमाख्यातं, भावना च न कस्यचिच्छ्रूयते । भावनाप्रयुक्तस्य साधनग्रामस्यापेक्षितत्वाद्यजेत केन किमर्थं कथमिति, कर्त्तृप्राधान्ये कार्य्याभावान्न साधनाकाङ्क्षया भवितव्यम् । न हि भवति पाचकः केन किमर्थं कथमिति । भावना च फलस्योच्यते न क्रियायाः । तृतीयानिर्द्देशात् "उद्भिदा यजेत" "बलभिदा यजेतेति" भाव्यत्वे हि द्वितीयाया निरपेक्षत्वं स्वर्गस्त्वीप्सितः कामसंयोगात् स्वर्गकाम इति । तदेतदेवमापद्यते स्वर्गकामो यागेन स्वर्गं भावयेदिति यच्च भाव्यते तदात्मसत्यतो हि भावो नोपपाद्यते । असच्चेत्कर्मणा भाव्यते पुनः पुनरपि भावयिष्यति कृषिवत् तस्मात् फला-

र्थिना काम्यं यावदिच्छमभ्यसितव्यमिति। यदि च नियोगतः सकृदेव कर्त्तव्यं भवेत् ततस्तेषां प्रथमं यजेरन्नित्येवमादिषु गवादिविधिषु वचनान्येतानि कल्प्येरन्नद्वितीयं यजेरन्निति तथा च वाक्यानि भिद्येरन् ये च द्वितीयं यजेरन् तेषां गौरतिरात्र इति।

## एकशब्द्यात् तथाङ्गेषु ॥ २५ ॥ (पू० आ० नि०)

यत् तु अङ्गवदिति। युक्तं यदङ्गानां सकृत् प्रयोगः। एकशब्द्यात् एकस्तत्राङ्गानां प्रधानानां वोपदेशकः शब्दः सर्वाङ्गान्यपेक्षया गृह्णातीत्युक्तं सा चापेक्षा सकृदेवेष्वङ्गेषु भवति कृतार्था। तस्मात् तत्र पुनः पुनः क्रियाया हेतुर्नास्ति इह त्वसतः फलस्य कर्मोत्पादकं तस्य प्रतिप्रयोगमन्यस्यान्यस्योत्पत्तिरविरुद्धेत्येवमपदिष्टो हेतुः। तस्माद्विषमत्वमङ्गैः।

## लोके कर्मार्थलक्षणम् ॥ २६ ॥ (निद०)

यच्च लोकवदिति लोके कर्मार्थप्रधानं कार्य्यवशात् सकृदप्युक्तोऽसकृदाहरति असकृदप्युक्तः सकृदाहरति नाहरति वा। अथेह शब्दलक्षणे कर्म्मणि यथाशब्दार्थं प्रवृत्तिस्तस्माल्लोकवदिति अदृष्टान्तः।

---

अङ्गस्यानभ्यासाधिकरणम्।

**क्रियाणामर्थशेषत्वात् प्रत्यक्षतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥ (पू०)**

व्रीहीनवहन्ति तण्डुलान् पिनष्टि इत्येवमादीनां दृष्ट-प्रयोजनानां क्रियाणामातण्डुलनिर्वृत्तेः प्रयोगः स्यात्। कुतः एतासां प्रयोगे प्रत्यक्षोऽर्थो निर्वर्त्त्यते। अवहतास्तण्डुलाः पिष्टाश्च, तेषेह प्रयोजनं पुरोडाशस्य कार्य्यत्वात्। तस्मादेतासां तदर्थ एव प्रयोगो विज्ञायते यदि सकृदेव मुसलस्योद्यमननिपातने कृत्वोत्सृज्येत उपलाया वा प्रकर्षणाप्रकर्षणे, यदेषां कार्य्यं तन्नैव निर्वर्त्त्येत अत आसां तन्निर्वृत्त्या अपवर्गः स्यात्। आतण्डुलनिर्वृत्तेराच पिष्टनिर्वृत्तेरभ्यास इति।

**धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ २८ ॥ (सि०)**

यत्र तु दृष्टं कार्य्यं तन्निर्वर्त्त्यते। यथा "अग्निचित्यामौदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वा वहन्त्यत्र तदुपदधाति" इति। तत्र तण्डुलनिर्वृत्त्या नास्ति प्रयोजनम्। तण्डुलकार्य्यस्य पुरोडाशादेरचोदितत्वात् तस्मात् तत्र सकृत्क्रियया कृतः शब्दार्थ इति न स्यादभ्यासः। येषां तु तण्डुलफल एव मुसलस्योद्यमननिपातनकर्मण्यवहन्ति शब्दः प्रवर्त्तते इत्यपगमस्तेषामातण्डुलनिर्वृत्तेरेवाभ्यासः प्राप्नोति। स तु मन्द एवाभ्युपगमः। यत् कारणं

विनापि तण्डुलैः प्रयोगो दृश्यते कषायमवहन्ति किण्व-मवहन्तीति न चासौ गौणः प्रयोगो विशेषाभावात् अवयवप्रसिद्ध्या चावघातमात्रवचन एव प्रतीयते न च समुदायोऽर्थान्तरे प्रसिद्धः। तण्डुलव्यापारस्य तु प्रायोवृत्ते तत्र प्रयोगप्राचुर्य्यमतोऽयं व्यामोहः।

प्रयाजाद्यङ्गस्य सकृदनुष्ठानाधिकरणम्।

प्रयाजादीन्युदाहृत्य चिन्त्यते किं सकृत् प्रयोग एषां उताभ्यासोऽपि कर्त्तव्य इति तत्र धर्ममात्रे त्वदर्शना-च्छब्दार्थेनापवर्गः स्यादित्यनेन न्यायेन सकृत् प्रयोगे प्राप्ते एवमुच्यते।

## क्रतुवत्त्वानुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥ (पू०)

अभ्यासः कार्य्यः कुतः यतोऽभ्यासे भूमा स्यात् कथं ज्ञायते अनुमानेन, किं तदनुमानम्। प्रागङ्गप्रयोगात् प्रधानोपकारो नासीदूर्द्ध्वं ततो भवति तेन विज्ञायते नून-मङ्गेन क्रियत इति क्रियते चेत् पुनः पुनरपि करिष्यते क्रतुवत्। यद्यथा कर्मसु सौर्य्यादिषु फलं कर्मणा क्रियते इति कर्माभ्यासे फलभूयस्त्वमेवमिहापि।

## सकृद्वा कारणैकत्वात् ॥ ३० ॥ (सि०)

सकृदङ्गं प्रयोक्तव्यं नावृत्त्या। कुतः कारणैक-त्वात्। एकं कारणमङ्गानां प्रधानेषु उपकारः कः पुन-रसौ। येन प्रधानानि फलं ददति। तच्चेत् सकृत् प्रयुक्तो नाङ्गेन कृतं, जातानि प्रधानानि फलवन्तीति पुन-रङ्गस्याप्रयोगः। अथ न कृतं पुनराप्तप्रयोगः येन सकृत्

कृतेन नोपकृतं स पुनः क्रियमाण उपकरिष्यतीति का आशा।

परिमाणं चानियमेन स्यात् ॥ ३१ ॥ (यु०)

यदि चानियमः सकृदसकृद्वा प्रयोगः ततः चतुर्दश-पौर्णमास्याहुतयो हूयन्ते त्रयोदशामावास्यायामिति योऽयं नित्यवदाहुतिपरिमाणानुवादः स न स्यात्। स तावद्भवतां पाक्षिकः कल्प्येत तथास्य रूपं बाध्येत तस्मादनभ्यासः।

फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात् फलान्यत्वम् ॥ ३२ ॥ (पू० आ० नि०)

यत्तु क्रतुवदिति युक्तं यत् क्रतुष्वभ्यासः। फलस्यारम्भनिष्पत्तेः। कर्मारम्भेण तत्र फलं निष्पद्यते आरम्भान्तरेण परं निष्पत्स्यत इति। अङ्गस्य पुनरुक्तपरिणामफलं प्रधानम्। फलवत्तासम्पादनं तच्चेत् सकृत् कृतेन कृतं न भूयः क्रियास्त्विति एवमपदिष्टो हेतुस्तस्मादनुपन्यासः।

अर्थवतस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥ (आ०)

यदुक्तं सकृत्कृतेनाङ्गेन कृतत्वादर्थस्यानर्थकोऽभ्यासः इत्यत्र ब्रूमः। अर्थवांस्तु अभ्यासो ग्राह्यो नानर्थकोऽभ्यासः। कथं कृत्वा एकत्वादभ्यासः स्यादनर्थकः यद्येक-

मेवार्थमभ्यस्यमानमपि अङ्गं कुर्य्यात् तत्राभ्यासोऽनर्थकः स्यात्। यथा भोजनमेकस्मिन् कालेऽभ्यस्यमानमेकफलं तृप्तिं करोतीति नाभ्यस्यते। अथेहार्थस्यापरिमाणत्वे इयन्तमुपकारं करोत्यङ्गमिति ज्ञायते। ननु यावता प्रधानं फलवद्भवति तावत् करोतीति गम्यते। सत्यमेवं किन्तु प्रधाने क्रियार्थत्वादनियमः स्यात्। प्रधानस्य फल-क्रियार्थमङ्गम्। तत्तु प्रधानफलमपरिमितम्। तदङ्गो-पकारस्य भूयस्त्वे भूयो भविष्यति अल्पत्वे अल्पम्। अभ्यासे चासंशयं भूयानुपकारः स्यात् कार्य्यत्वात् तस्य। तस्मा-दनियमः स्यात् सकृद्वा प्रयोगोऽभ्यासो वेति।

पृथक्त्वाद्विधितः परिमाणं स्यात् ॥३४॥ (आ० नि०)

यत् तु आहुतिसंख्याविरुध्यत इति पृथक्त्वादुपकारस्या-भ्यासे न्यायप्राप्तेयमाहुतिसंख्याऽनुवादः स्यात् स विधितः स्यादाहुतिविधीनभिप्रेत्य चतुर्दशपौर्णमास्याहुतिविधय-स्त्रयोदशामावास्यायामिति। न ह्याहुतिसंख्या युज्येत आहुतिविधिसंख्यातु लक्षणयोपपद्यते।

अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रिया-र्थत्वात् ॥ ३५ ॥ (सि० नि०)

अनभ्यासो वाङ्गानां कुतः प्रयोगवचनैकत्वात्। एकः प्रयोगवचनोऽङ्गानां प्रधानानां च। तस्यैकत्वात् सर्वस्य

युगपच्छासनमनेन कर्मणा साङ्गेन यजेतेति । सकृत् कृतैश्चाङ्गैस्तत्साङ्गं जातमिति न पुनः क्रियायां हेतुरस्ति । ननूपकारभूयस्त्वं भविष्यति । यद्यङ्गान्यदृष्टमुपकारं कुर्यु-स्ततस्तदभ्यासे उपकारभूयस्त्वमनुमीयेत दृष्टमिव त्वर्थमङ्गानि कुर्वन्ति प्रधानस्याङ्गवत्ताम् । सा चाभ्यासेऽपि तावत्येवाङ्ग-वत्ता साचेह फलसम्बद्धा साङ्गेन यजेतेति नाङ्गानि । अङ्गानि तत्सम्पादनेनार्थवन्ति । नन्वेतदयुक्तमिव यदाहि प्रयाजा न तदा प्रधानयजिरपूर्वं वा यदा च यजिरपूर्वं च न तदा प्रयाजाः, तदेवमदृष्टरहिते समिदादिमात्रे सत्यङ्ग-वत्तैव नास्ति कुत उपकारः। अपि च यदि यजिमात्रमेवाङ्गेषु नापूर्वफलम् अस्ति ततः सोमाङ्गभूतानामिष्टिपशुवन्धानां चोदक एव नास्ति । असति ह्यपूर्वे इतिकर्त्तव्यताकाङ्क्षा नास्ति यजतेः प्रकृतेतिकर्त्तव्यताकत्वादितिकर्त्तव्यतां चोदको नातिदिशेत् तच्चैतानि दर्शनानि नोपपद्येरन् तस्यैकमतं प्रयाजानुयाजाः न च समिष्ट यजूंषि जुहोति प्रहृत्य परिधीन् जुहोति हारियोजनमिति । तस्मादिय-मन्या व्याख्या ।

अनभ्यासो वाङ्गानां प्रयोगवचनैकत्वात् । एकप्रयोग-वचनेऽङ्गानां प्रधानानां च तस्यैकत्वात् सर्वस्याङ्ग-प्रधानकलापस्य युगपच्छासनप्रधानानामनभ्यासः । कस्य हेतोः । सकृत्कृतैः प्रधानैः कृतः श्रुत्यर्थो दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेतेति कृते श्रुत्यर्थे यच्छास्त्र-विहितं फलं तल्लब्धमिति न पुनः क्रियायां हेतुरस्ति

एवमङ्गेष्वपि सकृत्कृतेषु यदङ्गानां प्रापकं शास्त्रं तस्यार्थः कृतः तस्मिन् कृते यच्छास्त्राधिगतमाङ्गफलं तल्लब्धमिदानीमित्यवगन्तव्यम्। तथा च सत्यभ्यासोऽनर्थकः। यत्तु फलभूयस्त्वं भविष्यतीति तदयुक्तं दर्शपूर्णमासयोर्यत् फलं तद्भावनायामङ्गोपकार उपयुज्यते नापूर्वस्य फलस्योत्पत्तौ यद्यपूर्वफलम् अङ्गैः कृत्वाद्येताङ्गफलमेव तत् स्यात्। न चाङ्गानि फलवन्ति प्रधानानां स्वकार्य्यं साधयतामदृष्ट उपकारस्तैः क्रियते सकृत्कृतैश्चासौ कृतः तस्मान्नाङ्गावृत्तौ फलभूयस्त्वमस्ति।

## अभ्यासो वा छेदनसंमार्गावदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥ (आक्षे०)

अभ्यासो वाङ्गानाम्। कुतः ?। पितृयज्ञे हि श्रूयते, सकृदाच्छिन्नं बर्हिर्भवतीति यथानुयाजे सकृत्परिधीन् समार्ष्टीति। स्विष्टकृति चोत्तरार्द्धात् सकृदवद्यतीति तद्यत् सकृदङ्गानां प्रयोगस्तत एतानि वचनान्युपपद्यन्ते। तस्मादभ्यासः।

## अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥ (आ०नि०)

अनभ्यासस्त्वङ्गानां यथोक्तेन न्यायेन यत्तु छेदनादिषु वचनात् सकृत्त्वस्यान्यथाभ्यासो विज्ञायत इति। अत्र ब्रूमः, यद्यप्यनभ्यासस्तथापि छेदनादिषु वाच्यं सकृत्त्वं दर्शपूर्णमासयोरसकृदाच्छिन्नं बर्हिर्भवतीति वचनात् तत्प्रकृतित्वात् पितृयज्ञेऽप्यसकृत् प्राप्तं तथा प्राप्तेऽसकृत्त्वं

वाच्यम् एवं प्रयाजेषु निःसंमार्ग उक्तः सानुयाजेषु पुनरावर्त्तते तत्रापि त्रित्वे प्राप्ते सकृत्त्वं विधातव्यं तथा विर्हिबिषोऽवद्यतीत्यविशेषेणोक्ते स्विष्टकृत्यपि द्वित्वं प्राप्तं तत्र सकृत्त्वं विधीयते तस्माच्छेदनादिषु सकृद्वचनानान्यत्राभ्यासो विज्ञातुं न्याय्य इति।

कपिञ्जलाधिकरणम्।

वसन्ताय कपिञ्जलानालभेत इति श्रूयते तत्र विचार्य्यते, किं तत्र त्रयश्चत्वारः पञ्च वा विकल्पेनालब्धव्या अथ वा त्रय एवेति। किं प्राप्तम्?।

## बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात्॥ ३८॥

विकल्पेनालब्धव्याः कस्मात् सर्वप्राप्तेः सर्वं एते संख्याविशेषा बहुवचनेन प्राप्यन्ते। सर्वे तस्य वाच्याः सर्वत्र प्रयोगात्। न च समुच्चयेन सम्भवन्त्यशक्यत्वात्। तस्माद्विकल्पः। ननु एवं सत्येकस्य शब्दस्यानेकार्थता आश्रिता भवति। न चैष न्याय्यः। उच्यते सत्यमेवमगत्या आश्रीयते सत्यां गतौ नाश्रयितव्यः। अस्ति तु इयं गतिर्यत् त्रित्वं बहुवचनस्यार्थः स्यात्। तद्योगाच्चतुरादिष्वपि वर्त्तते सर्वेषु तेषु त्रित्वमस्तीति। नैतद्युक्तम् यदि बहुवचनस्य त्रित्वमर्थः स्यात् ततश्चत्वारो ब्राह्मणा इति समानाधिकरण्यं नोपपद्यते ब्राह्मणा इत्यस्य त्रयोऽर्थः। चत्वार इत्यस्य चत्वारस्तयोः समानाधिकरण्यं न प्राप्नोति। न हि भवति चत्वारस्त्रय इति एवं सर्वत्र लक्षणया भविष्यति

यथा न्यग्रोधः चैत्रमिति। त्रित्वं हि चतुष्ट्वादीनि साहचर्यात् शक्नोति लक्षयितुं, सिद्धाति लक्षणा त्वाश्रिता भवति। किं क्रियतामगत्या आश्रीयते। सत्यां गतौ नाश्रयितव्या। अस्ति चेयं गतिर्यद् बहुत्वं बहुवचनस्यार्थः स्यात्। सर्वेऽपि ते बहव इति श्रुत्यैव सामानाधिकरण्यं यदि बहुत्वं विज्ञायते किं तद् बहुत्वमित्युच्यते। बहुत्वं वृद्धिः उपचयः आधिक्यमित्यर्थः। कथं कृत्वा वृंहतिरयं वृद्ध्यर्थः। तस्यौणादिक उकारः प्रत्ययः वृंहेर्नलोपश्चेति। तस्य रूपं वह्विति बहु वृद्धमधिकमित्यर्थः। सर्वे चैते त्र्यादयोऽधिकास्तस्मात् सर्वे बहुशब्दवाच्याः। नन्वापेक्षिकमेतद् बहु अधिकमिति। यदेव हि बहु तदेवान्यापेक्षयाबहु भवति, सत्यमेवं यत्तु यदपेक्ष्य बहु न तदेवान्यदपेक्ष्याबहु, तद्यथा उत्तराः कुरवो दक्षिणान् कुरूनपेक्ष्योत्तरा इत्युच्यते न च ततोऽन्ये उत्तरादेशा न सन्ति। अथ च नियतापेक्षत्वादुत्तरत्वं न जहति। एवं त्रिप्रभृतयो द्वित्वमपेक्ष्य बहुत्वं लभन्ते न च ते कदाचिदबहवः। कथं पुनर्ज्ञायते द्वित्वापेक्षं त्रिप्रभृतीनां बहुत्वमित्युच्यते अपेक्षा तावत् समानजातीयेषु भवति यथा बलवान् देवदत्त इति न हस्तिनं सिंहं वा अपेक्ष्य भवति। किं तर्हि समानजातीयान् पुरुषानपेक्ष्य। एवं संख्यापि संख्यामेवापेक्ष्य बहुत्वं लब्धमर्हति। तत्रैकत्वं तावन्नापेक्ष्यते द्वयोर्बहुवचनस्यादर्शनात्। त्र्यादिषु च सर्वेषु दृश्यते तेन विज्ञायते द्वित्वापेक्षमिति। तच्च बहुवचनेनोपलभ्यते। कुतः तद्भावे भावात् तदभावे तदभावात्। द्वित्वादिषु भवति।

तदभावे च द्वयोरेकस्मिंश्च न भवति एवं बहुवचनम् इति समाख्यान्वर्था भवति अभियुक्तवचनं च बहुवचनमिति यदि त्रित्वं बहुवचनस्यार्थः स्यात्। त्रिषु वचनमित्येव तद् ब्रूयात्। लाघवादसन्देहात् तस्माद् त्रित्वमपेक्ष्येति बहवः। अतोऽवस्थितं त्र्यादीनां बहुत्वमेवं च सति नैकः शब्दोऽनेकार्थो भवति। सर्वेषां च बहुत्वान्न कश्चित् लक्षणया प्रयोगः। अथोच्यते त्रिषु निरुपपदं प्रयुज्यते चतुरादिषु तु सोपपदं चत्वारो ब्राह्मणा इति तच्च मिथ्या त्रिष्वपि सोपपदं प्रयुज्यते यथा त्रयो लोकास्त्रयो वेदा इति। यदि च निरुपपदं च त्रित्वं प्रत्यापयेत्। ततो वसन्ताय कपिञ्जलानित्युक्ते विचार एवायं न प्रवर्त्तेत। यथा अत्रैव न विचार्यते किं कपिञ्जला आलब्धव्या उत मयूराः कपोता वेति। कस्य हेतोः यतः कपिञ्जलशब्दस्य न मयूराः कपोता वा वाच्याः। इहापि यदि बहुवचनस्य त्रित्वमेव वाच्यं स्यात् नेतरा संख्या। पूर्ववद्विचार एवायं स्यात्।

## दृष्टः प्रयोग इति चेत् ॥ ३९ ॥ (पू० आ०)

अथोच्येत दृष्टो बहुवचनस्य प्रयोगश्चतुरादिषु चत्वारो ब्राह्मणा इति। ततो विचार इति। तदिह। इहापि कपिञ्जलशब्दस्य दृष्टः प्रयोगः कपोते मयूरे च। महान् कपोत उच्यते कपिञ्जलोऽयं न पोत इति। तथाल्पो मयूरः कपिञ्जलोऽयं न मयूर इति।

## भक्तीति चेत् ॥ ४० ॥ ( आ० नि० )

आह भक्त्या तत्र कपिञ्जलशब्दः प्रयुज्यते। न च भाक्ते प्रयोगे शब्दार्थशङ्का भवति।

## तथेतरस्मिन् ॥ ४१ ॥ (पू० आ०)

इतरस्मिन्नपि चत्वारो ब्राह्मणा इति लक्षणया प्रयुज्यत इत्युक्तम्। न च लक्षणा प्रयोगे शब्दार्थशङ्का भवति। अपि च प्रातिपदिकार्थस्य या संख्या सा च अनेनाभिधीयते यथा ब्राह्मणा इति। प्रातिपदिकार्थ एव वा यथा द्वावेक इति। न च त्रित्वं प्रातिपदिकस्यार्थो न तत्संख्या इति। तस्मात् चत्वार इति बहुवचनं न प्राप्नोति। अथोच्यते। अस्ति चतुर्षु अवयवभूतं त्रित्वं तदपेक्षं बहुवचनमिति। द्वित्वमपि तत्रास्ति। एकत्वं च काममनेनैव द्विवचनमेकवचनं चोत्पद्येत तस्मात् न त्रित्वयोगाच्चतुरादिषु बहुवचनप्रयोगः बहुत्वादेव तेषां बहुवचनमतः सर्वं त्र्यादयः परार्धपर्यन्ता बहुवचनस्यार्थः सर्वे चेदर्थाः कपिञ्जलानालभेत इति सर्वं प्राप्यन्ते तस्माद्विकल्पः।

## प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४२ ॥ (सि०)

प्रथमं वा बहुत्वम्। त्रित्वं नियम्येत किं कारणम्। न हि कश्चित् चतुर उपाददानो न त्रीनुपादत्ते। यत् कारणमनुगतास्त्रयश्चतुर्षु वोपात्तेषु अतः शब्दार्थो बहूनालभेतेति श्रुतं चालब्धव्याश्च बहवः। एवं सति कारणादतिक्रमः स्यात्। यदि च यथाश्रुतानुपादाने किञ्चिदन्यत्-

कारणं नित्वातिक्रमे स्यात् ततोऽतिक्रमः। न तदस्ति तस्मात् नित्वं नियमेन। ननु फलभूयस्त्वं कारणं भविष्यतीति नैतदस्ति। यत्र बहवः कल्पाः श्रूयन्ते तेषां कश्चित् लघुः कश्चिद् गुरुः तत्र गुरोः कल्पस्यानुष्ठानाम्नानसामर्थ्यात् तदनुष्ठानात् फलभूयस्त्वमनुमीयते यथा एका देया षड्देया द्वादश देया चतुर्विंशतिर्देया इति इह तु एकएव कल्पो बहूनामालब्धः स त्रिभिश्चतुरादिभिस्तुल्यः। अतस्तत्र यो लघुमुत्सृज्य गुरुकल्पमातिष्ठेत तस्य फलभूयस्त्वं न भवितुमर्हति।

## श्रुत्यर्थाविशेषात् ॥ ४३ ॥ (यु०)

यथा पशुमालभेतेति श्रुतयो महान्तं महार्घं वा पशुमालभेत न तस्य फलभूयस्त्वं भवति। यस्तु मांसीयं शिष्टमतिक्रामेत् स यदि तावद्वैदिकीषु हिंसासु प्रत्यवायस्ततः प्रत्यवेयात्। अथाप्रत्यवायस्तथापि शिष्टविगर्हणं च लभेत्। कृते श्रुत्यर्थे मांसीयान् पशून् हन्तीति। तस्मात् त्रयः कपिञ्जला आलब्धव्याः।

## तथा चान्यार्थदर्शनम् ॥ ४४ ॥ (निद०)

अन्यार्थोऽपि चैतमर्थं दर्शयति यथा न्याय उपदिष्टः। यथा "कृष्णा याम्या अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः तेषामैन्द्राग्नो दशम" इति यदि च त्रय एते त्रिका एवं नियोगत ऐन्द्राग्नो दशमः सम्पद्यते। इतरथा पाक्षिकः स्यात्। तस्मात् नित्वनियमः।

प्रकृत्या च पूर्ववत् तदासत्तेः ॥ ४५ ॥ (यु०)

प्रकृत्याग्नीषोमीयेणैकत्वं प्राप्यते तस्योत्पत्तिर्भविष्यति चित्व उपादीयमाने, इतरथा विप्रकर्षः स्यात्। इदं वापि लिङ्गं गृहमेधीये श्रूयते श्रोदनानुद्धरतीति तत्र मध्यमस्येति त्रयाणां निरुपपदं भवति। अन्यत्र सोपपदं पञ्चानां मध्यमः। अष्टानां मध्यम इति।

——

उत्तरादोहनानुवादाधिकरणम्।

उत्तरासु यावत्स्वमपूर्वत्वात् ॥ ४६ ॥ (पू०)

सान्नाय्ये दोहनं प्रकृत्य श्रूयते। वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वालभ्योत्तरा दोहयतीति किमयं विधिरनुवाद इति। किं प्राप्तम् ?, अपूर्वार्थत्वात् विधिरिति। अनुवादो ह्यनर्थकः स्यादिति प्राप्ते उच्यते।

यावत्स्वं वानाविधानेनानुवादः स्यात् ॥ ४७ ॥ ( सि० )

अनुवादः स्यात् नायं विधिः उत्तरा दोहयतीति अन्योऽत्र विधिर्विसृष्टवागनन्वालभ्येति। यद्येषोऽपि विधिः स्याद्वाक्यं भिद्येत उत्तरा दोहयति तासामनन्वालभ्येति अथ कुतः प्राप्ते अनुवादः।

साकल्यविधानात् ॥ ४८ ॥ (हे०)

साकल्यमत्र विधीयते गवान्दोग्धव्यानां नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयात् कुमाराश्च न पयो लभेरन्। ननु कुमाराणां पयोदानप्रतिषेधो या न हि पयः प्रतिषेधे किञ्चिद्दृष्टमस्ति। अदृष्टं कल्पयितव्यम्। नन्वितरत्रापि लक्षणाश्रयणीया वाढम् दृष्टार्थाच्छन्दस्तु लघीयसीति। तस्मात् साकल्यविधिरेवां पयः प्रतिषेधं नायं लक्षणया। ततः प्राप्तेऽनुवादः।

## वह्वर्थत्वाच्च ॥ ४८ ॥ (हे॰)

वहुदुग्धीन्द्राय देवेभ्यो हविरिति च मन्त्रस्य सर्वासु दुह्यमानास्वपाचिकत्वं भविष्यति। वहुत्वं च अत्यपेक्षम्।

## अग्निहोत्रे चाशेषवद्यवागूनियमः प्रतिषेधः कुमाराणाम् ॥ ५० ॥ (हे॰)

अग्निहोत्रे च श्रूयते। "नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयाद् यथान्यस्यै देवतायै प्रत्तमन्यस्यै देवतायै दद्यात् तादृक् तत्स्यात् यवाग्वा जुहुयादिति"। सर्वस्य पयसः सान्नाय्यार्थतां दर्शयति। तथा पयःप्रतिषेधः कुमाराणामितिव्याख्यातम्।

## सर्वप्रायिणापि लिङ्गेन संयुज्यते देवताभिसंयोगात् ॥ ५१ ॥ (हे॰)

वत्सेभ्यश्च ह्वा एता मनुष्येभ्यश्च पुराप्यापयन्ते अथैतर्हि देवेभ्य एवैता आप्यापयन्ति"सर्वप्राप्तेरेतल्लिङ्गं कथम्।

यावत्तेभ्यो मनुष्येभ्यश्च पुराप्यायपन्ते तस्मात् सर्व-प्राप्तेरेतल्लिङ्गम् अतो यावत्स्वसुत्तरासु दोहनं स्यात्।

आघारादीनामङ्गाङ्गानां तन्त्राधिकरणम्।

दर्शपूर्णमासयोः प्रधानान्याग्नेयादीनि तेषामङ्गान्याघारादीनि तेषु चिन्त्यते किं तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोगः अथ वा सर्वेषां तन्त्रेणेति अथ तत्र किं वृत्तं क्रतुवत्त्वानुमानेनाभ्यासे फलभूमा स्यादिति तत्र कृत्स्नौ दर्शपूर्णमासावुद्दिश्य कथा वृत्ता इह तु तत्तत्प्रधानं प्रति-चिन्त्यते किं प्राप्तम्।

## प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात्॥ ५२॥ (पू०)

अङ्गानां प्रयोगे कर्मभेदः स्यात् क्रियाभेदः तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोगः कुतः। प्रधानकर्मार्थत्वात् प्रधानार्थत्वादित्यर्थः। प्रधानार्थेन ह्यङ्गान्युपदिश्यन्ते अङ्गवन्ति प्रधानानि कथं स्युरिति। अङ्गसम्बन्धे च प्रधानार्थे अङ्गानां सहत्वं न विवक्ष्यते। न हि तत्र प्रधानानि विधीयन्ते। किं तर्हि अङ्गानि चाविधीयमानस्यार्थस्य गुणो विवक्षितो भवति। यथा ग्रहं संमार्ष्टीत्येकत्वमेवं चेदेकैकस्य प्रधानस्याङ्गैः सम्बन्धः कर्त्तव्यः तानि यदि सकृत् क्रियेरन् न विभागेन सम्बध्येरन् यथा प्रायणीयोदयनीययोरेकादशिन्यां समस्तैश्च सम्बन्धः कर्त्तव्य इत्युक्तं विधेस्त्वेक-श्रुतित्वादित्यत्र तस्मात्प्रतिप्रधानमङ्गभेदः।

## क्रमकोपश्च यौगपद्यात् स्यात् ॥ ५३ ॥ (आ०)

प्रधानानि च क्रमवन्ति तानि च यथाक्रमं साङ्गानि कर्त्तव्यानि तत्र यदि तन्त्रम् अङ्गानि स्युः ततोऽकृत्वाग्नेयं साङ्गमग्निषोमीयः प्रक्रान्तः स्यात् तथा च प्रधानानां क्रमकोपः स्यात् । अथ तु भेदस्ततः साङ्गमाग्नेयमपवृज्याग्नीषोमीयः साङ्गः प्रक्रान्तः क्रियत इति नास्ति क्रमकोपः । अपर आह यदि तन्त्रं भवेयुः अङ्गानि ततो यावत्तनूनपादाग्नेयस्योपकरोति तावत्समिधाग्नीषोमीयस्योपकर्त्तव्यं स एष उपकार क्रमकोपः । अपि च अङ्गारापोहनादीनि संसर्गादीनि प्रतिप्रधानं भिद्यन्ते तैश्चाघारादीनामवैलक्षण्यं भविष्यति ।

## तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद्विशेषाग्रहणात् ॥ ५४ ॥ (सि०)

तुशब्दः पक्षान्तरं परिजग्राह नचैव पक्षः श्रेयान् भेद इति किं तर्हि यौगपद्यं सकृत् प्रयोगः स्यात् । सकृदेव प्रयुक्तान्यङ्गानि सर्वैः प्रधानैर्युगपत् सम्बध्यन्ते तुल्यानामेकशब्दोपदिष्टानां चेदमर्थं प्रति विशेषाग्रहणात् । इमानि कर्त्तृतो देशतः कालतश्च तुल्यानि दर्शपूर्णमासयोः यज्ञक्रतोश्चत्वार ऋत्विजः समे । दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्यां यजेतामावास्याममावास्यया यजेतेति । प्रधानैश्च सहाङ्गानाम् एकदेशकालकर्त्तृकत्वं वक्ष्यति । अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्नि-

त्यत्र एकेन च शब्देन प्रधानानि फलं प्रत्युपदिष्टानि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। किमतः, अतस्तेषां फले सम्भूयकारित्वं, तेन स्वर्गकामस्य सर्वेषां युगपच्चिकीर्षा नैकश्यः। सर्वचिकीर्षया त्वावारादीनां क्रियमाणानां तुल्यकर्त्रादीनां न श्रुयते विशेषः कस्यैतान्याग्नेयस्याग्नीषोमीयस्य वेति सर्वेषां च युज्यन्ते तस्मात् सर्वार्थानि भवन्ति। तस्मादनावृत्तिः।

## ऐकार्थ्यादव्यवायः स्यात् ॥ ५४ ॥ (आ० नि०)

यच्च क्रमकोपश्च यौगपद्ये स्यादिति तत्र ब्रूमः ऐकार्थ्यादव्यवायः स्यात्। न क्रमकोपः कुतः ऐकार्थ्यात् सम्भूयकारीण्येतानीत्युक्तं तेषां सह क्रिया नैकश्यः। न हि तत्रैकेन कृतेन कश्चिदर्थः। एकसम्बन्धक्रियायामानुपूर्व्यं स्यात्तस्मान्न तेषां प्रयोगे क्रमः कुतः क्रमकोप इति। यच्चोपकारे क्रमकोप इति तत्रापि नावारः कृतमात्र एव प्रधानेषूपकरोति यत्कारणं तस्मिन्काले प्रधानान्येव न सन्ति। यदा तु सर्वाण्यङ्गानि कृतानि तदा तज्जान्यपूर्वाणि सम्भूय प्रधानेषूपकुर्वन्ति अङ्गानामपि हि सम्भूयकारित्वमुक्तम् अर्थैकार्थ्यादेककर्म्यमिति तस्मादुपकारेऽपि नास्ति क्रमकोपः।

## तथा चान्यार्थदर्शनं कामुकायनः ॥ ५५ ॥(यु०)

तथा चान्यार्थदर्शनं भवति यथा न्याय उपदिष्ट इति कामुकायान आचार्यो मन्यते स्म। किं पुनस्तत् चतुर्दश-

पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति यथाहत्तिः स्यात्र त्रयोदश चतुर्दश वा व्यवतिष्ठेरन् यत्र संसर्गवद्दारादुपकारिणामप्यावृत्तिरस्तीति तत्र ब्रूमः ।

तन्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५६ ॥ (आ० नि०)

स हि न्यायः सम्भूयकारिणां सहक्रियेति सर्वत्रैव सहक्रियाऽशक्तौ तु धर्मसंसर्गेष्वानुपूर्व्यं स्यात् भेदेन क्रिया । न शक्यते एकस्याङ्गारोपोहनेन सर्वेषां पाकः कर्त्तुं, न चैकस्मिन् पुरोडाशे अपिते सर्वे अपिता भवन्ति संस्कारस्य तदर्थत्वात् संस्कारोऽयं पाकार्थो विधीयते । तत एव प्रत्यक्षोपकारिणः प्रतिप्रधानमावृत्तिः स्यात् अन्यथा याग एव न संवर्त्तेत ।

असंसृष्टोऽपि तादर्थ्यात् ॥ ५७ ॥ (यु०)

असंसृष्टोऽप्याघारादिः प्रतिप्रधानमावर्त्तेत कुतः तादर्थ्यात् । यस्य समीपे कृतस्तदर्थं इति गम्यते विशेषः । आघारादीन्याज्यभागान्तान्याग्नेयस्य स्विष्टकृदादीन्यग्नीषोमीयस्येति गृह्यमाणे विशेषे भेदः । तस्मादुपांशुयाजादीनां समीपे प्रागाघारादीनि ऊर्द्धं स्विष्टकृदादीनि कर्त्तव्यानि एवं च संसर्गिभिरितरेषां अवैलक्षण्यं भविष्यति ।

## विभवाद्वा प्रदीपवत् ॥ ५८ ॥ (निद०)

यदुक्तं यस्य सन्निधौ प्रयुक्तानि तस्येमानीति गम्यते इति विशेषः तस्मादावृत्तिरिति नैतद्युक्तं कुतः विभवात्। विभविष्यन्त्येतान्येकस्यापि सन्निधौ क्रियमाणानि सर्वेषामुपकर्त्तुं प्रदीपवत्। तद्यथा प्रदीप एकस्मिन् प्रदेशे भुञ्जानानां ब्राह्मणानामेकस्य सन्निधौ क्रियमाणः सर्वेषामुपकारं करोति तस्मादनावृत्तिः।

## अर्थात् लोके विधितः प्रतिप्रधानं स्यात् ॥ ५९ ॥ (आ० नि०)

उपवर्णनापरिहारः पूर्वं न कृत इति स तावद्वर्ण्यते। यदुपवर्णितं प्रदीपवदिति तदयुक्तम् अर्थाल्लोके प्रदीपस्य सकृदसकृद्वा क्रिया। यदि सकृत्कृतः सर्वं प्रकाशयति सकृत् क्रियते अथ न प्रकाशयति ततोऽसकृत्। ततश्चास्य प्रत्यक्षसामर्थ्यम् अथेह विधित उपकारोऽनुपकारो वा गम्यते न प्रत्यक्षेण। न चास्ति विधानमस्योपकरोतीति सन्निधानात् विशेषग्रहणाद्गम्यते यस्य सन्निधौ प्रयुक्तास्तस्योपकरोतीति तस्मादावृत्तिः।

## सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६० ॥ (आ०)

अथ यदुक्तं सकृदिज्यां कामुकायन आचार्यो मन्यते।

नैवं चतुर्दशत्रयोदशेत्याहुतिपरिमाणस्य विरोधः स्यादिति तस्य कः परिहारः। आभाषान्तं सूत्रम्।

विधिस्त्वितरार्थत्वात् सकृदिज्या श्रुतिव्यतिक्रमः स्यात् ॥ ६१ ॥ (आ० नि०)

विधीयत इति अङ्गं विधिशब्देनोच्यते अङ्गस्येतरार्थत्वात्। यदेतत् स्थितं यत्सन्निधौ यत्कृतं तदर्थमेव तदिति तदावृत्त्याङ्गानां प्रयोगः। तत्र चतुर्दश त्रयोदशेत्याहुतिसंख्या नोपपद्यते। आहुतिविषयस्तु चतुर्दश त्रयोदश तेषां लक्षणया वचनमुपपद्यते चतुर्दशपौर्णमास्यामाहुतिविषयः। त्रयोदशामावास्यायामिति। नैतत् संख्याविधानं प्रत्ययेनैव संख्यायाः प्राप्तत्वात् अनुवादस्त्वयमनुवादश्च लक्षणयोपपद्यते। विहितस्य स भवति। आहुति विधानां चेयं संख्या विहिता नाहुतीनां तस्मात्तेषामनुवादः।

विविवत् प्रकरणाविभागे प्रयोगं बादरायणः। ॥ ६२ ॥ (सि०)

तन्त्रेण प्रयोगं बादरायणो मन्यते स्म कुतः। प्रकरणाविभागात्। सर्वेषां प्रधानानामविभक्ता प्रक्रिया समभूय कारित्वादित्युक्तं तत्रेदमर्थं प्रति न गृह्यते विशेषः। यत्तु सन्निधियोगेण विशेषग्रहणमुक्तं तदयुक्तं किं कारणं वशेषो यः सन्निधिक्रमः स प्रकरणेन बाध्यते विविवत्।

यथा विधौ तुल्यत्वात् प्रकरणस्य सर्वार्थान्यङ्गानि विज्ञायन्ते न यस्य सन्निधौ तदर्थानि क्रमस्य प्रकरणेन बाधितत्वात्।

अपि चैकेन सन्निधानमविशेषको हेतुः ॥ ६३ ॥
(हे०)

यद्यपि सर्वार्थाः तदाप्येकस्य कस्यचिदवश्यं सन्निधौ कर्त्तव्या। तस्मान्न विशेषः सन्निधेरैकान्ततः शक्य अवधारयितुमतस्तन्त्रेण प्रयोगः। बादरायणग्रहणं कीर्त्यर्थं नैकीयमतार्थम्।

क्वचित् विधानान्नेति चेत् ॥ ६४ ॥ (आ०)

नैतद्युक्तं सकृत् क्रियेति। कुतः क्वचित् सहत्वमाहत्य विधीयते सह। वध्नन्ति सह पिषन्ति तदनावृत्तौ सर्वतः प्राप्तायां परिसंख्यार्थं भवति इहैव सहत्वन्नान्यत्रेत्युच्यते।

न विधेश्चोदितत्वात् ॥ ६५ ॥ (आ० नि०)

न तत्र परिसंख्या युज्यते प्राप्तस्य पुनर्वचनं परिसंख्यार्थं भवति न चेह सहत्वं प्राप्तं कुतः भेदेन निर्वापस्य चोदितत्वात्। आग्नेयाग्नीषोमीययोर्भेदेन निर्वापस्तु उक्तः तयोर्भेदेनैवावहननपेषणे प्राप्नुतस्तत्रावश्यं

विधेयं महत्वन्तस्मान्न क्वचित् सहत्वविधानादन्यत्र भेदेन क्रिया विज्ञायेतेति।

कृष्णग्रीवस्य भेदेन ग्रहणाधिकरणम्।

क्वचिच्छ्रूयते आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्द्धमान इति तत्र विचार्य्यते। किं कृष्णग्रीवस्य प्रथमस्य तृतीयस्य सह प्रदानं कर्त्तव्यमथवा भेदेनेति किं प्राप्तम्।

## व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाण विशेषाणाम्॥ ६६॥ (पू०)

व्याख्यातं प्रयोगे यौगपद्यमिति तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्यादिति इह तु कृष्णग्रीवयोरेकदेवतत्वात् सह प्रयोगे क्रियमाणे न गृह्यते विशेषः सह क्रिया चैकफलत्वात् प्राप्ता तस्मात् सह प्रदानम्।

## भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद्विशिष्टानां विधिः प्रधानकालत्वात्॥ ६७॥ (सि०)

भेदस्तु प्रदानस्य युक्तो न तन्त्रता कुतः कालभेदात् कथं कालभेदः चोदनाव्यवायात्। सौम्यचोदनया व्यवहिते कृष्णग्रीवचोदने तत्र पाठक्रमादेकस्य पुरस्तात सौम्यस्य प्रयोगः प्राप्त एकस्योत्तरत्र तयोर्यदि सह प्रदानं क्रियेत क्रम उपरुध्यत अन्यतरस्य पुरस्तात् क्रियायामुत्तरस्योपरिष्टात् पूर्वस्य तस्माद्भेदेन प्रयोगः।

तथा चान्यार्थदर्शनम् ॥ ६८ ॥ ( नि्द० )

अभितः सौम्यमाग्नेयौ भवत इति ।

विधिरिति चेत् न वर्त्तमानापदेशात् ॥ ६९ ॥

( आ० नि० )

अथ विध्यभिप्रायं कल्पेत मुख्यर्थमुत्सृज्य लक्षणार्थः परिगृहीतः स्यात् तस्मात् प्रदानभेदः ।

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये एकादश-स्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

अथ एकादशाध्यायस्य द्वितीयः पादः ॥

आग्नेयादीनां न देशकालादितन्त्रताधिकरणम् ।

एकदेशकालकर्तृत्वं मुख्यानामेकशब्दो-पदेशात् ॥ १ ॥ (पू०)

दर्शपूर्णमासयोराग्नेयादीनि प्रधानानि तत्र देशकाल-कर्तारः "सम दर्शपूर्णमासाभ्यां यजेत" पौर्णमास्यां पौर्णमास्या यजेत "अमावास्यायाममावास्यया यजेत"। दर्शपूर्णमासयो-र्यजमानश्चत्वार ऋत्विज इति । तथा चातुर्मास्ये प्राचीन-

प्रवणे वैश्वदेवेन यजेत, वसन्ते वैश्वदेवेन यजेत। चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति। तत्र विचार्य्यते किम् आग्नेयादीनां प्रधानानां तन्त्वं देशकालकर्त्तारः अथवा भेद एवेति। तत एतावत्तु परीक्ष्यं किं? चोदनाविधिशेषा देशादयो यदाग्नेयोऽष्टाकपाल इत्येवमादय आग्नेयादिचोदनाविधयस्तेषामिमे समादिविधयः शेषाः। आग्नेयोऽष्टाकपालः एवं भवति एवं सर्वत्र अथवा "प्रयोगाङ्गं देशादयः" य एषामाग्नेयादीनां प्रयोगः फलसाधनार्थस्तदङ्गानामिति" किञ्च, अतः? यदि प्रयोगाङ्गं ततस्तन्त्वम् अथ चोदनाविधिशेषास्ततो भेदेनेति। किं प्राप्तम् एकदेशकालकर्त्तृत्वं मुख्यानां तन्त्रमित्येषा प्रतिज्ञा तत एवं तावद्वर्णयति। प्रयोगाङ्गं देशादय इति कुतः?। न तावदृते देशकालकर्त्तृभ्यः प्रयोगा भवति। यच्च येन विना न भवति तत्तदङ्गमित्यवगम्यते तस्मात् प्रयोगाङ्गं देशादयः। यदा प्रयोगाङ्गं तदा तन्त्वभावः। कस्मात् एकदेशोपदेशात्। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति एकशब्दोपदेशादेकं फलं एकफलात्मकः प्रयोगः। तत्र न गृह्येत विशेषो देशादीनामेदमर्थं प्रति। अगृह्यमाणे विशेषे तन्त्वभावो युक्तः तस्मात् तन्त्वं देशादयः।

**अविधिश्चेत् कर्मणामभिसम्बन्धः प्रतीयेत तल्लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रति प्रधानभावः स्यात्॥ २॥ (सि०)**

अविधिश्चेत् यदि चोदनाविशेषो न स्यात् देशादि-विधिस्ततः कर्म्मणामाग्नेयादीनां भेदेन देशादिरभिसम्बन्धो न प्रतीयेत। चोदनाविशेषस्त्वयं किं कारणम् इह समे दर्श-पूर्णमासाभ्यामित्येवमादिभिर्वाक्यैः देशादयो विधीयन्ते अप्राप्तत्वात् ते चेद्विधीयन्ते आग्नेयादीनां दर्शपूर्णमास-शब्देनानुवादयितव्यम्। अन्यथा अनेकार्थविधानमेकस्मिन् वाक्ये भवतीति। अनुवादे च तेषां सहत्वन्न विवच्यते। वि-वच्यमाणे वाक्यभेदो भवति आग्नेयादिना देशादयः तेषां च सहितानामिति। कथम्? समे दर्शपूर्णमासाभ्यामित्येव-मादिभिर्वाक्यैराग्नेयादिषु देशादयो न विधातुं शक्यन्ते लक्षणार्थाभिसंयोगात् लक्षणार्थेनाभिसंयोगो विज्ञायते दर्शपूर्णमासशब्दः समुदायार्थोऽयं समुदायश्च समुदायि-लक्षणार्थः शक्नोति साहचर्य्यात् समुदायिनो लक्षयितुं न त्वेवमपि लक्षणाश्रितो भवति। वरं लक्षणा नैकवाक्यस्या-नेकार्थत्वम्। अनेकार्थत्वेऽगमकत्वम्। लक्षणानुगमिका लौकिकत्वात्। अपि च श्रुत्या समुदाये देशादयो विधी-येरन्। न च समुदायस्य देशादिभिः सम्बन्धोऽस्ति। कारकं हि समयः कारकस्य कर्म्मणा सम्बन्धो न कर्म्मगुणेन तस्मादपि लक्षणा। यथा पौर्णमासीमभिसृशेदिति हवि-र्लक्षणा चोदनाविधित्वाच्चेतरेषां देशादीनां प्रतिप्रधान-भावः स्यात् श्रूयमाणविशेषत्वात्। अथ केन समादय आग्नेयादिषु विधीयन्ते?। समे यजेत पौर्णमास्यां यजेत्य-नेनाख्यातेन। अत्र हि धातुना यागमनूद्य विभक्त्या तेषु समादीनां विधिः, कर्त्तारोऽपि, यस्तेषां यागानां रूपविधा-

नार्थो भवति अच्युतो भवतीति तेन विधीयन्ते। अथ वा अस्तिर्भवतीतिपरः प्रथमपुरुषे प्रयुज्यमानोऽप्यस्तीति।

---

अङ्गानां प्रधानदेशादिनियमाधिकरणम्।

एवं स्थितमपर्य्यवसितं भवत्यतोऽन्तरा चिन्तान्तरं क्रियते किम्? पुनः कारणमेतस्मिन्नपर्य्यवसिते चिन्तान्तरमारभ्यते एतस्मिन् न्याये स्थिते तस्याश्चिन्तायाः पूर्वपक्ष उत्तिष्ठति अतः असौ एतस्मादनन्तरमुच्यते।

## अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥ (पू०)

अङ्गेषु इदानीं विचार्य्यते किं तेषां समुदाय एव देशकालकर्त्तारः अथवाऽनियम इति किं प्राप्तम्। अङ्गेषु च तदभावः कुतः प्रधानं प्रति निर्देशात् चोदनाविधिविशेषत्वेनाग्नेयादीनि प्रधानानि प्रति समादयो निर्दिष्टा नान्यत्र भवन्ति। तस्मादनियमः। यथा द्रव्यदेवतं यत् प्रधानेषु न तदङ्गेषु। एवं देशादयोऽपि स्थितादुत्तरम्।

## यदि तु कर्म्मणो विधिसम्बन्धः स्यादैकशब्द्यात् प्रधानार्थाभिधासंयोगात् ॥ ४ ॥ (सि०)

यदि आग्नेयादेः कर्म्मणः समादिसम्बन्धः स्यात् ततः स्याच्चोदनाविधिविशेषत्वं भेदेन च समादयः। नतु तदस्ति

कुतः एकशब्दात् प्रधानार्थाभिधासंयोगात् यस्मा-दाग्नेयादीनां समस्तानामेकशब्दो वाचकस्तेन समादी-नामभिसंयोगः समे दर्शपूर्णमासाभ्यां यजेतेति। न वै व्यस्तानां वाचकाः यदाग्नेयोऽष्टाकपाल इत्येवमादयः। तत्र प्रत्यक्षं समस्तसंयोगमतृस्त्वञ्च परोक्षो व्यस्तसंयोगः कल्प्यः। सोऽपि लक्षणया अथ तु प्रधानानामभिसंयोगः क्रियते तत उभयमपि परिहृतं भवति। कः पुनः प्रधा-नार्थः। प्रधानं फलं तत्साध्यात् प्रधानार्थो यो व्यापारः। कश्चासौ आग्नेयानीनां प्रयोगः। कथं तेनाभिसंयोगः समादीनां विज्ञायते। उच्यते। दर्शपूर्णमासाभ्यां स्वर्ग-कामो यजेतेत्यनेन समस्तानामाग्नेयादीनां फलसाध-नार्थः प्रयोग उक्तस्तस्य च यदि पुनः श्रुत्या समादयो विधीयन्ते याभ्यामेताभ्यां दर्शपूर्णमासाभ्यां यजेत ताभ्यां समे यजेतेति ततो न परोक्षो व्यस्तसम्बन्धः कल्पितो भवति न च लक्षणा तस्मात् प्रयोगे विधिरेतेषां स च सर्वेषां प्रधानानां साधारणः तत्रैदमर्थ्यं प्रतिगच्छति विशेषः। तस्मात् तन्त्रं देशकालकर्त्तारः।

## तथा चान्यर्थदर्शनम् ॥ ५ ॥ (नि.द०)

अन्यार्थोऽप्येतमेवार्थं दर्शयति। उभयाणि ह वा एतानि घोराणि हवींषि यदमावास्यायां सन्निधीयन्ते आग्नेयं प्रथ-ममैन्द्रे उत्तरे इति। सन्निधरणं पौर्वापर्य्यं चैककालत्व उप-पद्यते तस्मादपि तन्त्रम्।

श्रुतिश्चैषां प्रधानवत् कर्मश्रुतिः परार्थत्वात् ॥ ६ ॥ (हे०)

इतश्च प्रयोगचोदना पुनः श्रुतिरियं, कुतः श्रुतिस्तेषां समादीनां प्रधानानामिव, कथं कृत्वा कर्मश्रुतिः परार्थत्वात् । याच कर्म श्रुतिः दर्शपूर्णमासाभ्यामिति सा परार्था तृतीयायोगात् तथा सामानाधिकरण्यात् यजेतेति यजिरपि परार्थ एव तदेतदेवमापद्यते दर्शपूर्णमासयागेनान्यत् किमपि कुर्य्यादिति ।

कर्मणोऽश्रुतत्वाच्च ॥ ७ ॥ (हे०)

कर्म च न श्रुतं, कार्य्यं न श्रुतं, प्रधानं न श्रुतमित्यर्थः । तस्य स्थाने समादीनि श्रूयन्ते प्रधानस्थाने श्रुतत्वात् । श्रुतिरेषां प्रधानवदित्युच्यते । न च तानि प्रधानानि तत्र यदि आग्नेयादिवाक्यानां पुनः श्रुतिरियं कल्प्येत गुणभावानुवादो भज्येत न हि तत्र तेषां गुणभाव उक्तः उत्पत्तिमात्राख्यानानि तानि च किञ्चित् कार्य्यं निर्दिष्टं यदपेक्ष्यानुक्तोऽपि गुणभावोऽर्थप्राप्तोऽनूद्येत प्रयोगचोदनायां तु गुणभाव उक्तः । कार्य्यमपि फलं तस्मात् तस्याः पुनःश्रुतिरियं तथा च तत्वभावः सिद्धः ।

अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम् ॥ ८ ॥ (सि०)

अङ्गेषु स्थितादुत्तरं यदा प्रयोगाङ्गं देशादय इत्युप-

यत्र तद्दायमुत्तरः पश्च उत्तिष्ठति तस्मात् ततोऽनन्तर-मुच्यते यदुक्तम् अङ्गेषु देशादीनामनियम इति तन्न अङ्गेषु समादिनियम इति कुतः यतोऽङ्गान्यपि प्रधानेन फल-सिद्धावुद्दिश्यमानेन सहोपदिश्यन्ते कथं विधानत्वात् प्रधानानां फलं साधयतां विधानमेतद्यदुपेताङ्गप्रयोगो विधानकल्प इतिकर्त्तव्यतेत्यर्थः। अतो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्राङ्गवान् प्रयोगः प्रधानानां युक्तः यथा विधिस्तत्रोक्तस्तथाविधेन पुनः श्रुत्या समादीनां विधिः। अतोऽङ्गानामपि प्रधानैः सहैकदेशकालकर्तृत्वं स्यात्।

## द्रव्यदेवतं तथेति चेत् ॥ ९ ॥ (आ०)

अथ यदुक्तं यथा द्रव्यदेवतं प्रधानानामङ्गानां च भेदेन भवति एवं देशादयोऽपि स्युरिति तत्परिहर्त्तव्यम्। आभाषान्तं सूत्रम्।

## न चोदनाविधिशेषत्वात् नियमार्थो विशेषः ॥ १० ॥ (आ० नि०)

नैतदेवं कुतः चोदनाविधिशेषत्वात्। चोदनाविधि-शेषो हि द्रव्यदेवताविधिः। तेन प्रधानेषु द्रव्यदेवत-विशेषो नियतः। इहाग्निः पुरोडाशस्य इहाज्यमग्नी-षोमौ चेति तथाङ्गेष्वपि आज्येन प्रयाजान् यजति शेषात् स्विष्टकृतं यजतीति न चान्यत्र निर्दिष्टोऽन्यत्र भवति तथेह प्रयोगाङ्गत्वात् देशादीनां तस्य च प्रयोगस्य साधारण्यात् तत्सन्निधान इत्यपदिष्टो हेतुः तस्माद्विषमं द्रव्यदेवतेन।

तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधान-शब्दत्वात्तथा चान्यार्थदर्शनम् ॥११॥ (द्वि०)

यदि च समानं द्रव्यदेवतमङ्गानां प्रधानानां च स्यात् ततस्तेषु द्रव्यदेवतेषु समानेषु समवेतानामङ्गानां प्रधानानां च समवायात् तदवस्थोऽविशेष इति तन्त्रमिष्या स्याद्भेदस्तु तद्भेदात्। अथ तु भेदो द्रव्यदेवतस्य ततस्तद्भेदात् कर्मभेदः प्रयोगे स्यात्। इज्याकर्मणः प्रयोगविशेष-ग्रहणाद्भेदः स्यात्। तथा चान्यार्थदर्शनं युक्तं भविष्यति चतुर्दश पौर्णमास्यामाहुतयो ह्रूयन्ते त्रयोदशामावास्याया-मिति तस्मादपि द्रव्यदेवतस्य भेदः।

राजसूयादावङ्गाद्यत्यधिकरणम्।

दर्शपूर्णमासेष्ट्यां द्वौ समुदायौ दर्शः पूर्णमासश्च। तथा राजसूयेऽनुमत्यादयः इष्टयः पवित्रादयः सोमाः चातुर्मास्ये-ष्वपि पर्वाणि वैश्वदेवादीनि तत्र विचार्यते किं दर्शस्य पूर्णमासस्य च तन्त्रेणाङ्गानां प्रयोगः तथा राजसूयेष्टीनां सोमानां च चातुर्मास्येषु च पर्वाणामुत तन्त्रभेदेनेति किं प्राप्तम्।

इष्टि राजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥ १२ ॥ (पू० )

तत्र तत्र तन्त्रेण प्रयोगः कुतः ऐककर्म्यात् एकफल-

त्वादित्यर्थः एकं फलमिह तत्र तत्र श्रूयते दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत राजसूयेन स्वाराज्यकामो यजेत चातुर्मास्यैः स्वर्गकामो यजेत एकत्वात् फलस्यैकः प्रयोगः तत्र न गृह्यते विशेषः तस्मात् तन्त्रम् ।

## कालभेदान्नेति चेत् ॥ १३ ॥ ( आ० )

नैतदेवं तन्त्रमङ्गानीति किं तर्हि भेदेन कुतः कालभेदात् क्वचित् कालभेदः क्वचिद्देशभेदः दर्शपूर्णमासयोः कालभेदः पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेति । तथा चातुर्मास्यस्य पर्वणां वसन्ते वैश्वदेवेन यजेत, वर्षासु वरुणप्रघासैर्यजेत, हेमन्ते साकमेधैर्यजेतेति । राजसूये देशभेदः वार्हस्पत्यश्चरुर्ब्रह्मणो गृहे ऐन्द्रमेकादशकपालो राज्ञो गृहे आदित्यश्चरुर्महिष्या गृह इति कालभेदाद्देशभेदाच्च गृह्यते विशेषः पौर्णमासी येषामङ्गानां कालस्तानि पौर्णमास्या उपकुर्वन्ति नामावास्याया वैगुण्यात् तस्माद्भेदः ।

## नैकदेशत्वात् पशुवत् ॥ १४ ॥ (आ० नि० )

नैनदेवं भेद इति कुतः ? एकदेशत्वात् यत्र फलसम्बन्धस्तत्राङ्गानां चोदना । यत्कारणं फलं साधयतां प्रधानानामङ्गान्युपकारे वर्त्तन्ते, समुदायचोदनायाः फलसम्बन्धः दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति, राजसूयेन स्वाराज्यकामो यजेतेति चातुर्मास्यैः स्वर्गकामो यजेतेति नैकदेशचोदनायां पौर्णमास्यां पौर्णमास्या यजेत वसन्ते वैश्वदेवेन

यजेत, बार्हस्पत्यचरुं ब्रह्मणो गृह इति न चेत् तत्राङ्गानां प्राप्तिः कुतो भेदेन प्रसङ्गः समुदायस्य तु फलेकत्वादेकः प्रयोगः। तस्मात् यस्मिन् कस्मिंश्चिदवयवे क्रियमाणान्यङ्गानि समुदायेन सम्बध्यन्ते समुदायस्यावयवैरव्यतिरेकात् पशुवत् यथा पशौ भिन्नकालेष्वप्येकदेशेषु वपया प्रातःसवने चरति पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवन इति नाङ्गानामावृत्तिर्भवति तद्वत्।

## अपि वा कर्म पृथक्त्वात्तेषां तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ १५ ॥ (सि०)

अपि वा न तन्त्रमङ्गानि स्युः कुतः कर्मपृथक्त्वात्। तेषां च तन्त्रविधानात्। कर्माणि तावदेतानि भिन्नानि अन्यः पौर्णमासीसमुदायोऽन्य आमावास्यः। एवं सर्वत्र। तेषां च देशकालभेदः पौर्णमास्यां पौर्णमास्या यजेतेत्येवमादिः। साङ्गानां च तेषां तत्र देशकालविधिः ननु नैवात्राङ्गानि प्राप्यन्त इत्युक्तं कुतस्तेषां देशकालविधिः। उक्तमेतत् प्रयोगे पुनः श्रुत्या समादयो विधीयते इति। तत्र सर्वे दर्शपूर्णमासाभ्यां यजेतेति समुदायप्रयोगे पुनः श्रुतिः। पौर्णमास्यां पौर्णमास्या यजेतेत्येकदेशे पुनः श्रुतिः एवं सति पौर्णमासप्रयोगे कालो विहितः अविभक्तसाङ्गानां प्रधानेन प्रयोगः। तस्मात् पौर्णमास्याङ्गानां पौर्णमासीकालः अमावास्याङ्गानाममावास्याकालः तत्र गृह्यते विशेषग्रहणाद्भेदः।

तथा चान्यार्थदर्शनम् ॥ १६ ॥ (हे०)

चतुर्दश पौर्णमास्यामाहुतयो ह्रूयन्ते त्रयोदशामावास्यायामिति तन्त्रभावेन पौर्णमास्यां चतुर्दशाहुतयः स्युरामावास्यायां त्रयोदश भेदे तूभयत्रोभयं भवति तस्माद्भेदः।

तथा तदवयवेषु स्यात् ॥ १७ ॥ (यु०)

यदा चैष न्यायस्तदावयवेष्वप्यवयवेषु देशकालभेदात् तन्त्रभेदः तत्र चातुर्मास्यावयवयोरनीकवत् सान्तपनीययोर्बर्हिषः साधारण्यवचनमर्थवद्भवति यदानीकवतोबर्हिस्तत् सान्तपनीयस्येति इतरथा सिद्धत्वात् तदनर्थकं स्यात् तस्मादपि भेदः।

पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥ १८ ॥ (पू० आ० नि०)

यत्तूक्तं पशुवदिति तत्र ब्रूमः,। पशौ युक्ता सकृदङ्गानां क्रिया। तत्र ह्येकमेव तन्त्रं केवलं, प्रचारस्य वचनाद्विप्रकर्षः। तदैक्यन्तु चोदनैकत्वात्। एका तत्र चोदना आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति। कर्मचोदनायां ह्यङ्गानां ग्रहणं च प्रचारचोदनायां तदेव हि प्रधानं विप्रकृष्टकालेन प्रचारद्वयेन निर्वर्त्यते। तदर्थानि च कृतान्यङ्गानि। तेषां पुनः क्रियायां हेतुर्नास्ति तस्माद्विषम उपन्यासः।

---

आग्नावैष्णवाद्यङ्गानां भेदेनानुष्ठानाधिकरणम्।

तथा स्यादध्वरकल्पेष्टौ विशेषस्यैककालत्वात्॥ १९॥ (पू०)

इदं श्रूयते आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्, सारस्वतं चरुं बार्हस्पत्यं चरुमाग्नावैष्णवमेकादशकपालं माध्यन्दिने, सारस्वतं चरुं बार्हस्पत्यं चरुमाग्नावैष्णवं द्वादशकपालमपराह्णे सारस्वतं चरुं बार्हस्पत्यं चरुं, यस्य भ्रातृव्यः सोमेन यजेतेति। तत्र चिन्त्यते किं त्रिषु कालेषु युज्यमानानामेतेषां कर्मसमुदायानां तन्त्रेणाङ्गानां क्रिया उत भेदेनेति। किं प्राप्तम्। तथा स्यादध्वर कल्पायां यथा पशौ तन्त्रमङ्गानां प्रयोगः। कुतः?। विशेषस्यैककालत्वात्। अङ्गविशेषः कश्चिदेषां भिन्न-कालानां समुदायानाम् एककालः श्रूयते "पुरावाचः प्रव-दितो निर्वपेदिति" कथं पुनर्ज्ञायते सर्वेषां निर्वापाणामयं कालविधिरिति। सर्वेषां ह्येषामेकफलत्वादेकप्रकरणं सैषाध्वरकल्पेष्टिः यज्ञमेवैतया प्राप्नोतीति चैकशब्देन युगपत् फलं प्रति विधानात्। तस्मात् नैककाले क्रियमाण उत्तरकालयोः समुदाययोर्निर्वापः प्रतिकृष्येत। स प्रति-कृष्यमाणस्ततः प्राग्भाविनामङ्गानां प्रतिकर्षे वर्त्तेत तदा दिवाभिसम्बन्धात् तदन्तमपकर्षे स्यादिति तानि प्रतिकृ-ष्टानि सर्वेषां तन्त्रं भवन्ति। तेषु तन्त्रेषु उत्तरेषामपि तन्त्रभावोयुक्तः कुतः? यदि सर्वाणि तन्त्रं क्रियन्ते नास्ति

तन्त्रभावे क्रमभेदः । यथानुक्रमभेदः ततः पूर्वस्य सत्रं गुण-काण्डमपवृज्योत्तरस्योपक्रमेण भवितव्यम्। तथा निर्वापा-न्तेषु प्रतिकक्ष्यमाणेषु क्रमभेदो भवति । न तत्पूर्वस्य प्रो-क्षणादीनि क्रियन्ते यावदुत्तरस्य निर्वापान्तानि न कृतानि अपि च सहोपक्रमे युगपच्चिकीर्षा तस्यां च सत्यां यद्यदा-पतति तत्तदगृह्यमाणविशेषत्वात् साधारणं भवति ।

## इष्टिरिति चैकवच्छ्रुतिः ॥ २० ॥ (पू० यु०)

सैषाध्वरकल्पेष्टिरिति चैकवत् श्रवणम् । तत्र ता-वदेकैवेष्टिः बह्व एते यागाः । यदि तु सह क्रियन्ते ततः सैकसमाप्ति यतीभावः पर्य्यवसितो भवतीति एकवदुप-चार उपपद्यते । तस्मात्तन्त्रम् ।

नैतदेवं तन्त्रमङ्गानीति । किन्तर्हि भेदेन कुतः ? ।

## अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ २१ ॥ (सि०)

कर्म्माणि तावदेतान्याग्नावैष्णवादीनि पृथग्भूतानि तेषां तन्त्रविधानं नानाकालेषु प्रातर्मध्यन्दिनेऽपराह्ण इति । तत्र तत्रैषां साङ्गानामुपदेशः स्यादतः कालभेदा-दङ्गानां गृह्यते विशेषः । तस्माद्भेदः । यत्तु विशेषस्यैकका-लत्वादिति तत्र ब्रूमः ।

## प्रथमस्य वा कालवचनम् ॥ २२ ॥ (पू० आ०)

प्रथमस्य कर्म्मणो यो निर्वापस्तस्यैतत्कालवचनम् ।

पुरा वाचः प्रवदितो निर्वपेदिति। ननु प्रकरणात् सर्वेषां प्राप्नोति। न प्रकरणं धर्माणां विशेषकम्। किन्तर्हि विनियोजकम्। इदमत्र भवतीत्येतत् प्रकरणस्य सामर्थ्यं नास्येदं तस्येदमिति। त्रयाणां च निर्वापाणां क्रमप्राप्तस्य पूर्वस्यैव विज्ञायते। तस्मान्नास्ति विशेषस्यैककालत्वम्। कर्मणां च तत्र भेदः कालभेदादिति।

## फलैकत्वादिष्टिशब्दो यथान्यत्र ॥ २३ ॥
## (पू॰ आ॰ नि॰)

यस्त्विष्टिरिति भिन्नानामपि कर्मणाम् एकफलानां फलस्यैकत्वमपेक्ष्यैकवचनं भवति फलान्तरत्वादीहायाः। यथा सर्वपृष्ठेष्टिस्तृगारेष्टिः सुमनानामिष्टिरिति।

---

वसाहोमभेदेनानुष्ठानाधिकरणम्।

## वसाहोमस्तन्त्रम् एकदेवतेषु स्यात् प्रदानस्यैककालत्वात् ॥ २४ ॥ (पू॰)

एकदेवताः पशव उदाहरणं समदश प्राजापत्यान् पशूनालभत इति अस्ति तु प्रकृतावग्नीषोमीयपशौ वसाहोमः कर्त्तव्यः। याज्याऽर्द्धर्चे वसां जुहोतीति स इह चोदकेन प्राप्यते तत्र चिन्त्यते किं भेदेन वसाहोमः कर्त्तव्यः अथ वा तन्त्रमिति किं प्राप्तं वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात्। वसाहोमः खल्वेकदेवतेषु

तन्त्रं स्यात् कुतः ? प्रधानस्यैककालभावात् एककालत्वेषां प्रदानं वैश्वदेवीं कृत्वा प्रचरन्तीति देवता चैका प्रजापतिः अतस्त्वेषामेकप्रदानत्वम्। प्रदानस्यैकत्वात् एकः सर्वेषां साधारणी याज्यानुवाक्यान्तः तत्र क्रियमाणस्य होमस्येदमर्थं प्रति न गृह्यते विशेषः। तस्मात्तन्त्रम्।

**कालभेदात्त्वावृत्तिर्देवताभेदे ॥ २५ ॥ (सि०)**

देवताभेद एकादशिनेषु भिन्नप्रदानेषु भिन्ना याज्यानुवाक्याः। तेषु गृह्यते विशेषो यस्य प्रदानस्य याज्यानुवाक्यान्तः कृतः स तदर्थ इति। तस्मात् तन्त्रभेदः।

---

यूपाहुतौ तन्त्राधिकरणम्।

**अन्ते यूपाहुतिस्तद्वत् ॥ २६ ॥ (पू०)**

ज्योतिष्टोमे यूपैकादशिनी एकादश यूपान् छिनत्तीत्याम्नाता। अस्ति तु प्रकृतावग्नीषोमीये पशौ यूपाहुतिः सा किं भेदेन कर्त्तव्या उत तन्त्रमिति किं प्राप्तम् अन्ते यूपाहुतिः तद्वत् यद्वन्नानादेवतेषु वसाहोमः भेदेन तद्वदियमपि भेदेन कर्त्तव्येत्यर्थः। कुतः ?। यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति श्रूयते। बहूनां च यूपानां भिन्नान्यन्तिकानि यस्यैव यूपस्यान्तिके न हूयेत तस्यैव तेन गुणेन वर्जनं स्यात्। तस्माद्भेदेन कार्य्यम्।

**इतरप्रतिषेधो वा ॥ २७ ॥ ( सि० )**

अथ वा नैव भेदेन कर्त्तव्येति। किन्तर्हिं तन्त्रम्। कस्मात्। इतरप्रतिषेधोऽयं आहवनीयप्रतिषेधो नान्तिकविधिः। कथं ज्ञायते?। आहवनीये जुहोतीत्युत्सर्गात् सर्वहोमेष्वाहवनीयः प्राप्तः तत्राग्निं मथित्वेतिवाच्यं तदपि मन्थनं प्राग्वंशे कर्मणः प्रवृत्तत्वात् प्राग्वंशे प्राप्तं तत्रेदमपि वक्तव्यम्। यूपस्यान्तिकेऽग्निं मथित्वेति उभयस्मिंश्चापि विधीयमाने वाक्यभेदो मन्थनस्य स्वार्थवद्भावात्। तस्मादन्यतरदविवक्षितं मन्थनमन्तिकं वा। तत्र च मन्थनं विवक्षितमविवक्षितमन्तिकमिति ब्रूमः। कुतः?। मन्थनविधिपरत्वाद्वाक्यस्य। एवं ह्याह यूपमाच्छेत्स्यता होतव्यं न हि दीक्षितस्याग्नौ जुहोतीति दीक्षितस्याग्नौ होमे दोषं मन्यत इति तत्परिहारार्थं कल्पान्तरमुक्तं वैष्णवीमनूच्याच्छेत्स्यत इति। तथाप्यहोमे दोषमिव मन्यमानः पुनः पुनराह होतव्यमिति पुरुषस्यैव जुहोत्यायतन इति। तदुभयमपि तत्र न शक्यमिति प्रतिषिध्य तृतीयं कल्पमाह यूपस्यैवान्तिकेऽग्निं मथित्वा तथा होतव्यं तदुभयमपि शक्यं जुहोत्यथ न दीक्षितस्याग्नौ जुहोतीति। तत्र यदि यूपस्यान्तिके जुहोतीत्येतद्विवक्षितं न मन्थनं तत्र आहवनीयमेव यूपस्यान्तिके नीत्वा होमः प्राप्नोति आहवनीये जुहोतीति नियमात् तत्र न दीक्षितस्याग्नौ जुहोतीत्येतन्न सम्बध्यते अथ तु अग्निं मथित्वेत्येतद्विधीयते तत आहवनीयप्रतिषेधो भवति। अन्योऽयमाहवनीयाद् यो मथ्यते। तत्रैतत् समर्थितं भवति जुहोति च न चाहवनीये जुहोतीति।

तस्मात् मन्थनं विधीयते नान्तिकम्। अनुवादमात्रमन्तिकस्य, कुतः प्राप्तेऽनुवादः?। सौकर्य्यात् सह्याग्निना यूपान्वेषणं दुष्करणं यूपान्तिके त्वग्निं मथित्वा सुकरो होमः। न्यायप्राप्तस्यानुवादः। एवं सति यद्यनन्तिके जुहोति न दोषः। अथ कस्मान्मन्थनमात्रं कृत्वा आहवनीये एव न हूयेत अदृष्टं कल्पितं भवति। तस्मात् तन्त्रं यूपाहुतिः।

अशास्त्रवत्त्वाच्च देशानाम् ॥ २८ ॥ (यु०)

न चान्तिकदेशाः शक्याः शासितुं आपेक्षिकत्वादन्तिकस्य। अथ परमान्तिकं शिष्येत तदा यूप उपदह्येत। तच्च प्रतिषिद्धम्। न च शक्यं परमान्तिकेऽग्निमन्थनं कर्त्तुम्। तस्मादप्यविवक्षितत्वमन्तिकस्य।

——

अवभृथाधिकरणम्।

अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥ २९ ॥ (पू०)

अस्ति ज्योतिष्टोमेऽवभृथः तस्मिंश्च श्रूयते। अप्स्ववभृथेन चरन्तीति तत्र विचार्य्यते। किं प्रधानमात्रमप्सु कर्त्तव्यमथ चाङ्गान्यपीति किं प्राप्तम्? अवभृथे प्रधानेऽग्निविकारः प्रधानमात्रमप्सु कर्त्तव्यं कुतः न हि तद्धेतुरग्निसंयोगः न ह्यङ्गानां प्रधानहेतुकोऽग्निना संयोगः यदाह-

वनीये जुहोतीति। होममात्रेऽग्निर्विहितः स यथा प्रधाने तथाङ्गेषु आपस्तु प्रधाने केवले विहिताः अप्सु व-भृथेन चरन्तीति। अवभृथशब्दो हि वरुणदेवतस्यैककपाल-द्रव्यस्य यागस्य वाचकः। तदुत्पत्तिवाक्ये श्रूतत्वाद्वारुणे-नैककपालेनावभृथं यान्तीति। न चात्र गमनं विधीयते। अथ गृहीतं तदस्तु, प्रचारवचनात्। न चावभृथो नाम कश्चिद्देशोऽस्ति यं वारुणेनैककपालेन गच्छेयुः। न च वारुण एककपालोऽस्ति येन गमनमुच्येत तस्माद्दैककपालस्य देवतासम्बन्धकरणमेवात्रोच्यते। स च यागस्तद्वचनोऽव-भृथशब्दस्तस्मिन्नापो विहिताः। तासामङ्गेषु कः प्रसङ्गः द्रव्यदेवतवद्यथा द्रव्यमेककपालो वरुणश्च देवता प्रधाने विहितत्वान्नाङ्गेषु भवतः एवमापोऽपि।

## साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ (सि०)

साङ्गो वावभृथोऽप्सु प्रचरेत। कुतः। प्रयोगवचनैक-त्वात्। नात्रापोऽवभृथे श्रूयन्ते। किन्तर्हि प्रयोगे। न ह्येतद्वचनमप्सु अवभृथ इति। कथन्तर्हि अप्सु अवभृथेनेति। द्वे अपि पदे कारकवचने। न च विशेषणविशेष्यता। उभयोश्चरन्तीति क्रियया सम्बन्धो न मिथश्चरन्तीति प्रयोग उच्यते तस्मात् प्रयोगाङ्गमापः। अविभक्ताश्चाङ्गप्रधा-नानां प्रयोग इत्युक्तमङ्गानि तु विधानत्वात् प्रधानेनोप-दिश्येरन् इत्यत्र तस्मात् साङ्गोऽवभृथोऽप्सु प्रदिष्टो न केवलः अतोऽङ्गान्यपि तत्रैव वर्त्तव्यानि।

लिङ्गदर्शनाच्च ॥ ३१ ॥ (हे०)

लिङ्गं चैतमर्थं दर्शयति अप, त्वणं प्रास्याघारयतीति यद्यङ्गानामग्नौ वृत्तिः स्यादुभयं विधीयेत । अप्सु घारयति त्वणं प्रास्यतीति च तद्वाक्यभेददोषः स्यात् । अथ यथोक्तो-न्यायस्तथाप्स्वित्यनूद्य त्वणप्रासनं केवलं विधीयत इति नास्ति दोषः । अथ यदुपवर्णितं द्रव्यदेवतवदिति तत्र ब्रूमः ।

शब्दविभागाच्च देवता नयः ॥३२॥ (पू०यु०नि०)

विभक्तशब्दः प्रधानस्यावभृथ इति वाचकः अङ्गाना-माघारादयः शब्दाः । अवभृथशब्दसंयुक्तं च द्रव्यदेवतं वा-रुणेनैककपालेनावभृथं यन्तीति । तस्मान्न तदङ्गेषु भवति आपस्तु प्रयोगाङ्गमित्येवमपदिष्टो हेतुः । अतोऽनुपवर्णन-मेतत् ।

वरुणप्रघासादिषु विहाराधिकरणम् ।

वरुणप्रघासेषु विहारपृथक्त्वमाम्नातं पृथगग्नी प्रण-यतः पृथग्वेदी कुरुत इति । तत्र श्रूयते अष्टावध्वर्यु-रुत्तरे विहारे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्निति । इह विचार्यते । किं भेदेन दक्षिण-विहारेऽङ्गानि कर्त्तव्यानि अथ वा यान्येवोत्तरे कृतानि तान्येवोत्तरत्राप्युपकुर्वन्तीति किं प्राप्तम् ? ।

दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं क्रियते ॥ ३३ ॥ (पू०)

भेदेनाङ्गानि कर्त्तव्यानि कुतः? देशभेदात्। देशो हि भिद्यते दक्षिण उत्तर इति। यान्युत्तरे विहारे प्रधानानि तेषां तद्देशान्येवाङ्गान्युपकुर्वन्त्यङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वमिति नान्यदेशाया: मारुत्याः। तस्मात् तदर्थं दक्षिणे विहारे भेदेन कर्त्तव्यानीति।

## अचोदनेति चेत्॥ ३४॥ (आ०)

एवं चेत् पश्यसि देशभेदादङ्गानां पृथक्क्रियेति नैतद् युक्तम्। यत् कारणमचोदनात्र मारुत्याः। यत्र यागः फलं प्रति चोद्यते तत्राङ्गानि गृह्णाति। न चेह मारुत्याः फलं प्रति चोदना। क्व तर्हि चातुर्मास्यैः स्वर्गकामो यजेतेति। नचेदिह कर्म चोद्यते अङ्गानां प्राप्तिरेव नास्ति कुतो भेदस्तन्त्रता वा।

## स्यात् पौर्णमासीवत्॥ ३५॥ (आ० नि०)

स्यादङ्गानां प्राप्तिः पौर्णमासीवत् यथा पौर्णमास्यां यजेतेति न तावत्कर्मफलं चोद्यते। अन्यत्रैव तच्चोदितं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। अथ वा साङ्गप्रधानं पौर्णमास्यां क्रियत इत्येवमिहापि भविष्यति।

## प्रयोगचोदनेति चेत्॥ ३६॥ (आ०)

अथोच्येत प्रयोगस्तत्र पौर्णमास्यां चोद्यते यजेतेत्या-

ख्यातेन। प्रयोगश्चाङ्गप्रधानानां विवक्षितः। प्रयोगाङ्गं च कालः तस्मात् तत्र साङ्गं प्रधानं पौर्णमास्यां क्रियत इति तत्र ब्रूमः। तथेह।

**इहापि मारुत्याः प्रयोगश्चोद्यते ॥३७॥ (आ० नि०)**

आसादयतीत्यनेनाऽऽख्यातेन। यथा च कालः प्रयोगाङ्गमेवं देशोऽपि तस्मात् मारुत्यपि साङ्गा दक्षिणविहारे कर्त्तव्या। ननु न आसादयतिशब्देन याग उच्यते। कथं तस्य प्रयोगं वक्ष्यति। आह यागार्थमेतदासादनं यथा प्रकृतौ। तथा दृष्टार्थं भवति। इतरथाऽदृष्टोऽर्थः कल्पयितव्यः स्यात्। यागार्थं चेत् तत्र यागोऽवश्यं कार्यः सैषा लक्षणया यागचोदना भवति यथा सौर्य्यं चरुं निर्वपेत् सौम्यं बभ्रुमालभेतेति। तस्मादिहापि मारुत्याः प्रयोगश्चोद्यते। तथा च प्रधानानामङ्गानां भेदेन क्रिया।

**आसादनमिति चेत् ॥ ३८ ॥ (आ०)**

आह नासादयतिशब्देन याग उच्यते किन्तर्हि आसादनम्। ननु लक्षणया यागं वक्ष्यति। न श्रुतिमुत्सृज्य लक्षणाश्रयणीया। आसादनस्य दृष्टार्थत्वे नाश्रयिष्यते। आश्रीयेत यद्यासादनं दृष्टार्थं सम्भवति यदि दक्षिणेऽग्नौ मारुत्या होमः सिद्धः स्यात्तत्समीपे नयनं दृष्टार्थं भवेत् स तु असिद्धः। नादृष्टार्थता युज्यते श्रुत्यर्थं एव ग्राह्यः। तस्मादासादनमासादयतिशब्देनोच्यते न यागः।

**नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥ (आ० नि०)**

नैतददृष्टार्थमासादनम्। कुतः?। उत्तरेणैकवाक्यत्वात्। अदृष्टार्थोत्तरे विहारे हवींषि आसादयति अनेनोत्तरविहारसम्बन्धेन पदसञ्चयेन मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्नित्येतस्मिन्नेकवाक्यत्वादेव ज्ञायते यथा नासादनमदृष्टार्थमिदम्। तत् कथं कृत्वा?। आहवनीयद्वये अव्यवस्थया हविषां होमः प्राप्तस्तदनुविधानादासादनमपि तथैव प्राप्तम्। तत्र व्यवस्थामात्रमनेन क्रियते। यथा प्राप्तस्य च वसाहोमाय च प्राप्तं नादृष्टाय। तस्माद्धोमार्थमासादनम्। अपर आह एकस्मिन् वाक्य एव एवायमासादयतिशब्द उभयोर्विहारयोरासादनमाह। उत्तरस्मिंश्च व्यक्तन्तद्धोमार्थं तस्मिंश्चोच्चारणे दक्षिणे होमार्थं न भविष्यतीति एतन्नोपपद्यते। तस्मादुभयत्र होमार्थम्। अथोच्येतासादनमेवेदं विधीयते। यतो दृष्टार्थं भवति तत्र दृष्टार्थं यत्र न सम्भवति तत्रादृष्टार्थमिति। तन्न विध्यनुवादयोर्यौगपद्यसङ्गात्। यत्र दृष्टार्थं तत्रानूद्यते प्रकृतितः प्राप्तत्वात्। यत्रादृष्टार्थं तत्र विधीयते। तदुभयं युगपन्न सम्भवति। तस्मादयुक्तमेतत्। अथ होमार्थत्वे सति कस्मात् यागचोदना कल्प्यते नासादनमात्रमेवेत्याह होमश्चान्यत्रेति। नैवम् आसादनं हि होमार्थं भवति नान्यत्रासाद्यमानमन्यत्र होमार्थं भविष्यति। अपि च।

अवाच्यत्वात् ॥ ४० ॥ (हे०)

न च होमार्थमासादनं वक्तव्यं सति होमे प्रकृतित एव प्राप्नोति यागस्तु वक्तव्यः। स च सति होमे गम्यते

लक्षणयानेन वक्तुं तस्मादन्वाध्यासादयतिशब्देन पौर्ण-
मासीवत् यागस्य प्रयोग उच्यते तथा च तन्त्रभेदः।

आम्नायवचनं तद्वत् ॥ ४१ ॥ (यु०)

वैदिकवचनं तद्वद् युक्तं भविष्यति यद्वन्यायोपदिष्टः। यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोतीति। तथा यस्मिन्नेव होमस्तस्मिन् ब्रूते देवतायजनमिति दक्षिणेऽपि विहारे देवतायागं दर्शयति तद् यागार्थं आसादयति-शब्दो युज्यते तस्मादप्येवम्।

---

कर्त्तृतन्त्रताधिकरणम्।

कर्त्तृभेदस्तथेति चेत् ॥ ४२ ॥ (पू०)

तत्रैव चिन्त्यते किं कर्त्तारो भेदेन। उत तन्त्र-मिति। किं प्राप्तम्। कर्त्तृभेदस्तथा यथाङ्गभेदः। अष्टानां हविषां साङ्गानां कर्त्तृभिरुत्तरे विहारे प्रचरित-व्यमितरैर्दक्षिणे। एवं यथादेशं साङ्गानि प्रधानानि कृतानि भवन्ति। तेनोत्तरवैहारिकाः कर्त्तारो गृह्यमाण-विशेषा दक्षिणे विहारे नोपकुर्वन्ति तस्मात् कर्त्रन्त-रैर्भवितव्यम्।

न समवायात् ॥ ४३ ॥ (सि०)

नैतदेवमङ्गवत्कर्त्तृभेद इति। किन्तर्हि तन्त्रेण कर्त्तारः स्युः कुतः?। समवायात्। वचनेन हि कर्त्तारः समवय-

न्यत्र। चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति। समुदायसम्बन्धेऽपि सत्यथवा एककर्तृभिः सम्बध्यन्ते वरुणप्रघासानाञ्च तदवयवत्वात् पञ्चभिरभिसम्बन्धोऽभ्युपगम्यते एकदायं वरुणप्रघासानां प्रयोगः एककालत्वात् समानोपक्रमोपसंहाराच्च तत् यावद्वचनं तावदेवाविभेदेन कर्त्तव्यं नान्यदपि। न च कर्तॄणां भेद उक्तः। तस्मात् तन्त्रेण भवन्तीति। तत्रैतत् स्यात् प्रधानभेद उक्तोऽप्यङ्गानां भेदोऽभ्युपगम्यते कुतः?। अङ्गानां प्रधानगामित्वात् यथैव हि प्रयाजादीनां साकल्या भेदाङ्गेनैव क्रिया एवमङ्गभूतत्वात् कर्तॄणां प्रयाजादिवत्कस्मान्न भेदोऽध्यवसायत इति। तदोच्यते। अङ्गत्वाविशेषेऽपि सति अन्यथाजातीयोपकारोऽन्यजातीयोऽन्यस्य प्रयाजादीनि उत दृष्टेनोपकारसम्बन्धेनोपकुर्वन्ति। बर्हिरादीनि यागद्रव्यधारणेन अपराण्यधिकरणसंस्कारद्वारेण तानि यागदेशाधिकरणभेदाद्भिद्यन्ते कर्त्तारस्तु क्रियानिर्वृत्त्योपकुर्वन्ति तेन ते देशभेदेऽपि सति प्राकृतोपकारे प्रत्यभिज्ञानसन्त्वेन क्रियानिर्वृत्तिं शक्नुवन्ति कर्त्तुमिति। न भिद्यन्ते कः पुनः प्राकृत उपकार? इति। होता तावद्यतो गार्हपत्यस्य पश्चादाहवनीयाद्वावस्थितो याज्यानुवाक्यावचनेन संबोधयन् यागस्य कर्त्तेत्युच्यते शक्नोति तद्देशावस्थित एव सामीप्यात् तन्त्रेण क्रमप्राप्तं यागं कुर्वाणमध्वर्युवत् प्रतिप्रस्थातारमपि सम्बोधयितुमित्यतो न भिद्यते। तथाग्नीध्रः समानत्वादुत्करदेशस्य, तत्रावस्थित एव प्रत्याश्रावणेनोभौ कर्त्तारावनुग्रहीतुम्। अतोऽसावपि न भिद्यते। तथा ब्रह्मा दक्षिणतोऽवस्थित उभयोराहव-

नीययोः समानत्वाद्देशस्य य एवोत्तरस्य दक्षिणः स एव दक्षिणस्य दक्षिण इति तत्रावस्थितः ज्ञाताज्ञातप्रत्यवेक्षणे-नानुज्ञावचनेन च शक्तौत्युभावपि अनुग्रहीतुम्। अतस्त-स्याप्यभेदः। अध्वर्युप्रतिप्रस्थात्रोस्तु वचनाद्भेद उक्त एवे-त्यदोषः तस्मान्न कर्त्रन्तरैर्भवितव्यम्।

## लिङ्गदर्शनाच्च ॥ ४४ ॥ (हे०)

लिङ्गं चैतमर्थं दर्शयति। प्रवयसमृषभं दक्षिणां ददातीति दक्षिणैक्यमाह। तदेककर्तृत्वे नोपपद्यते। अन्यत्र दक्षिणाभावान्न याजयेयुः। नन्वन्वाहार्य्येण याजयि-ष्यन्ति। न ज्ञायते कान्वाहार्यः कर्षभ इति विशेषाग्रहणा-दुभयत्रर्षभः। उपादेयत्वेन चोदितस्यैकत्वं विवक्षितम् तस्मात् दक्षिणैक्यम्। तथा च तन्त्वं कर्त्तारः।

## वेदिसंयोगादिति चेत् ॥ ४५ ॥ (आ०)

अथोच्येत वेदिसंयोगो हेतुः श्रूयते अन्तर्वेद्यन्यः पादो-होतुर्भवति बहिर्वेद्यन्य इति एकस्य होतुःपाद उभय-त्रोपकर्तुमसमर्थस्तस्मात् कर्तृभेदः।

## न देशमात्रत्वात् ॥ ४६ ॥ (आ०नि०)

नैतदेवं कस्मात् देशमात्रत्वात् नात्र हेतुः पादो वेदे-रुपकारार्थत्वे नोपदिश्यते किन्तर्हि देशमात्रमेतद्विधीयते तस्मिन्देशे होता स्थातव्यं यत्रास्यैकः पादोऽन्तर्वेदि भवति बहिर्वेद्यन्य इति। कुतः ?।

## एकवाक्यत्वात् ॥ ४७ ॥ (हे०)

एकमिदं वाक्यं युक्तं सन्निध्यनुग्रहात् एकार्थत्वाच्च यदि च होतुः पादोविधयज्ञत्वे नोपदिश्येत एकस्मिन्नन्तर्वेदि-निहिते कृतः श्रुत्यर्थ इति द्वितीयस्यानियमः स्यात्। सोऽपि विधातव्यो बहिर्वेद्यन्य इति। कथं पुनरेकोऽन्तर्वेदी-त्युक्ते द्वितीयोऽपि तत्र प्रसज्येत अप्रतिषिद्धत्वात्। यदि द्वयोरन्तर्वेद्यन्यतः प्राप्तिः स्यात्तत एकस्य वचनं द्वितीय-निवृत्त्यर्थं न चास्ति प्राप्तिः तस्मादस्ति प्रसङ्गः तथा च वाक्यभेदः। अथ तु देशविशेषविधानार्थमेतत्ततस्तद्दे-ताभ्यामुभाभ्यां सम्भूय क्रियत इत्येकार्थत्वादेकवाक्यत्व-मुपपन्नं तस्मान्न होतृपादो वेदेरुपकारकः नोभयत्र विधेयः।

---

अपराग्नितन्त्रताभावाधिकरणम्।

## एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ ४८ ॥ (पू०)

इदमपरं तत्रैव चिन्त्यते किमापराग्निका होमास्तन्त्रं कार्य्या उत भेदेनेति। किं प्राप्तं तन्त्रमिति कुतः एका-ग्नित्वात् पौर्वाग्निकानामग्निभेदात् भेद उक्तः इह स हेतु-र्नास्ति एकाग्नित्वादेतेषां तस्मादेते तन्त्रं भवेयुः।

## नाना वा कर्तृभेदात् ॥ ४९ ॥ (सि०)

नाना भवेयुः। कुतः कर्तृभेदात्?। मातृत्वा यान्य-

ङ्गानि तानि प्रतिप्रस्थातुः कर्माणि इतराण्यध्वर्योः। तत्र-भावेऽन्यतरेषां कर्त्तृकृतं वैगुण्यं स्यात्। तस्माद्भेदः।

---

पर्य्यग्निकृतोत्सर्गाधिकरणम्।

**पर्य्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः। श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात्॥ ५०॥ (पू०)**

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते तान् पर्य्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्ना लभन्त इति तत्र विचार्य्यते तान् पर्य्यग्निकृतानुत्सृजन्तीति किमयं कर्मशेषप्रतिषेधो ब्रह्मसाम्ना लभत इति कर्मान्तरचोदना। अथ वा पूर्वः पर्य्यग्निकरणात् परेषां संस्काराणां प्रतिषेधार्थः उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थ इति। किं प्राप्तम्? कर्मोत्सर्गः कर्मशेषप्रतिषेध इत्यर्थः श्रुतिसामान्यादारण्यवत् यथा पर्य्यग्निकृतानारण्यानुत्सृजन्तीत्ययं कर्मशेषप्रतिषेध इत्युक्तं शेषप्रतिषेधो वार्थाभावादिष्टान्तवदिति तया श्रुत्या तुल्येयं श्रुतिः। किमनयोस्तुल्यं तत्र कर्माणि चोदितानि वसन्ताय कपिञ्जलानालभेत इति। तेषु सर्वेषु प्राकृतगुणाः प्राप्ताः। तेषु प्राप्तेषु पर्य्यग्निकरणान्तं गुणकाण्डं पुनः श्रुतं पर्य्यग्निकृतानुत्सृजन्तीति निर्गुणं पुनर्वचनमितरपरिसंख्यायकं भवतीति कर्म-

शेषस्य प्रतिषेधकं विज्ञायते एवमिहापि प्राजापत्यानाल-भेतेति चोदितानां कर्मणां तथैव सर्वाङ्गेषु प्राप्तेषु इदं पर्य्यग्निकरणान्तस्य गुणकाण्डस्य निर्गुणं पुनर्वचनं कर्मशेषस्य निवर्त्तकं यस्मान्नैवं तस्मात् ब्रह्मसाम्ना लभत इति कर्मान्तरचोदना स्यात् पूर्वापेक्षया ब्रह्मसाम्ना लभते सप्त-दश प्राजापत्यानिति ।

## संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५१ ॥ ( सि० )

न वा कर्मशेषप्रतिषेध इति किं तर्हि संस्काराणां प्राप्तावसराणाम् तस्मादवसरात् प्रतिषिद्धब्रह्मसाम्नि प्रति प्रसवः । किं कारणम् ? ।

## वाक्यैकत्वे क्रतुसामान्यात् ॥ ५२ ॥ (हे०)

एकमिदं वाक्यं तान् पर्य्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्ना लभत इति । कथं ज्ञायते ? आलभत इति द्रव्यदेव-तस्याश्रवणात् । समाने च क्रतौ वाक्यैकत्वं भवति । तथा हि केवल आलम्भो वक्तव्यो द्रव्यदेवतस्योक्तत्वात् । अथ वाक्यभेदः स्यात् । ततः पूर्वेण कर्मशेषः प्रतिषिध्येत परेण कर्मान्तरं चोद्येत तत्र द्रव्यदेवतं वक्तव्यम् । यत्तु पूर्वोक्तं सम्भंत्स्यत इति । तत्तत्रैव कृतार्थत्वादिह न सम्बध्येत । तस्मादेकं वाक्यं नन्वेकस्मिन्नपि क्रतौ पूर्वेण संस्काराः प्रतिषिध्यन्ते परेण विधीयन्त इति । अर्थभेदाद्वाक्यभेद इति एवं भवति । न हि ब्रह्मसाम्ना लभत इत्युक्ते अर्थादेव

पर्य्यग्निकरणान्तः उत्सर्गः सिद्धः स न विधीयते तमनूद्या-
लम्भः केवल उत्क्रष्येतेति नास्ति क्रतुसामान्ये वाक्यभेदः ।

वपानां चानभिघारणस्य दर्शनात् ॥ ५३ ॥ (यु०)

सव्यावा एतर्हि वपा यदनभिघृता ब्रह्म वै ब्रह्मसाम यद्ब्रह्मसाम्नालभते तेनासव्यास्तेनाभिघृता इति यदि संस्कारप्रतिषेधः ततो जुह्वाः सवनीयप्रचारेण चिरत्वात् प्रयाजशेषो नास्ति तदभावादनभिघृतत्वं युज्यते। अथ कर्मप्रतिषेधस्ततो ब्रह्मसाम्नालम्भः कर्मान्तरे तत्र प्रयाजाः पुनरिज्यन्ते तेषां शेषोऽस्ति तेनाभिघारणं स्यात् अनभिघारणदर्शनं नोपपद्येत। तस्मादपि संस्कारप्रतिषेधः।

पञ्चशारदीयाधिकरणम्।

अस्ति पञ्चशारदीयोऽहीनोमारुतीयः पञ्चशारदीयो यः कामयेत बहु स्यामिति स एतेन यजेतेति तत्र श्रूयते वैशाख्याममावास्यायां सप्तदश मारुतीस्त्रिवत्सा अपचिता उपाकरोतीति सप्तदश पृश्नीरुक्ष्णस्तान् पर्य्यग्निकृतान् प्रोक्षितानितरा आलभन्ते प्रेतरानुत्सृजन्तीति ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोक्ष्णस्तान् पर्य्यग्निकृतानितरा आलभन्ते प्रेतरानुत्सृजन्तीति तत्र सैव चिन्ता किमुत्सर्गमुत्सर्गं आरण्यवत् कर्मशेषप्रतिषेधः। अथवा प्राजापत्यवत्संस्कारकर्मप्रतिषेधः तेषां च सुत्यासु प्रतिप्रसवः त्रींस्त्रीनुक्ष्ण एकैकस्मिन्नहन्यालभन्ते पञ्चासम इति। यदि कर्मशेषप्रतिषेधः प्रतिवर्षमन्ये उक्षाणः अथ संस्कारप्रतिषेधः ततस्त एव पञ्चवर्षाण्युपरुध्यन्ते पुनः

पुनः संक्लिश्यन्ते अन्यासु सुत्याखालभ्यन्त इति किं तत्र प्राप्तम् ?।

## पञ्चशारदीयास्तथेति चेत् ॥ ५४ ॥ (पू०)

इति चेत् पश्यसि कथं पञ्च शारदीया इति। पञ्च शारदीयास्तथा यथानन्तराः। प्राजापत्यासंस्कारप्रतिषेध इत्यर्थः। एवं प्रकृतप्रत्ययो भवति स एवमनुगृहीष्यते। इतरथा प्रकृतहानमप्रकृतप्रत्ययश्च भवेत्। एवञ्च तांश्चैवोच्चा इत्यपेक्षावचनं युक्तं भविष्यतीति। प्रायश्चित्तविधानं च यदि कूटः काणो वा भवेत् वार्हस्पत्यं चरुं निर्वपेत्। यदि प्रापतेद्वायव्यं चरुं, यद्यवसीदेन्नैर्ऋतं चरुमिति निरुद्धानामेतानि निमित्तान्युत्पद्येरन्। तस्मात् संस्कारप्रतिषेधः।

## न चोदनैकवाक्यत्वात् ॥ ५५ ॥ ( सि० )

नैतदेवं संस्कारप्रतिषेध इति। कथं तर्हि कर्मशेषप्रतिषेधः। कुतः ?। चोदनैकवाक्यत्वात्। सप्तदश मारुतीः पृश्नीरुपाकरोतीति कर्मचोदनैषा द्रव्यदेवतासम्बन्धात्। तयैकवाक्यमेतत्। सप्तदश पृश्नीरुत्सृज इति। कथं ज्ञायते ? सप्तदश पृश्नीरुत्सृज इत्येतावदपरिसमाप्तं तत्पूर्वापेक्षया परिसमाप्यते मारुतानालभन्त इति। एवं सत्यनुषङ्गोऽवश्यं भवति। तथा च समत्वाद्वाक्यभेदः किमुच्यते चोदनैकवाक्यत्वादिति। आह, यद्यसावङ्गशेषत्वेनापेक्ष्यते ततोऽनुषङ्गः। अथायं तस्य, तत एकवाक्यत्वम् इदं तस्य शेषत्वेना-

पेचिष्यामहे । एतच्चात्र युक्तं यदयं तस्य शेषः स्यात् नासावस्य, तच्छेषत्वे अपेचामात्रमितरत्नापेचयानुषक्तव्यं स्वार्थेन च सम्बध्येत। सप्तदश च पृश्नीर्मारुतीरुपाकरोति सप्तदश च पृश्नीरुत्सृजति इति चार्थो न वक्तव्यः प्रचयादेव गम्येत । तस्मादेकैकेनानेन वाक्येन चतुस्त्रिंशदेतानि कर्माणि चोद्यन्ते। तेषां सप्तदशानां पर्य्यग्निकरणान्त उत्सर्गः क्रियते सप्तदशसु यथाप्रकृति एवमुत्तरास्वपि चोदनासु । न चोत्सृष्टानां कर्मान्तर उपयोगो युज्यते अशक्तत्वात् ॥

## यातयामत्वाच्च ॥ ५६ ॥ (हे०)

तस्मादारण्यवत्कर्म्मशेषप्रतिषेधः अन्ये चान्ये चोद्यन्ते । पूर्वेषामुत्सृष्टानामभावात् प्रकृतहानम् । प्रायश्चित्तमप्युपाकृतानां प्रागुत्सर्गात् । अपेचावचनमपि तेषामभावात् अन्यांस्तादृशानेवापेक्ष्य भवेत् पृश्नीर्मारुतीश्च यथा तामेव यवागुं त्वरङ्क पिबतीति तान्येवौषधानि स एव तित्तिरिरिति ।

## संस्काराणां च तद्दर्शनात् ॥ ५७ ॥ (हे०)

संस्कारांश्च प्रतिवर्षं दर्शयति । तान् पर्य्यग्निकृतान् प्रोक्षितानितरा आलभन्ते प्रेतरानुत्सृजन्तीति । ननु वचनमेतद्भविष्यतीति न वाक्यभेदप्रसङ्गात् । पर्य्यग्निकरणं करोति पर्य्यग्निकृतांश्चोत्सृजन्तीति । अपि च वत्सतरीणामुस्राणां च युगपत्पर्य्यग्निकरणमुच्यते तद् वत्सतरीषु प्रकृतितः प्राप्तत्वादनूद्यते इतरेष्वप्राप्तत्वाद्विधीयते एतन्नोपपद्यते । सत्सु संस्कारेषु एतदुभयं न युज्यते । यागे च सत्त्वम् । तस्मादुभयत्र यागः ।

दशपेयाधिकरणम्।

राजसूयेऽभिषेचनीयदशपेयावेकाहौ। तत्र चिन्त्यते किं तयोस्तन्त्रप्रयोगः, अथ वा भेदेनेति। किं प्राप्तम्?।

**दशपेये क्रयप्रतिकर्षात् प्रतिकर्षः ततः प्राचान्तत्समानं तन्त्रं स्यात्॥ ५८॥ (पू०)**

समानं तन्त्रमनयोः। कुतः?। दशपेयस्य क्रयः प्रतिकृष्यते सह सोमं क्रीणात्यभिषेचनीयदशपेययोरिति। अभिषेचनीयस्य पूर्वकालीनत्वात् क्रयकाले दशपेयक्रयस्य प्रतिकर्षः। स प्रतिकृष्यमाणस्ततः प्राग्भाविनः पदार्थान् प्रतिकर्षति। तदादि वाभिसम्बन्धात्तदन्तमपकर्षः स्यादिति। अतस्तयोरेकाहयोस्तन्त्रं क्रमः। तन्त्रप्रक्रान्तयोः प्रवृत्तितस्तन्त्रमेव समाप्तिर्युक्ता। तस्मात् समानतन्त्रौ।

**समानवचनं तद्वत्॥ ५९॥ (पू० हे०)**

समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्चेति तन्त्रस्य समानत्वाद् यज्ञयोः समानत्वमाम्नाताभिन्नत्वात्।

**अप्रतिकर्षो वाऽर्थहेतुत्वात्॥ ६०॥ (सि०)**

सहत्वं विधीयते। न वा प्रतिकर्षः क्रयस्य कुतः?। अर्थहेतुत्वात्। द्वाविमौ क्रयौ एकोऽर्थहेतुकः अन्यः प्रत्यक्षतः। यत् प्राक् क्रतुप्रवृत्तेर्यज्ञसाधनोपार्जनकाले सोमविक्रयिणा सह संवादः सोमस्य परिक्रयणं मूल्यपरिच्छेदः

सोऽर्थादवश्यं करणीयः। तस्मिन्नकृते क्रतोरेव प्रवृत्तिर्न युक्ता। कुतः? क्रतुकाले कदाचित् सोमो न स्यात् विक्रेता वास्य नार्थेण वा दद्यात् तथा क्रतुरेव न संवर्त्तेत तस्यैतत् सहत्वमुच्यते। किं कारणम्? मुख्यत्वात् तत्रैव च क्रयो निर्वृत्तकल्पो मूल्यार्पणमात्रं परिशिष्टम्। यदन्यत् तत्र कल्प्यते क्रीणासीत्येवमादि तद्धर्ममात्रं परतन्त्रत्वादेव विक्रेतुः एवं च सति भिन्नकालयोर्यथाकालमेवाङ्गानि भविष्यन्ति। दृष्टश्च तस्मिन्नुपसंवादे क्रयार्थे क्रीणातेः प्रयोगो देवदत्तेन सहास्माभिर्धान्यं क्रीतं उपसंवृत्ता इति। अतस्तस्य वादः। स च बहिः क्रतोर्वर्त्तते। तस्मान्नास्ति प्रतिकर्षः। कालभेदाद् यथोक्त एव तन्त्रभेदः।

## पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ६१ ॥ (हे॰)

पूर्वस्मिंश्चाभिषेचनीये अवभृथदर्शनं भवति। कथं समानं वा एतद्यज्ञं विच्छिन्दन्ति यदभिषेचनीयस्यावभृथमभ्यवयन्तीति तदेवमवभृथदर्शनं पूर्वस्मिन्नुपपद्येत यदि भेदेन तन्त्रप्रवृत्तिरितरथा दशपेयान्तोऽवभृथः स्यात्। दीक्षाणां चोत्तरस्य दशपेयस्य च पृथग्दीक्षाणां दर्शनं तथाभिषेचनीयस्य दीक्षा वर्द्धयेयुर्यथा दशमेऽहनि दशपेयः सम्पद्यते सद्योदीक्षयति सद्यः सोमं क्रीणातीति। इतरथाभिषेचनीये य एव दशपेयस्यापि दीक्षाः स्युः तत्रैव दर्शनं नोपपद्यते। यत्तु समानवचनं तद्वत् इति तत्र ब्रूमः।

## समानः कालसामानात् ॥ ६२ ॥ (पू॰हे॰नि॰)

एकस्मिन् ऋतावेतौ सोमौ वर्त्तेते तत उत्तरे संवत्सरात् ऊर्द्ध्वमेतत् कालसामान्यम् अपेक्ष्य तत्सामान्यवचनं नान्यथोपपद्यत इति । तस्मात्तन्त्रभेदः ।

वरुणप्राघासेऽवभृथाधिकरणम् ।

वरुणप्राघासेषु श्रूयते वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्तीति तत्र विचार्य्यते । किं प्रदानं विप्रकर्षोऽयमुत कर्मान्तरचोदनेति । किं प्राप्तम् ? ।

## निष्कासस्याऽवभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात् ॥ ६३ ॥ (पू०)

प्रदानविप्रकर्षोऽयम् । कुतः तदेकदेशत्वात् ?। वरुणं प्रत्यामिक्षोत्पन्ना मारुत्यामिक्षा वारुण्यामिक्षेति । सा द्विधा प्रतीयमाना दृश्यते एकदेशोऽस्या आवापस्थाने, एकदेशः समिष्टयजुरूर्द्ध्वम् उभयत्रापि वरुणदेवता तेन प्रदानविप्रकर्षो विज्ञायते पशुवद् यथा सवनीयस्य पशोर्वपया प्रातःसवने चरन्ति, पुरोडाशेन मध्यन्दिने अङ्गै, स्तृतीयसवन इति । अवभृथशब्द इदानीं किमर्थः भक्त्यानुवादमात्रं देशसामान्यात् देवतासामान्याच्च । अथ धर्मातिदेशकोऽग्निहोत्रपदवदेव कस्मान्न भवति अशक्यत्वात् । अनेनैव प्रदानविप्रकर्षोऽनेनैव धर्मातिदेश इत्यशक्यमेकस्य वाक्यस्य । प्रदानविप्रकर्षं कृत्वा कृतार्थस्य धर्मानतिदेष्टुं न शक्तिरिति ।

## अपनयो वा प्रसिद्धे नाभिसंयोगात् ॥६४॥ (सि०)

न चायं प्रदानविप्रकर्षः किन्तर्हि अपनयो निष्का-सस्य पूर्वकर्मणः कर्मान्तरोपदेशः किं कारणं प्रसिद्धेना-भिसंयोगात्। प्रसिद्धेन नामधेयेनावभृथशब्देन संयो-गात् निष्कासेनावभृथमवयन्तीति। ननु भाक्तोऽयमनुवाद-मात्रमित्युक्तमनुवादः सन्नप्रवृत्तिकरोऽनर्थकः स्यादतिदेशस्तु अर्थवान्। ननु तत्रापि लक्षणा भवति। अस्तु लक्षणापि हि प्रवृत्तिविशेषकरत्वादर्थवती। यथाऽग्नौ तिष्ठत्यवटे तिष्ठति। अनेकार्थता तर्हि दोषो भवति। पूर्वकर्म-चोदनायामसौ दोषः। यथैतस्यैव रेवतीषु वारवन्तीयम-ग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति। कथं पुन-रनेन शक्यते अपूर्वं कर्म चोदयितुम्। उच्यते। यद्युच्येत निष्कासेन तुषैश्चावभृथमपोऽभ्यवयन्तीति श्रूयते न चाव-भृथः शक्यतेऽभ्यवैतुं तत्रैवं विज्ञायते निष्कासेन तुषैश्चाव-भृथं कर्तुमपोऽभ्यवयन्तीति यथा शाटकं कर्तुं सूत्राणि वयन्तीति लक्षणया यथा य एवं विद्वांसः सत्रमुपय-न्तीति।

## प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥ ६१ ॥

( आ० नि० )

अथान्यशेषत्वान्निष्कासस्यावभृथगमनं प्रतिपत्तिर्भव-त्विति। तन्न कुतः? कर्मसंयोगादर्थकर्मणा ह्यस्य गुणभूतस्य संयोगो विज्ञायते तृतीयासामर्थ्यात् प्रति-पत्तौ हि द्रव्यप्रधान्यात् द्वितीयया निरदेक्ष्यत। यथा

चात्वाले कृष्णविषाणां प्रास्यतीति। अथ वावभृथशब्देनास्य कर्म्मणा संयोगात् यदि च प्रतिपत्तिः स्यात्ततोऽवभृथशब्दोऽनर्थक एव भवेत्। अयमवभृथशब्दो धर्मानतिदिशेत्। न च प्रतिपत्तौ प्रधानकर्म्मणां धर्म्माः शक्या अतिदेष्टुम् वैषम्यात् तथा हि अवभृथेन प्रतिपादयतीत्युक्तं स्यात्। न वावभृथेन किञ्चित् प्रतिपादितं यदतिदिश्येत।

---

उदयनीयाधिकरणम्।

## उदयनीये च तद्वत्॥ ६६॥ (१पू०)

ज्योतिष्टोमे श्रूयते। प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपतीति। तत्राप्यवभृथवन्निष्कासो गुणतः स्यात्। तत्रापि ह्युदयनीयशब्देन प्रधानकर्म्मणा संयोगो भवति। प्रायणीयस्य निष्कास उदनीयमनुनिर्वपतीति। न च शक्यते उदयनीयो निर्वप्तुमतस्तथेहापि सम्बन्धो विधीयते निष्कासो नोदयनीयं कर्त्तुं हविष्यं निर्वपतीति। लक्षणया वा पूर्ववत्। अपि च द्वितीयासंयोगात् कर्म्मणः प्राधान्यं विज्ञायते निष्कासस्य सप्तमीयोगात् गुणभावः प्रतिपत्तौ तु कर्म्मगुणता स्यात् निष्कासप्रधानता। तत्र कर्म्म तृतीयासम्बद्धं भवेत् निष्कासो द्वितीयासम्बद्धः ननु प्रधानभूतेऽपि सप्तमी भवति यथा स्वागारे गावो वास्यन्तां प्रावारे कुसुमानीति। भवति यत्र प्रमाणान्तरेण द्रव्यं प्रधानं विदितम्। यत्र तु शब्दगम्य एवार्थस्तत्र गुण-

भावो युक्तः। यत्कारणं कारकविभक्तिरियम्। कारकं च क्रियार्थं भूतं भव्यम् उच्चारणे हि भूतं भव्यार्थं भवति दृष्टार्थत्वात्। भव्यस्य तु भूतार्थत्वेऽदृष्टार्थता कल्प्या स्यात् न च दृष्टे सत्यदृष्टकल्पना सम्भवति।

## प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६७ ॥ (२पू०)

प्रतिपत्तिर्वा उदयनीयः स्यात् निष्कासस्य न गुणभावः कुतः ?। अकर्मसंयोगात्। नात्र निष्कासस्योदयनीय-कर्मणा संयोगः। केन तर्हि निर्वापेण निष्कासे निर्वप-तीति। ननु मुख्यत्वादुदयनीयस्यैतेन सम्बन्धो न्याय्यः। न हि मुख्यसम्बन्धे साकाङ्क्षमेतद्भवति निष्कास उदयनीयं किं करोति तदावश्यं निर्वपतीत्यनेन परिसमापयितव्यम् उदयनीयं निर्वपतीति। न चोदयनीयस्य निर्वापेण सह सम्बन्धोऽस्तीत्युक्तम्। तदेतदवश्यं तथैवापद्यते। उदयनीयं कर्तुं प्रायणीयस्य निष्कासे हविष्यं निर्वपतीति। निष्का-सश्च प्रायणीयशेषः। निष्कासशब्दश्च शेषवचन एव यदु-खायां लग्नकं तदनेनोच्यते। शेषस्य चार्थान्तरगमनं प्रति-पत्तिः। तच्च सामवायिकमङ्गं भवति तच्च प्रधानेन दृष्ट-सम्बन्धमारादुपकारकत्वेऽनुमेयसम्बन्धं सप्तमी च विभक्तिः प्राधान्ये न दृष्टा तस्मात् प्रतिपत्तिः। नन्वेवमपि कर्मान्तर-चोदनावभृथवत् प्राप्नोति। भवेद्यदि न चोदितं कर्म भवेत् चोदितस्तूदयनीय आदित्यः प्रायणीयश्चरुर्भवत्यादित्य उदनीयो दिशां प्रज्ञाता इति तं कर्तुं प्रायणीयनिष्कासे निर्वपेदिति तत्रैव प्रज्ञायते। तस्मान्न कर्मान्तरचोदनेयम्।

अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ६८ ॥ (सि० )

अर्थकर्म वा निष्कासे निर्वापो न प्रतिपत्तिः। कुतः शेषत्वात्। निर्वापं प्रति शेषभूतो निष्कासः गुणभूत इत्यर्थः। कथं ज्ञायते तदर्थेन विधानात्। तदर्थेन शब्देन सप्तम्या विभक्त्या विधानात्। सप्तमी हि विभक्तिराधारे भवति आधारश्च क्रियायास्तत्कारकाणां च विशिष्टानां धारणे वर्त्तते। तस्माद्गुणभूतः ननु निष्कासो धारणेऽसमर्थः। स्थाल्येव तत्र धारणं करोति। पात्रीवदेतद्द्रष्टव्यम्। तद्यथा पात्र्योदनं धारयति पात्रीं भूमिः न च पात्री नाधारः। तत्रैतत् स्यात् न दृष्टमुपकारं करोतीति। पात्र्यपि तथा। अपि च हविषा उदयनीयनिर्वृत्त्या प्रयोजनवन्तस्ते यदि निष्कासेन संस्क्रियन्ते निष्कासोऽपि प्रयोजनवान् भवति। अथ तु निष्कासः संस्क्रियते न च तेन कश्चिदर्थः। न हि तेन किञ्चित् करिष्यते। ननु तेनापि प्रायणीयो निर्वर्त्तितः तदर्थस्यापि संस्कारोऽर्थवान् भविष्यति नैवमुपयुज्यमानसंस्कारो गरीयाननुपयुक्तसंस्कारादपि च निष्कास-संस्कारोऽयं भवन् प्रायणीयस्याङ्गं भवेत् तत्रोदयनीय-सन्निधिर्बाध्येत। तस्मादुदनीयहविषामयं निष्कासस-सर्गाद्दृष्ट उपकारः क्रियते श्रयणवत्। तद्यथा पयसा मैत्रावरुणं श्रीणाति धानाभिर्हारियोजनमिति श्रयणैः सोमस्य। ( निष्कासशब्दो दन्त्यान्त्योऽपि )।

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये
एकादशाध्यायस्य द्वितीयः पादः ॥

अथ एकादशाध्यायस्य तृतीयः पादः ।

विद्याद्यङ्गानां प्रधानकालत्वायन्यकालत्वाद्यधिकरणम् ।

## अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥ (पू० सि०)

अङ्गानां मुख्यकालत्वं मुख्यदेशत्वं मुख्यकर्तृत्वं चोक्तम्। अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वमिति एवं च सर्वत्र प्राप्तम्। वचनादन्यकालत्वं यत्र वचनं तत्रान्यकालत्वमन्यदेशत्वमन्यकर्तृत्वमपि भवति। यथा पूर्वेद्युरमावास्यायां वेदिं करोति अप्सुवभृथेन चरन्ति। अग्नौ सौत्रामण्यां दक्षिणाभेदादन्यकर्तृत्वं विज्ञायते वडवा दक्षिणेति।

---

आधानादेस्तन्त्वताधिकरणम् ।

## द्रव्यस्य कर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात् स्वकालत्वात् ॥ २ ॥ (पू० सि०)

वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति श्रूयते आधानम्। तत्कर्मार्थमित्यभ्युपगमः किं कारणमफलत्वात्। आहवनीये जुहोति गार्हपत्ये हवींषि श्रपयति दक्षिणाग्नावन्वाहार्यं श्रपयादि करोतीति तेषामग्नीनां कर्मसु प्रयोगः। तत्र विचार्यते

किं तस्य कर्मणोऽर्थेन भेदेनाधानं कर्त्तव्यमथ वा सर्वेषा-मैष्टिकपाशुकसौमिकदार्विहोमिकानां कर्मणां तन्त्र-मिति। किं प्राप्तम्? द्रव्यस्याग्नेरकर्मकालनिष्पत्तेः वसन्ते ग्रीष्मे शरदीति प्रयोगः आधानं सर्वार्थं स्यात्। कुतः?। स्वकालत्वात् स्वोऽस्य कालो वसन्तादिः न कस्य-चित् कर्मणः कालं श्रूयते। तत्र न गृह्यते विशेषोऽस्मै कर्मण इदमाधानमिति नास्मा इत्यगृह्यमाणविशेष-त्वाच्च तन्त्रभावोन्याय्यः। नन्वाधानानन्तरं यस्य कर्मणः प्रयोगस्तदर्थं तदाधानमिति इति गृह्यते विशेषः सखलु गृह्यते विशेषः किन्तु आनन्तर्य्यमकारणम्। यदापि सर्वार्थं तदाप्यवश्यं कस्यचित् कर्मणः पूर्वप्रयोगो यौग पद्यस्यासम्भवात्तदेकेनानन्तर्य्यं समो हेतुः सर्वार्थत्वे च एकार्थत्वे च समत्वादहेतुर्भवति न वाऽऽधानेन कर्माण्युप-क्रम्यन्ते यथा प्रणयनेन। यद्युपक्रम्येरन् ततो यदनन्तरं कर्म तस्योपक्रमो विज्ञायेत नोत्तरेषां तेन व्यवहितत्वात्त-दपवर्गे वापद्यन्येत प्रणयनवत्। न ह्यनेन किञ्चित् कर्म प्रक्रम्यते अप्राप्तकालत्वात्। अत उत्तरकाला हि कर्म श्रुतयः किन्तर्हि अनेन क्रियते द्रव्यमर्ज्यतेऽग्निविशेषः। यथा कश्चिल्लोहं सुवर्णं वार्जयेदनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति। स तेन यथाकालमिष्टं दानादि करोति। एवमयमग्निविशेषमर्जयति अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति। तत्र न गृह्यते विशेषोऽस्मै कर्मण इदमर्जितम् अस्मै नेति। सर्वेभ्यश्च युज्यते। तस्मात् सर्वार्थम्। अपि च नित्यकाम्यनैमित्तिकानि कर्माणि

यथोपपत्तिकालानि। तेषां वसन्ते आहितेनाग्निना कार्य्यत्वम्। न चान्यस्मिन् ऋतौ शक्यो वसन्तेऽग्निराधातुम्। सोऽयमसंयोगो भवति भेदेनाधाने। अथ तु सर्वकर्मणामर्थं तन्त्रमाधानं नैष निरोधो भवति। तस्मादपि तन्त्रम्।

---

अग्निषोमीयादिपशौ यूपतन्त्रताधिकरणम्।

## यूपश्चाकर्मकालत्वात् ॥ ३ ॥ (पू० सि०)

ज्योतिष्टोमे पशवः अग्नीषोमीयसवनीयानुबन्ध्यास्तेषां यूपः खादिरे बध्नाति पालाशे बध्नाति रौहितके बध्नातीति श्रुतिः। तत्र विचार्य्यते किं त्रयाणां पशुबन्धानां भेदेन यूपः अथ वा तन्त्रमिति। किं प्राप्तम्?। भेदेनेति किं कारणम्?। अग्नीषोमीये तावत् प्रयोगवचनेन गृह्यते यूपः। उत्तरयोरपि चोदकेन प्राप्यते। कर्मशेषावसायिनः चोदकप्रयोगवचनाद्भेदेन यूपं प्रापयति। तस्माद्भेदः एवं प्राप्ते उच्यते यूपस्य तन्त्रं भवेत्। अकर्मकालत्वात्। नास्य पशुकर्मकाल उत्पत्तिः। किं तर्हि? पृथक्काले दीक्षासु यूपं छिनत्ति क्रीते वा राजनीति। तत्रोत्पद्यमानस्य न गृह्यते विशेषोऽस्मै पशुबन्धाय यूपोऽयमस्मै नेति। सर्वेभ्यश्च प्रयुज्यते। तस्मात् सर्वार्थो भवति।

## एकयूपं च दर्शयति ॥ ४ ॥ (हे०)

एकं यूपं त्रयाणामपि पशूनां साधारणं दर्शयति

सवनीये पशौ चिवृता यूपं परिवीयेति त्रिवृता परिव्याणं विदधाति। यदि नानायूपा भवेयुस्ततः पूर्वस्य यूपस्यापवर्गाद्यूपान्तरे चोदकेनैव प्राप्ते चिवृता परिव्याणं न विधातव्यं भवेत्। अथ तन्त्रं यूपे ततः संस्कारा अपि तन्त्रमित्यग्नीषोमीय एव परिवीतस्य कृतार्थत्वात् पुनः सवनीयपरिव्याणं न प्राप्नोति तद्विधातव्यं भवति। विधीयते च तस्मादपि तन्त्रम्।



---

यूपसंस्कारतन्त्रताधिकरणम्।

**संस्कारास्त्वावर्त्तेरन्नर्थकालत्वात्॥ ५॥ (पू०)**

यूपसंस्कारा ये पशुतन्त्रमध्ये क्रियन्ते यथा प्रोक्षणमञ्जनमुच्छ्रयणं परिव्याणं च तेषु चिन्त्यते। किं तस्य तस्य पशोर्भेदेन कर्त्तव्या अथ वा तन्त्रमिति किं प्राप्तम्? संस्कारास्त्वावर्त्तेरन् यूपस्य न तथा यूपास्तन्त्रं यथा स्युः। किं कारणम्। अर्थकालत्वात्। अर्थः पशोर्नियोजनं तत्काला एते संस्काराः तत्र गृह्यते विशेषः यस्य पशोर्नियोजनकाले कृतास्तदर्था इति। इतरयोश्च पश्वोरप्राप्तकालत्वात्तादर्थ्येन नास्ति प्रयोगः तस्मादावर्त्तेरन् यथाग्नेः संमार्जनम्।

**तत्कालस्तु यूपकर्मत्वात्तस्य धर्मविधानात् सर्वार्थानां च वचनादन्यकालत्वम्॥ ६॥ (सि०)**

सत्यमावर्त्तेरन् यद्येते नियोजनकाला भवेयुः तत्का-

लास्त्वेते दीक्षाकालाः। कथं ज्ञायते? यूपकर्मत्वात् नैते नियोजनार्था यूप एतैः क्रियते यूपो नियोजनार्थः। स च दीक्षासु कर्त्तव्यः दीक्षासु यूपं छिनत्तीति वचनात् संस्कारैश्च स क्रियते। तस्माद्दीक्षाकाला एवैते संस्काराः। ननु छेदनमात्रं तत्र यूपस्य श्रूयते। न यूपक्रिया उच्यते। न किञ्चिद्द्रव्यं यूपाख्यमस्ति यस्य छेदनमुच्येत। तदेतदेवं ज्ञायते। दीक्षासु छेदनाभिर्यूपं करोतीति। छेदग्रहणं च मुख्यत्वात् प्रदर्शनार्थं यत्कारणं नासौ छेदनेन केवलेन यूपो भवतीति। एवं वेदीक्षाकाला एवैते संस्काराः। सर्वार्थानां वसतां वचनात् केषाञ्चिदन्यकालत्वं कृतं यथाग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति। तस्माद्यूपवत्संस्कारा अपि तन्त्रम्। यूपकर्मत्वादित्यस्याऽपराख्या। यूपकर्म तस्य एते संस्काराः छेदनाद्याः। यूपोऽयमेवं क्रियते तक्षणादिव्यापारैः। यथा वाजपेयेन सम्राट् सन्नत् कृतश्चेत्तस्य पुनः क्रिया निरर्थिका। तस्मादनावृत्तिः नन्वेवं सति निरूढ़पशावपि कामं स एव यूपः कर्त्तव्यो भवेत्। बाढं भवेद्यदि निरिष्टिकेन यागप्रतिषेधो न स्यात् अस्ति तु स प्रतिषेधः। तस्मान्न भवति। यथा न तैरेव दर्भैः प्रयोगान्तरमपि क्रियते। अथ वा यदर्थं स यूपः कृतस्तत्कर्मापवृक्तं तस्यापवर्गे यूपोऽप्यपवृक्तः।

## सक्रन्मानं च दर्शयति ॥ ७ ॥ (हे०)

निहता यूपं परिवीय सवनीयं पशुमुपाकरोति इति परिव्याणेन यूपधर्मानुक्रमसमाप्य: सकृन्मितं स्यात् यूपं

दर्शयति। इतरथा मुख्यत्वात् प्रोक्षणेनोपक्रमेत। आनन्तर्य्यार्थमिति चेत्। न प्रतीतितः सिद्धत्वात्। तस्मादपि तन्त्रं संस्काराः।

स्वरुतन्त्रताधिकरणम्।

अस्ति स्वरुः यूपस्य स्वरुं (शकलम्) करोतीति श्रुतः स किं सर्वपशूनां तन्त्रं भेदेन वेति किं प्राप्तम्?

## स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ८ ॥ (पू०)

स्वरुः खलु तन्त्रे तन्त्रे अपवृज्येत अस्वकालत्वात् नास्य स्वः काल उत्पत्तौ। कर्मकालेऽयमुपादीयते स्वरुणा-स्वधितिना वा पशुं समनक्तीति। यस्य पशोः समञ्जन-काल उपात्तस्तदर्थोऽसाविति गम्यते विशेषः। तस्मा-द्भेदः। ननु यूपस्य स्वरुं करोतीति स्वकालैवास्योत्पत्तिः। न खल्वेषाप्यन्तःप्रयोगैव। अपि च कार्य्यवचनोऽत्र स्वरुशब्दः स्वरुं करोति स्वरुकार्य्यं करोति। यत्कारणं स्वरुनं गम्यते स्वरुकार्य्यं तु गम्यते पशोरञ्जनम्। ननु क्रत्वन्ते स्वरोः प्रतिपत्तिर्दृश्यते संस्थिते सोमे प्रस्तरं प्रह-रति स्वरुं वा यत्रवेशमायेति। सत्यमस्ति दर्शनम् तत्तु स्वरुमात्रस्य न तु स्वरुविशेषस्य। तथाग्नीषोमीय उपात्तस्य तन्त्रतया प्रवृत्तस्य दर्शनम् सोमान्ते स्यात्। अथ वा चोदकप्राप्तस्यानुबन्ध्याकालस्येति संशये किं न्याय्यं यदनुबन्ध्याकालस्य दर्शनं भवेन्न तन्त्रतया प्रवृत्त-स्येति। कुतः? यत उक्तो न्यायः स्वरुस्तन्त्रापवर्गः

स्यात् अस्वकालत्वादिति। न च दर्शनं केवलं साधकं भवति। यथासम्भवे तु दर्शनं कल्पितं तदेवं यथा प्रस्तरस्यानुबन्ध्याकालस्य दर्शनं तद्वत् स्वरोरपि भविष्यतीति।

## साधारणो वानुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥ (सि०)

नैतदस्ति प्रतितन्त्रं स्वरुभेद इति। किं तर्हि साधारणः स्यात्। कुतः ? यतोऽयमनुनिष्पद्यते यूपः साधारणः सर्वपशूनां तस्य साधारणत्वात् अयमपि साधारण एव न्याय्यः। यथैक एव यूपः सर्वपशूनां साधारणः एवमयमप्यगृह्यमाणविशेषत्वात् साधारणो भविष्यति नैतद् युक्तम्। अङ्गप्रकर्षवचनादगृह्यमाणविशेषत्वात् यूपस्य साधारण्यमुपपद्यते न तु स्वरोः प्रतिकर्षे किञ्चन वचनमस्ति यतो गृह्यमाणविशेषत्वादस्यापि साधारण्यमुपपद्येत। यदेतत् यूपस्य स्वरुं करोतीति तदन्तःप्रयोगसम्बद्धं स्वरुकार्य्यमञ्जनं कर्त्तुं यमुपादत्ते तं यूपादिति। न चान्यस्य साधारण्यं युक्तम्। सम्भवन्ति ह्येकस्यापि बहवः शकला इति। चोदकप्रयोगवचनाश्च भिद्यमाना अन्तःप्रयोगसम्बद्धमङ्गमात्मीयं प्रतितन्त्रं प्रापयन्ति गृह्यमाणविशेषादित्यतो भेद एव युक्त इति। तत्रोच्यते। यद्यप्यस्य नास्ति प्रतिकर्षवचनं प्रत्यक्षम्। न चान्यस्मिन् प्रतिकृष्यमाणेऽन्यस्य प्रतिकर्ष इति। नैतद्युक्तम् असम्बद्धयोर्हि तदेवं भवति न सम्बद्धयोः। अयं च शकलो

यूपमनुनिष्पद्यते तदस्य यूपप्रतिकर्षादेव सिद्धः प्रतिकर्षः। अतो यत्र यूपस्तत्रायमपि। यच्च यूपस्य स्वरुं करोतीत्यन्तःप्रयोगसम्बद्धा श्रुतिरिति। तदपि नैवम्। द्वौ हि कालौ द्रव्यस्य एक उपादानकालः एक उपात्तस्य प्रयोगकालः। यद्धि उपादातव्यं न हि तदनुपादाय कश्चित् प्रयोगमारभते। न ह्यनुपादाय व्रीहीन् प्रस्तुत्य प्रयोगं व्रीहीन् मृगयति एवं कुर्वाणस्य प्रयोग एव न संवर्त्तेत। अयं च यूपं छिद्यमानमनुनिष्पद्यते। अतो यत्र छेदनं तत्रायमपि। यद्यप्येकस्यापि यूपस्य बहवः स्वरवः सम्भवन्तीति। स्यादेवं यदि प्राथम्यविशिष्टस्य नोपादनं भवेत् विशिष्टं तूपादानमुक्तं ततो यः प्रथमः शकलः परापतेत् स स्वरुः कार्य्य इति वचनाद्बहूनां च प्राथम्याभावात् बहवो न सम्भवन्ति। तस्मादेक एव साधारणः स्वरुरिति।

## सोमान्ते च प्रतिपत्तिदर्शनात् ॥ १० ॥ (हे०)

सोमान्ते चास्य प्रतिपत्तिर्दृश्यते। संस्थिते सोमेऽग्नौ प्रस्तरं प्रहरति स्वरुं वा यज्ञवेशसायेति। तत्साधारणस्यैवोपपद्यते। तत्रापवर्गे ह्यग्नीषोमीयान्त एव स्यात्। तस्मादपि साधारणः। तत्कालो वा प्रस्तरवदिति यदुक्तं तत्परिहर्त्तव्यम्।

## न चोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा ॥ ११ ॥ (पू० आ० नि०)

नास्य नूनं वध्याकालस्य स्वरोः प्रहरणम्। किं

कारणम् ?। इदमेव प्रहरणस्योत्पत्तिवाक्यम्। सोमान्ते प्रस्तरं प्रहरति स्वरुं वा यज्ञवैशसायेति। अनेन क्रमादग्नीषोमीयकालस्य प्रहरणं गम्यते। स यदि साधारणस्ततः सर्वपशूनां कृतार्थे कर्मणि अन्ते अस्याग्नौ प्रहरणस्य दर्शनमुपपद्यते। अथ तु पृथक् स्यात्ततोऽग्नीषोमीयस्यान्त एव दृश्येत। अथ वचनमिदं कस्मान्न भवति ?। अग्नीषोमीयान्ते प्राप्तस्य सोमान्ते वचनात्। नैतदेवं वचनेन द्वावुत्सर्गस्य विशेषावुच्येयातां अग्नौ च प्रहरणं सोमान्ते च तथा च वाक्यभेदः स्यात्। तस्मान्नैतद्वचनं यत्तु प्रस्तरवदिति। प्रदेशात् प्रस्तरे तथा। प्रस्तरस्य दर्शपूर्णमासयोः प्रहरणमुक्तमाशीर्भिः प्रस्तरं प्रहरतीति। चोदकेन प्रतिपशु प्राप्यते। तत्रानुबन्ध्याकालस्य दर्शनं युज्यते न स्वरुप्रहरणस्यैतदस्ति। तस्माद्विषमोऽयमुपन्यासः।

कृष्णविषाणाप्रासनाधिकरणम्।

ज्योतिष्टोमे दीक्षितव्रतमाम्नातं कृष्णविषाणया कण्डूयतीति। तत्रैव च पुनः श्रुतं नीतासु चात्वाले कृष्णविषाणां प्रास्यतीति। तदुभयं द्वादशाहे चोदकेन प्राप्तम्। तत्र विचार्यते। किमन्ते प्रथमे वाहनि कृष्णविषाणायाः प्रासनं कर्त्तव्यम् अथ वान्त्य एवेति। किं प्राप्तम् ?

**अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्ते प्रथमे वाहनि विकल्पः स्यात् ॥१२॥ (१पू०)**

विकल्पः कर्त्तव्यः। अन्ते प्रथमे वाहनि प्रासनं कुतः ?

धर्मविप्रतिषेधात्। यदि प्रथमेऽहनि करिष्यते। उत्तरेष्वहःसु प्राग्दक्षिणानयनादूर्ध्वं ये पदार्थास्तेषां विषाणाकण्डूयनं धर्मो बाध्यते। अथान्ते ततः पूर्वेषामह्नां दक्षिणानयनादूर्ध्वं ये पदार्थास्तेषां हस्तकण्डूयनं बाध्येत स एष धर्मविप्रतिषेधः। तस्माद्विकल्पः।

## पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात् प्रातःसवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात्॥ १३॥ (२ पू०)

नैतदेवं स्याद्विकल्प इति किं तर्हि विषाणानियमः स्यात्। विषाणाकण्डूयनं सर्वस्मिन्नहर्गणे नियम्येत। अन्तेऽहनि प्रागेव स्यात्। कस्मात्। प्रातःसवन मध्यत्वात् बहूनि प्रातःसवनान्यस्याहर्गणस्य मध्ये। तेषां विषाणाकण्डूयनं धर्मोऽनुगृहीतो भविष्यति। नन्वितरयोः सवनयोर्हस्तकण्डूयनं धर्मः स बाधिष्यते नैतद्दोषः। नैवं श्रूयते पाणिना कण्डूयितव्यमिति। अर्थात् प्रत्यासत्त्या क्रियते। यश्चार्थादर्थो न स चोदनार्थः एवमप्युत्तरयोः प्रत्यासत्त्या हस्त एव प्राप्नोतीत्यत्र ब्रूमः।

## शिष्टे चाभिप्रवृत्तत्वात्॥ १४॥ (सि०)

प्रातःसवनशेषे कण्डूयनस्य शिष्टत्वादुत्तरयोरपि विषाणाकण्डूयनमेव नियम्येत अभिप्रवृत्तत्वात् अभिप्रवृत्तस्य नियमस्योत्सर्गे आचारविरोधः स्यात्। अथ

प्रकृतौ कथमुत्सर्गः विषाणाया अभावात्। अन्या विषाणा कस्मात् कण्डूयनार्थेन नोत्पाद्यते। पूर्वविषाणायाः प्रासनं धारयत् तद्विमोकार्थं दृष्टं तद् यद्यन्या विषाणा आनीयेत तस्मात् धारणमदृष्टार्थं तस्या अदृष्टोऽर्थः कल्पयितव्यः स्यात्। इह तूत्तरप्रातःसवने धारयितव्या विषाणा तस्यां सत्यां नास्ति नियमोत्सर्गे कारणम्। तस्मादाद्यस्याङ्गः दक्षिणानयनकालादूर्ध्वं विषाणाकण्डूयनमेव स्यात्।

---

वाग्विसर्गाधिकरणम्।

## वाग्विसर्गो हविष्कृता वीजभेदे तथा स्यात्॥ ॥ १५ ॥ (पू॰)

राजसूये नानावीजिकेष्टिः अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत्। सोमाय वनस्पतये श्यामाकं चरुं सवित्रे प्रसवित्रे सतीनानामष्टाकपालमिति नानावीजेष्वेकमुलूखलं विभवादिति युक्तम्। अतस्तस्यां क्रमेणावहन्तिः क्रियते। प्रकृतौ च श्रूयते अपः प्रणेष्यन् वाचं यच्छति तां सह हविष्कृता विसृजन्तीति हविष्कृद्दहरणं च काललक्षणार्थमित्युक्तम्।

## यथाह्वानमपीति चेत्॥ १६ ॥ (सि॰)

न कालविधिश्चोदितत्वादिति। इहानिको हविष्कृदाह्वानकालः। तत्र पूर्वेव विचारणा किमन्ते प्रथमे-

वा हविष्कृत्काले वाग्विसर्गः अथ वाक्य एवेति। तथैव च पूर्वः पक्षः प्राग्घविष्कृत्कालात् ये पदार्थास्तेषां वाग्यमो-धर्मः स बाध्येत यदि पूर्वस्मिन् वाग्विसर्गः क्रियते। अथोत्तरस्मिंस्ततो हविष्कृत्कालादूर्ध्वं ये पदार्थास्तेषां व्याभाषणकरणं धर्मस्तद्बाध्येत। तथैव चोत्तरः पक्षो व्याभाषणस्याश्रुतत्वाच्छिष्टे च वाग्यमस्याभिप्रवृत्तत्वा-दिति अधिकरणप्रदेशोऽयम्।

---

पशुपुरोडाशयोस्तन्त्रताधिकरणम्।

## पशौ च पुरोडाशे समानतन्त्रं भवेत् ॥ १७ ॥ (सि०)

अग्नीषोमीये पशौ पशुः पुरोडाशश्च। तयोः पाशुकं पौरोडाशिकं च तन्त्रम्। अत्रापि सैव चिन्ता किं पाशुक-कर्मार्थं हविष्कृदाह्वानकाले वाग्विसर्गः कर्त्तव्यः उत पौरोडाशिककर्मार्थं इति तथैव पूर्वोत्तरपक्षौ योज्यौ अय-मप्यधिकरणप्रदेश एव। ननु नैव पशौ हविष्कृदस्ति ओषध्यर्थत्वात्। सर्वार्थत्येवं कृत्वा चिन्त्यते कृत्वा चिन्ते-यम्।

अग्नियोगाधिकरणम्।

अग्नौ श्रूयते। अग्निं युनज्मि शवसा घृतेनेति जुहो-तिअग्निमेवैतद्युनक्तीति पुनरिमं स्तनं मधुमन्तन्धया-

मीत्यग्निविमोकं जुहोतीति। तत्र विचार्य्यते। किमङ्ग प्रधानार्थो योगः सर्वापवर्गे विमोकः कर्त्तव्य उत प्रधानार्थो योगः प्रधानापवर्गे विमोक इति किं प्राप्तम्?। अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य तस्मात् सर्वापवर्गे विमोकः स्यात्।

अङ्गप्रधानार्थो योगः सर्वापवर्गे च विमोकः स्यात् ॥ १८ ॥ (पू०)

किं कारणम्?। अविशेषेण श्रूयते। अग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेवैतद्युनक्तीति। न च श्रूयते। तस्मै अस्मै वा कर्मणे इति अविशेषात्सर्वार्थ इति विज्ञायते। अपि च तस्मिन् युक्तेऽग्नावङ्गानि प्रधानानि च क्रियन्ते। तस्मादपि सर्वार्थं चेत् सर्वापवर्गे विमोकः कर्त्तव्यः। तदा हि योगकार्य्यमवसितं भवति योगापवर्गार्थश्च विमोकः।

प्रधानापवर्गे वा तदर्थत्वात् ॥ १९ ॥ (सि०)

न वा सर्वापवर्गे विमोकः स्यात्। किं तर्हि प्रधानापवर्ग एव प्रधानसंयोगेन हि श्रूयते। पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभत इति यज्ञप्राप्तयर्थं युनक्तीति विज्ञायते। तस्मात् प्रधानार्थो योगः प्रधानार्थश्चेत्तदपर्गे योगकार्यमवसितं भवति। तस्मात्तत्र विमोकः। अविशेषविधानं यज्ञसंयोगेन विशेषेण युज्यमानं विशेषार्थं भवति।

अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽपवृक्ता-र्थत्वात् ॥ २० ॥ ( १ हृ० )

एवं च कृत्वा अवभृथे आर्षेयवरणस्य होतृवरणस्य च प्रतिषेधो युक्तो भविष्यति न होतारं वृणीते नार्षेयमिति यथान्यायोपदिष्टः। सोमार्थं हि होतृवरणं कृतं यद्धोतारं वृणीते जगन्ति तद्वृणीते इति। एतस्मिन्न्याये असति तदप्यङ्गप्रधानार्थमिति अवभृथेऽपि प्रसज्येत। तत्र कृतार्थत्वात् प्राकृते होतृवरणं नैव प्राप्नोति। तस्य प्रतिषेधोऽनर्थकः। सति त्वेतस्मिन्न्याये तदपि प्रधानार्थमेव तत्रापि हि यज्ञसंयोगो यद्वृत्वा वषट् कुर्य्युः आर्त्तिम् यज्ञस्यामीर्गच्छेत् यद्वृता वषट् कुर्वन्ति एकधा-तद् यजमाने यज्ञस्याशीः प्रतिष्ठतीति। प्रधानार्थं चेत्तद-पवर्गे तत्कार्य्यमवसितमिति अवभृथे प्राकृतं होतृवरणं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। उच्यते च। तस्मात् प्रधानार्थो योगः प्रधानापवर्गे विमोक इति।

अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् ॥ २१॥ ( २ हृ० )

अहर्गणे च द्वादशाहे प्रत्यहं योगविमोकौ दर्शयति। स वा अहरहर्युनक्ति अहरहर्विमुञ्चतीति। तदुपपद्यते यदि प्रधानार्थो योगः। इतरथा आद्येऽहनि योगः स्यात् अन्ते विमोकः। तदा हि सर्वापवर्ग इति।

सुब्रह्मण्याह्वानाधिकरणम्।

द्वादशाहे उपसत्काले सुब्रह्मण्याह्वानं प्रति चिन्त्यते।

किं भेदेन कर्त्तव्यमन्ते वा तन्त्रेणेति। कर्मभेदाद्भेदेनेति प्राप्ते उच्यते।

**सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात्॥ २२॥ (पू०)**

सुब्रह्मण्या तु तन्त्रं स्यात्। कुतः? अन्यकालत्वात्। कर्मसंयोगात् पृथक्कालेयम्। तत्र न गृह्यते स विशेषः। अगृह्यमाणे विशेषे तन्त्रभावो युक्तो दीक्षावत्। तद् यथा दीक्षा पृथक्कालत्वात्तन्त्रं भवति तथेयमपि।

**तत्कालत्वादावर्त्तेत प्रयोगतोविशेष-संयोगात्॥ २३॥ (सि०)**

तस्मिन्नेव द्वादशाहे तत्काला या सुब्रह्मण्या सा त्वावर्त्तेत भेदेन स्यात्। कुतः प्रयोगं प्रति तस्या विशेषसंयोगो भवति अद्य सुत्यामागच्छेति। अद्येत्युक्ते श्वः परश्वो वेति नोक्तो भवति। तत्रापि प्रकृत्यनुद्देशाद्वक्तव्यम्। तस्मादावर्त्तेत।

**अप्रयोगाङ्गमिति चेत्॥ २४॥ (आ०)**

इति चेत् पश्यसि अद्येति विशेषसंयोगादावृत्तिरिति। नैतद्युक्तं कुतः?। यतोऽप्रयोगाङ्गमेतद् यदद्येति वचनम् इदं हि प्रकृतौ एकत्वादङ्गोऽविवक्षितमर्थादेव सिद्धत्वादनङ्गीकृतत्वाच्च चोदकेन न प्राप्येत। यावदुक्तं स्यात् सुत्यामागच्छेति तावदेवाद्येति। सुत्यात्वं सर्वेषामङ्गामवशिष्टं तस्मात्तन्त्रं स्यात्।

## प्रयोगनिर्द्देशात् कर्तृभेदवत् ॥२५॥ (१आ०नि०)

स्यादेतद्‌: प्रयोगनिर्द्देशात्। यद्यप्यद्यशब्दस्यार्थो न विवक्षितस्तथापि यस्मिन्नहनि प्रयुज्यते तत्कालस्य प्रधानस्योपकरोति। नान्यकालस्य कर्त्तृभेदवत्। तद्‌ यथा-ष्टावध्वर्य्युरुत्तरे विहारे हवींष्यासादयति। मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्नित्यौत्तरवैहारिकाण्यङ्गानि देश-भेदान्मारुत्या नोपकुर्वन्ति। यथा तानि देशभेदान्नोप-कुर्वन्ति। एवमिदमपि कालभेदादन्यकालस्य नोपकरि-ष्यन्ति। तस्मादावर्त्तेत।

## तद्भूतस्थानादग्निवदिति चेत् तदपवर्गस्तदर्थ-त्वात् ॥ २६ ॥ ( २आ० नि० )

अथोच्येत। एकस्मिन्नहन्याहूता देवता आह्वान संस्कृता भवति। एक एवासौ तस्याः पुनराह्वानमनर्थकम-ग्निवद्‌ यथाग्नेः सकृदाधाने संस्कृतस्य न पुनः कर्मणि संस्कारः एकस्य क्रियत इति। तच्चायुक्तम्। तत्कारणं प्रतिकर्मापवर्गः। यस्मिन् कर्मण्याह्वानं क्रियते तदर्थं तद्भवति तस्य कर्मान्ते अपवर्गो यथान्येषां सुत्याकालानां संस्काराणामग्निसंमार्गादीनाम्। तस्मादावृत्तिः।

## अग्निवदिति चेत् ॥ २७ ॥ ( ३ आ० )

इति यदुक्तं यथाग्नेराधानं सर्वकर्मणि तन्त्रं भवति एवमिदमपि इत्येतस्य कः परिहारः आभाषान्त' सूत्रम्।

## न प्रयोगसाधारण्यात् ॥२८॥ (आ० नि०)

नैतदाधानेन तुल्यमाधानस्य स्वकालत्वात्। स्वकालं हि तत् क्रियते तत्र न गृह्यते विशेषः। इदं पुनः कर्मकालमाह्वानं तद् यस्य कर्मणः काले क्रियते तदर्थमिति गृह्यमाणविशेषं तस्मान्नैतदाधानेन तुल्यम्।

## लिङ्गदर्शनाच्च ॥ २९ ॥ ( हे० )

लिङ्गं चैतमर्थं दर्शयति प्रत्यहं सुब्रह्मण्याह्वानमिति। एवं ह्याह संस्थिते संस्थितेऽहन्याग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति प्रेष्यतीति प्रेषणमाह्वानक्रियार्थम्। तस्मादपि प्रत्यहमाह्वानम्।

## तद्वि तथेति चेत् ॥ ३० ॥ (हे० आ०)

तदित्यनेन यूपाहुतिं प्रतिनिर्दिशति। तद्धि यूपाहुतिकर्म यथा यूपैकादशिन्यां तन्त्रं भवति। तथा इदमपि भविष्यति। किं तस्य वास्य च सादृश्यं तत् क्रियमाणमवश्यं कस्यचित् यूपस्यान्तिके भवति सर्वसाधारणस्यान्तिकस्य दुर्लभत्वात्। यथा तदा कस्यचिद् यूपस्यान्तिके क्रियमाणं सर्वं यूपार्थं भवति। एवमिदमप्येकस्य कस्यचित् सौत्यस्य कर्मणोऽन्तिके क्रियमाणं सर्वार्थं भवतीति।

## नाशिष्टत्वादितरन्यायत्वात् ॥ ३१ ॥ (आ० नि०)

नैतत् तेन तुल्यं कुतः। अशिष्टत्वात् नात्र यूपान्तिके

होमः शिष्यते। अविविच्चितमन्त्रिकमाहवनीयप्रतिषेधार्थमेतदित्युक्तम्। इतरप्रतिषेधो वा शास्त्रत्वाच्च देशानामिति इतरन्यायत्वाच्च इह त्वितरोन्यायः कालभेदात् गृह्यमाणविशेषस्यावृत्त्या भवितव्यमिति। तस्माद्विषम उपन्यासः।

## विध्येकत्वादिति चेत् ॥ ३२ ॥ (आ०)

अथ कश्चित् ब्रूयात् इह द्वादशाहिको विधिः तन्त्रदृष्टो वसतीवरीपर्य्यन्तोऽवभृथादिश्चायमपि च द्वादशाहिको विधिः तात्सदृश्यादनेनापि तथा भवितव्यमिति।

## न कृत्स्नस्य पुनः प्रयोगात् प्रधानवत् ॥ ३३ ॥ (आ० नि०)

तन्न कुतः। कृत्स्नस्य पुनः प्रयोगात्। कृत्स्नोऽन्यो विधिः पुनः प्रयुज्यते अभिषवपवमानग्रहचमसस्तोत्रशस्त्रादिः। प्रधानवत् तत् यथा प्रधानानि प्रत्यहं क्रियन्ते तथा तत्र वसतीवरीवद्वा सकृत्त्वं स्यात् स्तोत्रादिवद्वा बहुकृत्वः कृतं स्यात्। तत्र बहुकृत्वः कृतमिति न्याय्यम्। तथा सर्व्वेषामुपकरोति सकृत् कृतं तु यत्र क्रियते तत्रैव कालभेदादुपकुर्य्यात्। तस्मादावृत्तिः।

---

देशकर्त्तृपात्रतत्त्वताधिकरणम् ।

## लौकिके तु यथाकामो संस्कारानर्थलोपात् ॥ ३४ ॥ (पू० सि०)

इह लौकिकार्थो उदाहरणं यथा देशः समे दर्शपूर्णमासाभ्यां यजेत् । कर्त्तारः दर्शपूर्णमासयोः यज्ञक्रत्वोश्चत्वार ऋत्विजः । स्रुगादीनि च पात्राणि तेषु विचारः किं प्रतिप्रयोगमन्यान्युपादेयानि उत तानि वा अन्यानि वा उपादाय प्रयोग इति किं प्राप्तम् अन्यान्युपादेयानीति । किं कारणम् ? । निरिष्टकेन पुनः क्रियां शिष्टानाचरन्ति इत्येवं प्राप्ते ब्रूमः । लौकिकेषु यथाकामी तानि वाऽन्यानि वा अनियमः । कुतः ? । संस्कारानर्थलोपात् । न कश्चित् पूर्वस्मिन् प्रयोगे कर्त्रादीनां संस्कारः कृतो योऽन्योपादाने लुप्येत । नाप्यर्थलोपः अन्यैरपि हि शक्यते प्रयोगः कर्त्तुं तस्मादनियमः । अथ यदुक्तं निरिष्टिकेन शिष्टा यागं नाचरन्तीति । एतैराचरन्तीति । तस्मान्नैष दोषः । ननु ऋत्विगाचार्य्यौ नातिचरितव्याविति स्मरन्तीति । पुरुषधर्मो सौनकर्मधर्मः कर्मसंयोगाभावात् प्रकरणाभावाच्च । देशेषु कर्त्तृषु च पर्य्यवसितं पात्रेषूत्तरा कथा करिष्यते ।

## यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३५ ॥ ( १ पू० )

यज्ञपात्राणि तु आन्ताद्धारयितव्यानि कुतः प्रति-

पत्तिविधानात्। प्रतिपत्तिस्तेषां परिधानीये कर्मणि विधीयते। आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति तदर्थः। ऋजीषवत्। तद्यथा अहर्गणे सर्वेषामङ्गा-ऋजीषोऽवभृथे प्रतिपादनार्थं धार्यते ऋजीषमप्सु प्रह-रन्तीति श्रूयते।

**यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथा-कामी तदर्थत्वात्॥ ३६॥ (२ पू०)**

न वेयं पात्राणां प्रतिपत्तिः किं तर्हि यजमानसंस्का-रोऽयम्। तदर्थस्तेषां पात्राणामर्थः श्रूयते। कथं ज्ञायते तेषां तृतीयया निर्देशात् यजमानस्य द्वितीयया। तत्र यथाकामी स्यात्। तेषामन्येषां वा प्रासनम् तदर्थ-त्वात्। अर्थकर्मत्वात् पात्राणां यैः कैश्चिदप्यर्थः सिध्यतीति।

**मुख्यधारणं वा मरणस्यानियतत्वात्॥३७॥(२सि०**

मुख्यानां वा आद्यानां पात्राणां धारणं नानियमः। कुतः मरणस्यानियतत्वात्। अनियतकालं मरणम्। कदाचित्तानि पात्राण्युत्सृष्टानि भवेयुः मरणं चाप-द्येत। तत्र यजमानशरीरसंस्कारलोपः स्यात्। एव-मपि तावद्धारयितव्यानि यावदपरः प्रयोगः परतः तदीयैः पात्रैरथ कर्म भविष्यति। पूर्वेषु विद्यमानेषु उपादानम-न्येषामनर्थकम्। तस्मान्मुख्यधारणमेव न्याय्यम्।

**यो वा यजनीये म्रियेत सोऽधिकृतः स्यादुपवेषवत्॥ ३८॥ (पू०)**

अथ वा न मुख्यानां धारणं यो यजनीयेऽहनि म्रियेत् यजमानः सोऽनेन संस्कारेणाधिकृतः स्यात्। तस्य तानि पात्राणि सन्निहितानि। उपवेषवत्। यथा सान्नाय्य-याजिन एवोपवेषोपधानेनाधिकारस्तस्योपवेषः सन्निहित इति।

न शास्त्रलक्षणत्वात् ॥ ३९ ॥ (१सि०)

तदेतन्नोपपद्यते। किं कारणं शास्त्रलक्षणं तत् भवति यथा सान्नाय्ययाजिन एवोपवेषो नान्यस्येति। तत्र हि सान्नाय्यार्था शाखा तामनुनिष्पद्यत उपवेष स्तस्या असान्नाय्ययाजिनोऽसम्भवः। अथेदमनियतसंस्कारविधानं यजनीये वाऽहनि अन्यच वाऽनारभ्यविधानादाहिताग्नि-मग्निभिर्दहन्ति यज्ञपात्रैश्चेति। न चान्यस्मिन्नहनि यज्ञ-पात्राणामुपवेषवदसम्भवः। शक्यते हि धारणेन सम्पादयि-तुम्। तस्मादुपवेषोऽदृष्टान्तः।

उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ४० ॥ (२सि०)

अथावानधारणं किं तर्हि संस्कारकाले अन्यानि नवानि पात्राणि उत्पाद्यानि प्रयोजकत्वात् संस्कारस्य आशिरवत्। यथा ऋतपेये घृतव्रती भवत इति वचना-दभावो व्रतदुहोऽन्यां यजमानस्य व्रतदुघान्नाशिरे दुह-न्तीति श्रुतेः आशिरार्थं अन्यागौरुपादीयत एवम्।

शब्दासामञ्जस्यमिति चेत् ॥ ४१ ॥ (आ०)

अथ पक्षस्यैवं सति यज्ञपात्रशब्दोऽसमञ्जसो भवति।

यज्ञसम्बन्धेन हि पात्राणि भवन्ति। न च नवानां यज्ञसम्बन्धोऽस्तीति।

तथाशिरेऽपि ॥ ४२ ॥ (आ॰ नि॰)

यासावन्या गौरुपादीयते सा यजमानस्य व्रतधुङ् भवति। तत्र शब्दस्यासमञ्जस्यमेव यदि तत्रान्या गौरिहाप्यन्यानि पात्राणि भविष्यन्ति। वक्तव्यो वा विशेष इति। अयमुच्यते।

शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावर्थेहापूर्वार्थवत् भूतोपदेशः ॥ ४३ ॥ (ह॰)

शास्त्रात् विप्रयोगस्तत्र शास्त्रेण तत्र शब्दस्यामञ्जस्यं व्रतदुहो विप्रयोगः कृतः घृतव्रती भवत इति। एकद्रव्य चिकीर्षायां यजमानस्य व्रतयुक्तामाशिरे दुहन्तीति कृतपित्रे चोदकेन प्राप्यते तच्चासम्भवान्निवर्त्तते। आशिरञ्च गां प्रयुङ्क्ते। तस्मात्तत्र शब्दासामञ्जस्यमनुरुध्यते। अथेहापूर्वोऽर्थो नान्यतः प्राप्यते। यज्ञपात्रैश्च दाहो अविशेषेण प्रत्यक्षश्रुतः। सम्भवति च तेषां सम्पादनं धारणेन। तस्मादिहाकस्मिकं शब्दस्यासामञ्जस्याश्रयणं भवतीति धारणमेव पात्राणामेव स्थितमपर्य्यवसितम्।

अन्तरा चिन्तान्तरं क्रियते। यज्ञपात्राणि धारयितव्यानीत्युक्तं तत्र चिन्त्यते किं पौर्णमास्या आरभ्य धारयितव्यान्युताग्न्याधेयादीनीति। किं प्राप्तम्?

———

पात्रधारणाधिकरणम् ।

## प्रकृत्यर्थत्वात् पौर्णमास्याः क्रियेरन् ॥४४॥ (पू०)

पौर्णमास्या आरभ्य धारयितव्यानीति कुतः प्रकृत्यर्थत्वात् । इमानि पात्राणि अनारभ्योक्तत्वाद्दर्शपूर्णमासार्थानि । तत्रैषामुत्पत्तिः उत्पत्तिप्रभृति च धारणम् । तस्मात् पौर्णमास्या आरभ्य धारयितव्यानि ।

## अग्न्याधेये वा विप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥ ४५ ॥ (सि०)

न वा पौर्णमास्या आरभ्य धारणं किं तर्ह्यग्न्याधेयात् । कुतोऽविप्रतिषेधात् । यद्यपि पौर्णमास्यां विहितानि चोदकेन पवमानहविःषु प्राप्तानि ततश्च प्रभृतिधार्यमाणेषु विप्रतिषेधो भवति मरणस्यानिमित्तत्वात् । पौर्णमास्या यदि मरणमापद्येत यजमानशरीरसंस्कारलोपो भवति । आधानाच्चारभ्य धार्यमाणेष्वविप्रतिषेधो भवति तस्मादाधानादारभ्य धारणम् ।

## प्रतिपत्तिर्वार्थयान्येषाम् ॥ ४६ ॥ (यु०)

स्थितादुत्तरम् । यदुक्तं पात्रैरर्थः क्रियते यजमानस्य संस्कार इति । तत्र किं तर्हि प्रतिपत्तिरेषां पात्राणामग्नीनां च यजमानशरीरे । कथम् । यथान्येषां द्रव्याणां सोमलिप्तानां प्रतिपत्तिः तद्वत्तुल्यो हेतुः तान्यपि नानाकर्मरूपयुक्तानि प्रतिपादनार्हाणि इमान्यपि पात्राण्यग्न-

यस्य तथैव। तस्मात्तेषामपि प्रतिपत्तिः। ननु तृतीया-संयोग उभयत्र विद्यते। न खलु। यजमानशरीरेऽग्नीनां पात्राणां च निक्षेपणं प्रतिपत्तिः न दहनमाहिताग्नेर्दहने च तृतीया तत्र तेषां गुणभाव एव तैर्हि तत् साध्यते। निक्षेपणे तु द्वितीयैव यथा दक्षिणे पाणौ जुहूमासादयति।

---

सोमप्रचाराधिकरणम्।

## उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति ॥ ४७ ॥ (पू० सि०)

तत्र सर्वेषामविशेषादर्वाचो हि प्रकृतिकालः। वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति। तत्र विचार्य्यते किमार्भवकाले प्रचरितव्यमुत शस्त्रवतां सोमानामुपरिष्टादुत विकारस्थाने अथवा सर्वसोमानामुपरिष्टादिति किं प्राप्तमार्भवकाल इति कुतः? प्रकृतावार्भवकाले प्रचारो वृत्तः प्रकृतिवदिहापि तत्रैव कर्त्तव्यः। एवं च अङ्गविपर्य्यासो न कृतो भवति। यदि सर्वसोमानामुपरिष्टात् प्रचारः क्रियेत तत आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति प्रहृत्य परिधीन् हारियोजनमिति एतदुभयमपि विपर्य्यस्येतनाग्निमारुतादूर्ध्वमनुयाजैश्चर्य्येत। हुत्वा च हारियोजनं परिधयः प्रक्रियेरन् सोऽयमङ्गानां विपर्य्यासो विना वचनेन क्रियेत।

अथ त्वाभिंवकाले प्रचारस्ततो नैष दोषो भवति। एवं प्राप्त उच्यते उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीत्युक्ते सर्वसोमानामुपरिष्टात् प्रचर्येत। कुतः अविशेषात्। सोमानामित्युक्ते सर्वसोमानामविशेषवचनात् प्रतीयते। यस्त्वाभिंवकालः प्रकृतितः प्राप्यत इति वाच्यो हि प्रकृति-कालश्चोदकेनैव प्राप्तस्तदर्थो विधिः कृतकरोऽनर्थकः स्यात् तस्मात् सर्वसोमानामुपरिष्टात् प्रचारः।

## अङ्गविपर्यासो विनावचनादिति चेत् ॥ ४८ ॥

(आ०)

अथ यदुक्तमेवं सत्यङ्गविपर्य्यासो विना वचनेन कृतो भविष्यतीति तस्य कः परिहार इत्याभाषान्तं सूत्रम्।

## उत्कर्षः संयोगात् कालमात्रमितरच्च ॥ ४९ ॥

(आ० नि०)

नैष दोषो युक्तमङ्गविपर्य्यास इति। कथं कृत्वा। पशुप्रचारे तावदुत्कृष्यमाणे अनुयाजानां परिधिप्रहरणस्य चोत्कर्षो न्याय्यः संयोगात्। तानि हि पशुप्रचारेण क्रमतः संयुक्तानि न चाग्निमारुतस्यानुयाजैः सहहारि-योजनस्य वा परिधिप्रहरणेन क्रमो विवक्षितः। न हि परिधिप्रहरणम्। हारियोजनस्याङ्गं हारियोजनं वा परिधिप्रहरणस्य उभौ वा कस्यचिदेकस्य प्रधानस्य। एवमाग्निमारुतमनुयाजयोश्च। यदि परस्परस्याङ्गभूतानि

भवेयुः एकस्य वा प्रधानस्य तत एतेन क्रमेणोपकुर्वतीति विविचितः क्रमः स्यात्। अथ पुनः पशोरङ्गमनुयाजा आग्निमारुतं सोमस्य तथा परिधिप्रहरणं पशोरङ्गं हारियोजनः सोमेज्यातेषां क्रमोनिःप्रयोजनः। तस्माद-विवक्षितः। कालमात्रमितरच्च आग्निमारुतादूर्ध्वमनु-याजैश्चरन्तीति परिव्रज्य परिधीन् जुहोति हारियोजन-मिति एतस्मिन् काल इति लक्षणमाग्निमारुतं परिधि-प्रहरणं च। अनपेतश्च लक्षणायायेकाला यथाग्निहोत्र-वेलायामागन्तव्यमिति यत्राग्निहोत्रं नास्ति तत्राप्यनपेता वेला न चैवं लक्षणा भवति। न हि काल एवेह श्रुत्यर्थः क्वा तावत् पूर्वकाल एव स्मर्यते। ऊर्द्धशब्दोऽपि देशं कालं वा ब्रूयात्। देशस्या सम्भवात् कालार्थो विज्ञायते।

## प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ॥५०॥ (आ०)

इति चेत् पश्यसि सर्वसोमानामुपरिष्टात् प्रचार इति नैतद्युक्तम्। शस्त्रवतां सोमानामुपरिष्टात् प्रचारो युक्तः। कुतः। प्रकृतिकालासत्तेः एवं प्राकृतस्यासत्त्याः क्रतः प्रचारो भविष्यति अङ्गविपर्य्यासश्चा कस्मान्न क्रतो भवि-ष्यति। अथ कतमोऽसौ कालः तार्त्तीयसवनिकस्य वैश्व-देवस्य यदूर्ध्वम्।

## न श्रुतिप्रतिषेधात् ॥ ५१ ॥ (आ० नि०)

एवं सत्युपरिष्टात् सोमानामित्यविशेष श्रुतिर्विप्रति-षिध्यते केषाञ्चित् सोमानामधस्तादयं प्रचारः स्यात्। न चासत्त्या प्राकृतः कालो लभ्यते।

## विकारस्थाने इति चेत् ॥ ५२ ॥ (आ०)

इति चेत् पश्यसि अस्त्रवतामुपरि प्रचारोऽयुक्त इति विकारस्थाने भवतु। कतमत्पुनर्विकारस्थानं उक्थ्याद्याः संस्था अग्निष्टोमसंस्थाया विकारः तासां यत् स्थानमग्निष्टोमप्रचारादूर्ध्वं तत्र प्रचारो भवतु ऊर्ध्वं सर्वेषामागन्तूनां प्रचाराणां स्थानम्। अयमपि चागन्तुः। तस्मादयमपि तत्रैव भवति।

## न चोदनापृथक्त्वात् ॥ ५३ ॥(आ०नि०)

नैतदेव कस्मात् चोदनापृथक्त्वात् कर्मपृथक्त्वादित्यर्थः। पृथगेते कर्मणी यच्च सौमिकं यच्च पाशुकं सौमिकानां प्रचाराणामेतत् स्थानं न पाशुकानाम्। तस्मादेतस्य वचनात् सर्वसोमानामुपरिष्टात् स्थानम्।

---

सूक्तवाकाधिकरणम्।

## उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः-पशुवनङ्गत्वाद्यथानिष्कर्षेनान्वयः ॥ ५४ ॥ (पू०)

अनुयाजा उत्कृष्यमाणाः सूक्तवाकमप्युत्कर्षन्ति। तत्र सवनीयानां पुरोडाशानां देवताः संकीर्त्यन्ते भृज्यन्निन्द्राय-हरिवतेधानाः पूष एव ते करम्भमित्यारभ्य। तासामुत्कर्षो नेति सन्देहः। किं प्राप्तम् उत्कर्षे सूक्तवाकस्य

न सवनीयदेवतानामुत्कर्षः कुतः। पश्वनङ्गत्वात्। अनुयाजा पशोरङ्गमुत्क्रष्यमाणाः पश्वङ्गमेवोत्क्रष्टुमर्हन्ति न सोमाङ्गं सोमाङ्गं च सवनीयदेवताः। तस्मात् तासामनुत्कर्षः। यथा निष्कर्षेऽनन्वयः। यथा पौर्णमास्यां सूक्तवाकस्य प्रयोगे पूर्णमासीदेवतानां निष्कर्षेऽमावास्यादेवतानामन्वयः। इतरत्र चेतसाम्। तत् कस्य हेतोः इतरेतरस्यानङ्गत्वात् तद्वदिहाप्यनुत्कर्षः।

## वाक्यसंयोगाद् वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ५५ ॥ (सि०)

अथ वा उत्कर्ष एव न्याय्यः। कुतः वाक्यसंयोगात्। सूक्तवाकस्यैकदेशभूतानि सौमिकदेवता संकीर्त्तनानि भज्यन्निन्द्राय हरिवते धाना पूष एव ते करम्भं सरस्वतीवते परिवापम् अयं यजमान इति सम्बध्यते। तथा इन्द्राय हरिवते धानाभिः पूष एव ते करम्भेण सरस्वतीवते परिवापेण सूपस्था अद्य देवो वनस्पतिरभवदिति सम्बध्यते। तान्येतानि सूक्तवाकस्य मध्य उच्यमानान्यर्थवन्ति निष्कृष्टानि केवलान्यार्थकानि भवन्ति। न च सवनीयानां सूक्तवाकोऽस्ति यत्रैतान्युच्चार्येरन्। पाशुक एव सूक्तवाकस्तेषां प्रसङ्गसिद्धः। अतस्तत्र एतद्देवतानां संकीर्त्तनं युक्तं स चोत्कृष्यते तस्मात्तासामप्युत्कर्षः आर्षं चैवमनुग्रहीष्यते। यत्तु यथा निष्कर्षेऽनन्वय इति समानतन्त्रत्वादर्थलोपादनन्वयः। समानतन्त्रौ दर्शपूर्णमासौ। तयोः साधारणं सूक्तवाकाम्नानं तद्यथार्थं निविशते।

अर्थलुप्तं चामावास्यादेवतानां पौर्णमास्यां संकीर्त्तनमितरासां चेतरत्र यत्कारणं या दृष्टादेवतास्ताः संकीर्त्तनेन प्रत्यवेक्ष्यन्ते इयमपीष्टा न काचिदन्तरितेति । तस्माद्यथा निष्कर्षेऽनन्वय इत्यदृष्टान्तः ।

इति श्री शबरस्वामिनः कृतौ मीमांसाभाष्ये एकादशाध्यायस्य तृतीयः पादः ॥



---

## अथ मीमांसा-दर्शने

### एकादशाध्यायस्य चतुर्थः पादः ।

अङ्गतन्त्रताधिकरणम् ।

**चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥ (१ पू०)**

राजसूये यान्यनुक्तदेशकालानि प्रधानानि यथा त्रिसंयुक्ते द्वे एवमादि चिन्त्यते किं तत्राङ्गानां तन्त्रभाव उतभेद इति किं प्राप्तं राजसूयेऽनुक्तदेशकालानां प्रधानानामङ्गानि कुतः समवायात् फलनिवर्त्तने तेषां समवायः समेत्यैतानि फलं साधयन्ति नैकशः कथं ज्ञायते चोदनैकत्वात् । राजसूयेनेत्येकवचनान्ते तैन शब्देन तानि प्रधानान्युक्ता फलसम्बन्धः कृतः । तस्मात् समुदायः फलवान् । यच्च फलवत्तच्चिकीर्षितम् । तदर्थैतिकर्त्तव्यता इति कर्त्तव्यता चाङ्गाति तस्मात् तन्त्रम् ।

प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥ (सि०)

न चैतदेवं तन्त्रमङ्गानीति। किं तर्हि भेदेन कुतः? प्रतिदक्षिणं कर्तृसम्बन्धात्। एतेषु कर्मसु दक्षिणाभेदः श्रूयते "आग्नावैष्णव एकादशकपाल ऐन्द्रावैष्णवश्चरुः वैष्णवस्त्रिकपालो वामनो दक्षिणा। सोमापौष्णा एकादशकपालः ऐन्द्रापौष्णश्चरुः पौष्णश्चरुः श्यामो दक्षिणेति" दक्षिणाभेदात् प्रतिदक्षिणं कर्तृसम्बन्धो भवति। वामनक्रीताः पूर्वस्य त्रिसंयुक्तस्य कर्त्तारः अनङ्गमुत्तरस्य त्रिसंयुक्तस्य श्यामपरिक्रीता उत्तरस्य त्रिसंयुक्तस्य कर्त्तारस्तेऽप्यनङ्गं पूर्वस्यातः कर्तृभेदादङ्गभेदः। इष्टिवत् तद्यथा पौर्णमासकालान्यङ्गानि कालभेदान्न दर्शस्योपकुर्वन्ति। एवमिहापि कर्तृभेदान्न परस्परस्य। तस्माद्भेदेन कर्त्तव्यानीति। यत्तु चोदनैकत्वादुत्तरस्यापि समुदायो विवक्षित इति उच्यते (समुदायो हि तन्निर्वृत्त्या) समुदायः फलनिष्पत्त्या विवक्षितः तदेकत्वात् फलैकत्वात् सह वचनं न प्रयोगैकत्वादिष्टिवत्। तद्यथा दर्शपूर्णमासयोः प्रयोगभेदेऽपि फलैकत्वात् समासवचनं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति।

तथा चान्यार्थदर्शनम् ॥ ३ ॥ (हे०)

अन्यार्थोऽप्येतमर्थं दर्शयति पूर्वं त्रिसंयुक्तमुत्तरं त्रि-

संयुक्तमिति । तत्र भेदे हि पौर्वापर्य्यं स्यात् । नन्वेकतन्त्रत्वेऽपि प्रधानापेक्षं पौर्वापर्य्यं भवेत् । नैवमेतद्वाक्यशेषेण तु विज्ञायते साङ्गयोः प्रधानयोरेतत्पौर्वापर्य्यमिति । एवं ह्याह यत्पूर्वं त्रिसंयुक्तं वीरजननं तद्यदुत्तरं त्रिसंयुक्तं पशुजननं तदिति । फलसम्बन्धश्च साङ्गयोर्भवति न केवलयोस्तस्माद्दर्शनमेवैतत् ।

---

उपक्रमे वृत कर्त्तृ नियमाधिकरणम् ।

## अनियमः स्यादिति चेत् ॥ ४ ॥ ( पू० )

तत्रैव विचार्य्यते किमुपक्रमे ये कर्त्तारस्त एवान्ताद् उत अनियमः ते वान्ये वेति । किं प्राप्तम् ? । अनियमः स्यादिति चेत् । इति चेत् पश्यसि प्रतिदक्षिणं कर्तृसम्बन्ध इति अनियमः पवित्रदक्षिणाभिर्ये परिक्रीताः पवित्रार्थास्ते भवन्ति पवित्रान्ते एतेषामपवर्गः उत्तरे कर्म्मणि यथा कामिते वान्ये वा स्युः तस्मादनियमः ।

## नोपदिष्टत्वात् ॥ ५ ॥ ( सि० )

नैतदेवं युक्तमनियम इति किं तर्हि य एव प्रक्रमे त एव अन्ते स्युः । कस्मादुपदिष्टत्वात् । आदावेव वरणकाले यजमानेन तेषामुपदिष्टम् अनेन मां राजसूयसंज्ञकेन कर्मसमुदायेन याजयेतेति । वरणञ्च प्राक् कर्मप्रवृत्तेः तदवक्ष्यमाणविशेषत्वात् तन्त्रान्तेनानताः सर्वार्था भवन्ति । आह यदि सर्वमुद्दिश्य व्रियन्ते तत एवम् । अथ पूर्वमवयवं

पवित्रमुद्दिश्य ततो न सर्वार्थास्तदर्था एव भवन्ति, किं पुनश्च युक्तम्। समुदायमुद्दिश्येति। तथा सति अविघ्नेन कर्त्तुः कर्म निर्वर्त्तते। इतरथा पवित्रान्ते उत्तरस्मिन् कर्मणि त एव कामतो न संप्रवर्त्तेरन् अन्ये च कर्त्तारो नोपपद्येरन् कर्मविघ्नः स्यात् कालातिपत्तिश्च। एवं च सति लाघवं भवति इतरथा प्रतिकर्मोपादानं तद्गुरुः स्यात्। ऋत्विग्याज्ययोश्चाव्यभिचारी धर्मस्तस्मात् समुदायमुद्दिश्य क्रियन्ते तथा च तन्त्रम्।

## प्रयोजनैकत्वात् ॥ ६ ॥ (हे॰)

एकञ्च प्रयोजनमवयवदक्षिणानामपि समुदायसम्पत्तिः न ह्यवयवेन केवलेन कृतेन कश्चिदर्थोऽवयवैः समुदायः सम्पादयितव्य इति अवयवे परिक्रीयते। तेषां समुदायसम्पत्तौ कृतार्थत्वम्। तस्मात् त एव कर्त्तारः आन्तात् स्युः, आह यदि समुदायसम्पत्त्यै अवयवशः परिक्रयः सकृदेव कर्त्तव्यः किं पुनरावृत्त्येत्युच्यते।

## अविशेषार्था पुनः श्रुतिः ॥ ७ ॥ (हे॰)

उभयथा परिक्रये प्राप्ते सकृद्वा प्रत्यवयवं वा परिक्रयविशेषो नियम्यते प्रत्यवयवं कर्त्तव्यः द्रव्यसंख्यानियमेन च वामनो दक्षिणा अयुतमभिषेचनीये ददातीत्येवं क्रियमाणमभ्युदयकारि भवतीति।

——

अवेष्टावङ्गानां भेदेनानुष्ठानाधिकरणम् ।

## अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् वचनात् कामसंयोगेन ॥ ८ ॥ (पू०)

तस्मिन्नेव राजसूये अवेष्टिः आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणेत्याम्नाता। तस्यां चिन्त्यते किमङ्गानां भेदोऽथ तन्त्रभाव इति। किं प्राप्तम्? । अवेष्टौ चैकतन्त्र्यं स्यात्। तन्त्रता-लिङ्गदर्शनात्। लिङ्गं हि तन्त्रभावस्य सूचकं दृश्यते यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वाभि-घारयेत् यदि, राजन्य ऐन्द्रमिति, यदि वैश्यो वैश्वदेवम्, समस्ते च हविषां मध्ये निधानमुपपद्यते। एकतन्त्रे च सामस्त्यं तस्मादेकतन्त्रम्। ननु लिङ्गमुपदिश्यते कुतः प्राप्तिः। सह चोदनया प्राप्तिः। अथैतां दिशामवेष्टिं यः इमं वा अथ तं लोकं पुनरुपावरोहन्तीति। अवेष्टिरिति चैक-वच्छ्रुतेः। एतयैवान्नाद्यकामं याजयेदिति वचनात् कामसंयोगेन। न वा तन्त्रभावः। कुतः। उक्तो न्यायः प्रतिदक्षिणं वा कर्तृसम्बन्धः स्यादिति। लिङ्गदर्शना-दिति यदुक्तम्। तत्र ब्रूमः। वचनादिति कामसंयोगे-नापि श्रूयते। एतयैवान्नाद्यकामं याजयेदिति तत्रैतद्दर्शनं न च तत्र दक्षिणाभेदो न हि राजसूयिक्यो दक्षिणास्तत्र प्राप्स्यन्ते। एतयैवान्नाद्यकामं याजयेदिति एकवचना-न्तेन शब्देन फलं प्रति निर्देशात् सह प्रयोग एव तत्रैतद्दर्शन-मुपपद्यते। तस्मात्तदपेक्षमेतत्।

## क्रत्वर्थायामितिचेन्न वर्णसंयोगात् ॥ ९ ॥
## ( आ० नि० )

अथ पश्यसि क्रत्वर्थायामेवैतद्दर्शनं भवतु एवं प्रकृतशेषत्वं भविष्यतीति । तच्च न, कुतः । वर्णसंयोगात् । यदि ब्राह्मणो यजेत यदि वैश्य इति । न च क्रतौ ब्राह्मणवैश्यौ स्तः राजन्यस्यैव राजसूयः राजा राजसूयेनेति वचनात् । तस्मादक्रत्वर्थायामेतद्दर्शनम् ।

---

काम्यपवमानेष्टिभेदाधिकरणम् ।

## पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १० ॥ (पू०)

आधाने पवमानेष्टयः । अग्नये पवमानाष्टाकपालं निर्वपति । अग्नये पावकायाग्नये शुचय इति तत्र विचार्य्यते किमासामैकतन्त्र्यं भेदो वा इति किं प्राप्तम् । पवमानहविःष्वैकतन्त्र्यं स्यात् । कुतः प्रयोगवचनैकत्वात् । एक आसां प्रयोगवचनः अङ्गानिकुर्य्याणीति । प्रयोगवचनैकत्वात् सहप्रयोगः । तत्र न गृह्यते विशेषः तस्मादैकतन्त्र्यम् ।

## लिङ्गदर्शनाच्च ॥ ११ ॥ (हे०)

लिङ्गं च सह प्रयोगं दर्शयति समानबर्हींषि भवन्तीति । अनुवादोऽयम् ।

## वर्त्तमानापदेशाद्वचनात्तु तन्त्रभेदः स्यात् ॥ १२ ॥ ( सि० )

न चैकतन्त्रं स्यात्। किं तर्हि तन्त्रभेदः। स च भवन्नेवं प्रथमायां भेदः उत्तरयोस्तन्त्रं कस्मात् वचनात् वचनमिदं भवति अथ यः कामयेत वर्षीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरूप्य अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्तदेनमग्रहीत्तेन स उत्तरं वर्षीयान् श्रेयान् भवतीति। किमिव वचनं न कुर्यान्नास्ति वचनस्यातिभारः। तस्मादेवं कर्त्तव्यम्। अथ यदुक्तं प्रयोगवचनैकत्वादिति। तस्य कः परिहारः। नासौ प्रयोगवचनः कालवचनोऽसावङ्गानिरूप्याणीति तस्मादहेतुः स भवति।

## सहत्वे नित्यानुवादः स्यात् ॥१२॥ (आ०नि०)

यच्चोक्तं समानबर्हींषि भवन्तीति समानप्रयोगं दर्शयतीति तत्र ब्रूमः सहत्वे नित्यानुवादः स्यात्। इदमपरं श्रूयते। यो ब्रह्मवर्चसकामः स्यात् तस्य सर्वाणि हवींषि निरूप्याणीति। तस्य सह प्रयोगो भवति तस्मिन् सहत्वे नित्यानुवादोऽयं स्यात् समानबर्हींषि भवन्तीति किं पुनर्निरूप्याणीत्युक्ते सहप्रयोगो गम्यते निरूप्याणीति बहुत्व युक्तः प्रयोगो विज्ञायते। तच्च बहुत्वमुपादेयत्वेन चोदितानां विवक्षितं न चैकशः प्रयोगो बहुसंयुक्तः प्रयोगो भवति। तस्मात् सहप्रयोगो विज्ञायते।

द्वादशाहे दीक्षाद्यधिकरणम्।

द्वादशाहेन प्रजाकामं याजयेदिति श्रूयते तत्र विचार्यते। किमेकैकशः पृथक् पृथग्दीक्षोपसदेनाहः सम्पाद्य द्वादश पञ्चविंशतिरात्राः कर्त्तव्याः अथ वा द्वादश साद्यस्क्राः

अथ वा चतुरहे दीक्षाश्चतुरहे उपसदः चतुरहे सुत्याः अथ वा स्वस्थानानां दीक्षोपसत्सुत्यानां विवृद्धिरिति किं प्राप्तं तत् सूत्रेणैवप्रक्रमः।

## द्वादशाहे तु प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥१४॥ (१पू०)

एकैकं सदीक्षोपसदमहरहरपवृज्येत द्वादश पञ्चविंशतिरात्राः कर्त्तव्याः। कुतः। तत्प्रकृतित्वात्। स दीक्षोपसदमहरपवर्जितं ज्योतिष्टोमे यतस्तत् प्रकृतीन्येतानि द्वादशाहानि पृथग्भूतानि कर्माणि पृथक्त्वेनैव धर्मानाकाङ्क्षन्ति तस्मात् ज्योतिष्टोमवत् सदीक्षोपसदमेकैकमहः कर्त्तव्यमिति।

## अङ्गं चाश्रुतिभूतत्वात् तच्च साङ्गं क्रियेत यथा माध्यन्दिने ॥१५॥ (२पू०)

न चैतदस्ति यदुक्तं द्वादश पञ्चविंशतिरात्राः कर्त्तव्या इति। किं तर्हि द्वादश साद्यस्क्राः कार्य्याः किं कारणमङ्गं श्रुतिभूतत्वात् द्वादशाहेनेति द्वादशसंख्याङ्गं प्रत्यक्षभूता सा बाध्येत यदि द्वादश पञ्चविंशतिरात्राः क्रियेरन्। तस्माद् द्वादशस्वहःस्वेकैकं प्रधानं प्रयुज्येत। प्रधानकालत्वाच्चाङ्गानां तत्कालं तदीयं दीक्षोपसदं यथा माध्यन्दिने। तद्यथा सान्तपनीयस्य माध्यन्दिने निरूप्यता इति वचनान्मध्यन्दिनकालान्येवाङ्गानि भवन्त्येवमिहापि तस्माद् द्वादश साद्यस्क्राः कर्त्तव्याः।

**अपि वा फलकर्तृसम्बन्धात् सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥१६॥ (३पू०)**

अपि च नैवं स्याद् द्वादश साद्यस्क्रा इति कथं तर्हि सहप्रयोगः स्यात्। चतुरहे दीक्षाश्चतुरहे उपसदश्चतुरहे सुत्याः। कुतः? फलकर्तृसम्बन्धात्। फले कर्तृषु चैतेषां प्रधानकर्मणां समितानां सम्बन्धो द्वादशाहशब्देन समुदायवचनेन संयोगात् फले सम्बन्धः सत्रे स्वयंकर्तृत्वादहीने च दक्षिणैक्यात् कर्तृषु चैकफलत्वादेककर्तृत्वाच्च सहप्रयोगो भवति आग्नेयाग्नीषोमीयवत्। यथाग्नेयाग्नीषोमीययोरेकफलत्वादेककर्तृत्वाच्च सहप्रयोगो भवति। सहप्रयोगे च विशेषाग्रहणात्तन्त्वं दीक्षोपसदं द्वादशाहश्रुतिश्चानुग्राह्या। तदुभयमेवमुपपादितं भवति सहप्रयोगोऽहःसंख्या च तस्मादेष पक्षः श्रेयान्।

**साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ १७॥ (सि०)**

अथ चैतदपि न युक्तं कुतः साङ्गकालश्रुतित्वात्। यद्यत्र प्रधानानामेव कालश्रुतिः स्यान्नाङ्गानां तत एवं स्यात्। अत्र तु साङ्गानां कालः श्रुतो द्वादश दीक्षा द्वादशोपसद इति दीक्षाणामुपसदां च पृथक् पृथक् कालः श्रुतः। यदि चतुरहे क्रियेत ततो बाध्येत। तस्मात् स्वस्थानानां विवृद्धिः। तदपेक्षं च द्वादशत्वम्। दीक्षोपसत्सुत्यापेक्षं प्रथमं दीक्षास्तासां तत्रैव द्वादशत्वं तत

उपसदस्तासामपि तद्देशानामेवान्ते सुत्या तस्या अपि तत् स्थानाया एव वृद्धिः। तदपेक्षं द्वादशत्वम्।

**दीक्षोपसदां च संख्या पृथक् पृथक् प्रत्यक्षसंयोगात् ॥१८॥ (हे०)**

अपि च द्वादशाहेन प्रजाकामं याजयेदित्युक्त्वा तिस्रो दीक्षास्तिस्र उपसद इत्यनुक्रान्तानि। तस्मादपि तदपेक्षा द्वादशसंख्या।

**वसतीवरीपर्य्यन्तानि पूर्वाणि तन्त्रमनारकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् ॥ १९ ॥ (हे०)**

एवं वसतीवरीपर्य्यन्तानि पूर्वाण्यन्यकालत्वादगृह्यमाण विशेषाणि तन्त्रं भवति अवभृथादीनि चोत्तराणि तस्यावभृथस्य दीक्षाविसर्गार्थत्वात्। स हि दीक्षामोचनार्थः। एवं ह्याह अप्सु दीक्षां प्रवेशयित्वा देवाः स्वर्गंलोकमायन् यदप्सु स्नान्ति तामेव दीक्षामालभते अथ यदपोऽवभृथमभ्यवयन्ति तामेव दीक्षां पुनरप्सु प्रवेशयन्तीति तन्त्रं च दीक्षोत्पन्ना सा तन्त्रमेवोत्स्रक्ष्यति विशेषाग्रहणात्।

**तथा चान्यार्थदर्शनम् ॥२०॥ (उदा०)**

एवं च सत्यन्यार्थदर्शनम् इदं युक्तं भविष्यति षड्विंशदहो वा एष द्वादशाह इति।

**चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥२१॥ (पू०आ०नि०)**

यथाग्नेयाग्नीषोमीयवदिति। युक्तं यदाग्नेयाग्नीषोमीययोश्चोदनापृथक्त्वेऽप्येकतन्त्रं सहप्रयोगः कुतः समवेतानां कालसंयोगात् समवेतानां अङ्गप्रधानानां कालसंयोगात् पौर्णमास्यां पौर्णमास्या यजेत साङ्गयेति। तस्मात्तन्त्रं पौर्णमास्यामिवाङ्गानि च प्रधानानि च क्रियन्ते। इह पुनः साङ्गकालश्रुतित्वादित्येवमपदिष्टो हेतुः। तस्मादत्र द्वादशाहेऽङ्गप्रधानानि पौर्णमासीवत् सह कार्य्याणि।

प्रधानापृथक्कालाङ्गानां भेदेनानुष्ठानाधिकरणम्।

अथ यानि प्रधानैरपृथक्कालान्यङ्गानि तेषु चिन्त्यते किं तान्यपि तन्त्रम्। अथ वा भेदेनेति। किं प्राप्तम्?। तन्त्रमिति। किं कारणम् एवं अहत्वस्य वक्ता प्रयोगवचनोऽनुग्रहीष्यते द्वादशाहेन प्रजाकामं याजयेदिति। तदुक्तं विधिवत् प्रकरणाविभागे प्रयोगं बादरायण इत्येवं प्राप्ते ब्रूमः।

## भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात् ॥२२॥ (सि०)

भेदस्तु स्यात् कुतः तद्भेदात्। तदित्यनेन पूर्वसूत्रनिर्दिष्टः कालः प्रतिनिर्दिश्यते। कालभेदात् काले भिद्यमाने तन्त्रभेदो भवति यथा दर्शे पूर्णमासेऽपि। इहापि कालभेदः अद्य श्वः परश्व इति। तत इहापि कर्मभेदः स्यात् कारणभेद इत्यर्थः। कथं पुनरङ्गानां काल

भेदो विज्ञायते। तेषां प्रधानशब्दत्वात्। प्रधानशब्द-गृहीतान्यङ्गानि यत्र प्रधानं तत्र विज्ञायन्ते। यद्यप्रधानं तस्याद्यकालान्यङ्गानि। यत् श्वस्तस्य श्वःकालानि तस्माद्भेदः।

तथा चान्यार्थदर्शनम् ॥॥२३॥ (हे०)

पत्नीसंयाजान्तान्यहानि सन्तिष्ठत इति भेदेनाङ्गां पत्नीसंयाजान्ततां दर्शयति।

श्वासुत्या वचनं तद्वत् ॥२४॥ (उदा०)

संस्थिते संस्थिते अन्यदग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति प्रेष्यतीति संस्थिते संस्थित इति वीप्सावचनात् सुब्रह्मण्याभेदं दर्शयति।

पश्वतिरेकश्च ॥२५॥ (हे०)

पश्वतिरेकश्च दृश्यते य एकः पशुरतिरिच्यते स ऐन्द्राग्नः कार्य्यः। न तावदतिरिच्यते एको न भवति एकादशैते पशवो द्वादशाहानि। तत्पश्वालम्भभेद उपपद्यते। तत्त्व-भावे सकृदेवैकादशिनानालभेत तस्मादपि भेदः।

---

ऊहरूप तन्त्रवापाधिकरणम्।

सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥२६॥ (पू०)

उपसत्कालं सुब्रह्मण्याह्वाने चतुरहे सुत्यामागच्छे मघवन्निति। द्वादशाहे चोदकेन प्राप्यते। तत्रेदं विचा

ध्येति। द्वादशाहे सुत्याहान्युपलक्षयितव्यानि उताविका-रेणैव प्रयोगः कर्त्तव्य इति। किं प्राप्तम्?। सुत्याविवृद्धा-वेतस्यां सर्वेषामह्नाम् उपलक्षणं कर्त्तव्यं कुतः?। प्रकृत्य-न्वयात्। प्रकृतौ सौत्यमहरुपलक्षितम्। सर्वाणि चैतानि तत्प्रकृतीनि। अतः सर्वाण्युपलक्षणीयानि। नन्वेकैवासौ देवता इन्द्रः सकृदुपलक्षणेन संस्कृतः संस्कृत एव। तस्य पुनरुपलक्षणमनर्थकमित्युच्यते। आद्योपलक्षणकृतः सं-स्कारः सोऽद्यतनस्य प्रधानस्याङ्गम्। तस्मादुत्तरार्थं पुनः पुनरुपलक्षयितव्यः। आवाहनवत्, तद् यथाग्नेयं कृष्ण-ग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायस्य-इमान इति एकत्वेऽप्यग्नेर्दैवतायाः कर्म्मभेदाद्भेदेनाङ्गानि क्रियन्ते। एवमिहापि॥

## अपि वेन्द्राभिधानत्वात् सकृत् स्यादुपलक्षणं कालस्य लक्षणार्थत्वात्॥२७॥ (सि०)

अपि वा न स्यात् सर्वेषामुपलक्षणम् अविकारेणैव प्रयोगः स्यात्। कुतः? इन्द्राभिधानात्। इन्द्रोऽत्रोपलक्ष-णेन संस्क्रियते स सकृत् संस्कृतः संस्कृत एव न पुनः सं-स्कर्त्तव्यः। ननु चतुरहेऽसौ संस्कृतश्चतुरहे सुत्यामागच्छेति वचनात्। अविवक्षितोऽत्र काल इन्द्र आगच्छेत्येतावदेव विवक्षितम्। विवक्षिते सति काले वाक्यं भिद्यते आगच्छ-मघवन् चतुरह आगच्छेति सकृदुच्चरितागच्छेति विभक्ति-रुभौ सम्बन्धौ न शक्नोति वदितुम्। अथ कस्मादिन्द्रागमन-सम्बन्धो विवक्षितो न पुनः कालाभिसम्बन्धः। आगच्छ-

मवत्रनिति प्रत्यक्षः संयोगः। चतुरह आगच्छेति परोक्षः सुत्याशब्देन व्यवायात्। ननु च सुत्यामागच्छेत्यपि सविवक्षितो भवतु नैवं कश्चिद्विरोधः। सुत्यात्वस्याविशेषात्। ननु चतुरह इति सुत्याविशेषोऽवगम्यते। न खलु, किं कारणं कालस्य लक्षणार्थत्वात्। चतुरहकालोऽत्र सुत्यालक्षणार्थः चतुरहादिसुत्यामागच्छेति। यत्कारणं नात्र देवतागच्छति यजतौ तूद्देशेन केवलमङ्गी भवति। स यजतावङ्गभावोऽयमुपलच्यते। सर्वसुत्यासु चासौ तुल्यः। तत्र चतुरहवचनं प्रदर्शनं मुख्यत्वात् मुख्येन हि प्रदर्शनं भवति यथा इडान्तातिथ्या संतिष्ठते नानुयाजान् यजतीति।

अविभागाच्च ॥२८॥ (हे॰)

अथ यदुक्तमावाहनवदिति तत्र ब्रूमः विभक्तः कालः कृष्णग्रीवयोः सौम्येन व्यवायात् तत्र गृह्यते विशेषः। पूर्वस्य कृष्णग्रीवस्यैतद्देवतावाहनं नोत्तरस्येति। अथेह विभक्तकालाः सुत्या अव्यवेताः केनचित्तासु न गृह्यते विशेषः। चतुरहग्रहणं वा विशेषकमित्युक्तम्। तस्मादविकारेण प्रयोगः।

---

पशौ कुम्भ्यादीनां तन्त्रताधिकरणम्।

पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्रभावः स्यात् ॥ २९ ॥ (पू॰)

वाजपेये प्राजापत्येषु पशुषु कुम्भ्याः शूलस्य वपाश्र-पण्याश्च तन्त्रभावः स्यात् विभुत्वात्। विभवत्येका कुम्भी सर्वपशूनामवदानानां श्रपणे। शूलं हृदयानां, वपाश्र-यणी वपानाम्। तस्मात्तन्त्रं स्युः।

भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥३०॥ (२पू०)

एकादशिनेषु तु भेदेन कुम्भ्यादीनि स्युः। सन्देहात्। एकस्यां कुम्भ्यां पशूनां सन्देहः स्यात्। कस्य पशोः कान्यवदानानीति। एवं हृदयादीनां वपानां च।

अर्थाद्वा लिङ्गकर्म स्यात् ॥३१॥ (३पू०)

अथ वा न स्याद्भेदः। कुतः?। सह प्रयोगात्, यत्तु सन्देहादिति अर्थाच्चिह्नं किञ्चित् करिष्यते येन विशेष-ग्रहणं भविष्यति॥

प्रतिपाद्यत्वाद्वसानां भेदः स्यात्
स्वयाज्याप्रदानत्वात् ॥३२॥ (४पू०)

कुम्भ्यास्तन्त्रभावो न घटते याज्यत्वाद्वसानाम्। याज्यार्द्धर्चान्ते वसां जुहोतीति श्रुतं प्रकृतौ तत्र स्वयाज्या-र्द्धर्चान्ते वसा हुता इहापि तथैव होतव्या। न च वसानां लिङ्गं कर्त्तुं शक्यम्॥

अपि वा प्रतिपत्तित्वात् तन्त्रं स्यात्
स्वत्वस्याश्रुतिभूतत्वात् ॥३३॥ (सि०)

अपि वा तत्त्वं कुम्भी स्यात् प्रतिपत्तित्वात् शेषभूता वसास्तासां प्रतिपत्तिरियं प्रतिपत्तिश्च द्रव्यं न प्रयोजयति कुतः तद्धारणार्थं पात्रम् अत्यन्तसंसृष्टाश्च वसास्ताः स्वयाज्यार्द्धर्चान्ते एव हुता भवन्ति । ननु परयाज्यार्द्धर्चान्तेऽपि प्रसज्यन्ते । अत्रोच्यते स्वत्वस्याश्रुतिभूतत्वात् नात्र श्रूयते स्वयाज्यार्द्धर्चान्ते होतव्या न परयाज्यार्द्धर्चान्त इति । तस्मात् परत्र होमो न दोषाय नाभ्युदयाय अतस्त्वत्त्वमेव कुम्भ्याः स्यात् ॥

## सकृदिति चेत् ॥ ३४ ॥ (आ०)

इति चेत् पश्यसि सहत्वं न श्रुतमिति तेन तर्हि सकृदेव होमः प्रथमे याज्यार्द्धर्चान्ते भवत्वेवं सहत्वं चानुग्रहीष्यते याज्यार्द्धर्चान्ते च हुतं भविष्यति । स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥

## न कालभेदात् ॥३५॥ (आ० नि०)

नैतदेवं प्रथमेऽर्द्धर्चान्त इति । किं तर्हि प्रत्यर्द्धर्चान्ते होतव्याः । कुतः कालभेदात् । भिन्ना याज्यार्द्धर्चान्ताः निमित्तसप्तमी चेयं याज्यार्द्धर्चान्त इति अधिकरणस्यासम्भवात् । निमित्तावृत्तौ च नैमित्तिकावृत्तिर्यथा भिन्ने जुहोतीति । तस्मात् सर्वयाज्यार्द्धर्चान्तेषु होमः ॥

———

पाककालभेदात् वसानां पात्रभेदाधिकरणम् ।

पक्तिभेदात् कुम्भीशूलवपाश्रपणीनां भेदः स्यात्
॥ ३६ ॥ (पू०)

अस्ति सौत्रामणी तत्राश्विनो यो धूम्रः सारस्वतो यो मेषः ऐन्द्र ऋषभ ऐन्द्रस्यैवंविधाः पशवः सन्ति । तेष्वपि तन्त्रभावः प्रभुत्वात् प्राप्तोऽपोद्यते । सौत्रामण्यामेवंजातीयेषु ॥

ज्यात्यन्तरेषु भेदः स्यात् पक्तिवैषम्यात् ॥
३६ ॥ (नि०)

एकादशिनेषु तु नानाजातीयेषु कुम्भ्यादीनां भेदः स्यात् पक्तिवैषम्यात् । विषमा हि पक्तिः आजानामाविकानाञ्च मांसानाम् । यावता कालेनाजानि पच्यन्ते तावताविकानि विलीयन्ते तत्रावदानसम्भेदो भवति । तस्मात् पात्रभेदः स्यात् ॥

वृद्धिदर्शनाच्च ॥ ३८ ॥ (हे०)

वृद्धिश्च सौत्रामण्यां शूलानाङ्गोऽजाविषु दृश्यते शूलैश्च मासरेण वावभृथमभ्यवयन्तीति । तस्मादपि भेदः ।

---

कपालभेदाधिकरणम् ।

कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ॥
३९ ॥ (पू०)

अश्वप्रतिग्रहेष्ट्यां वारुणाश्चतुष्कपालाः पुरोडाशाः अश्वसंख्याः श्रूयन्ते यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान् वारुणान्निर्वपेदिति तत्र विचार्य्यते किं दीर्घेषु कपालेषु सर्वेषां श्रपणं कर्त्तव्यम् अथ वा प्रतिपुरोडाशं कपालचतुष्कभेद इति, किं प्राप्तं कपालानि कुर्म्मीवत् यथा प्राजापत्येषु कुम्भी तन्त्रम् एवं तुल्यसंख्यानां पुरोडाशानां कपालानि तन्त्रमित्यर्थः। किं कारणमेवं सहत्वे नानुग्रहीष्यते। सर्वेषु चतुर्षु कपालेषु संस्कृता भविष्यन्ति॥

## प्रतिप्रधानं वा प्रकृतिवत्॥ ४०॥ (सि०)

प्रतिपुरोडाशं कपालचतुष्कभेदः एवं यथाप्रकृति कृतं भवति। प्रकृतौ दर्शपूर्णमासयोः प्रतिपुरोडाशं कपालानि भिन्नानि इहापि तद्वदेव भेत्तव्यानि चोदकानुग्रहाय। अपि च यदि कपालानि तन्त्रं भवेयुः। नैकोऽपि पुरोडाशश्चतुष्कपालेषु संस्कृतः स्यात् स वै कपालावयवेषु पक्वा भवेयुः। तत्र कपालशब्दो बाध्येत। तस्माद्भेदः॥

## सर्वेषां वाभिप्रथमं स्यात्॥ ४१॥ (यु०)

इदं च श्रूयते यावत्कपालं पुरोडाशं प्रथयतीति तच्चाशक्यं तन्त्रभावे सम्पादयितुम्। तस्मादपि भेदः।

अवघातार्थमन्त्राणां तन्त्रताधिकरणम्।

दर्शपूर्णमासयोः श्रूयते व्रीहीनवहन्तीति तत्र मन्त्रः अवरक्षो दिवः सपत्नं वध्यासमिति। तस्मिन् विचार्यते।

किं प्रतिप्रहारं मन्त्र उत सकृदेवादाविति । किं प्राप्तम् । प्रतिहारमिति । कुतः ? । प्रहारात् प्रहारः कर्मान्तरापत्तेः पर्य्यवसानं कर्मभेदे च सति गृह्यते विशेषः येन कर्मणा सन्निपतितो मन्त्रस्तदर्थ इति । गृह्यमाणे च विशेषे भेदो दृष्टः । तस्मात् प्रतिप्रहारं मन्त्र इत्येवं प्राप्ते उच्यते ।

## एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वात् ॥ ४२ ॥ (सि०)

तस्मिन्मन्त्रार्थनानात्वादावृत्तो मन्त्रस्य सकृत् प्रयोगः स्यात् । एकस्मिन् द्रव्ये व्रीह्यादौ संस्काराणामवहन्त्यादीनां व्याख्यातमेककर्मत्वम् आतण्डुलनिर्वृत्तेरेकमिदं कर्मेति सर्वेषां त्वैककर्म्यादेतेषां च तद्गुणत्वादिति । ननु प्रतिप्रहारं कर्मभेद इत्युक्तमेकस्यैव कर्मणोऽयमभ्यासः फलस्याभ्याससाध्यत्वात् सोमयजिवत् तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्य सकृत्प्रयोगः ।यत्र मन्त्रार्थस्य नानात्वन्तत्रास्यावृत्तिर्भवति । यथाग्नौ लोकम्पृणायाः । यत्र पुनरेक एव मन्त्रार्थस्तत्रावृत्तिरनर्थिका । इह चैको मन्त्रार्थः । कथं ज्ञायते करणोऽयं मन्त्रः । करणस्य कर्त्तव्यस्य वस्तुतोऽभिधानार्थः समधिगतः । समस्ताश्चैते प्रहाराः कर्त्तव्याः । समस्ता हि कार्य्यं साधयन्ति न व्यस्ताः । उप्तानां व्रीहीणां तण्डुलविवेचनं यत्तच्चिकीर्षितं तदभिसन्धातव्यम् । तस्मात् सर्वप्रहाराणां क्रिया मन्त्रेणाभिसंहिता । तत्रावृत्तिरनर्थिका तस्मान्मन्त्रस्य सकृत्प्रयोगः स्यात् ।

नानाबीजेष्टौ मन्त्रभेदाधिकरणम् ।

द्रव्यान्तरे कृतार्थत्वात् तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थेन विधानात् ॥ ४३ ॥ (पू० सि०)

राजसूये नानाबीजेष्टिः अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत् सोमाय वनस्पतये श्यामाकं चरुमित्येवमादि । तस्यामवहन्तिः समन्त्रकश्चोदकेन प्राप्यते अत्रापि पूर्वेण न्यायेन सकृन्मन्त्रस्य प्रयोगः प्राप्तः । सर्वबीजानां वितुषीकरणं चिकीर्षितं तदभिसन्धीयत इति । तथा प्राप्ते उच्यते द्रव्यान्तरे बीजान्तरे पुनः प्रयोगः स्यान्मन्त्रस्य । कुतः ? कृतार्थत्वात् पूर्वस्मिन् बीजे योऽवहन्तिः स कृतार्थः । सन्निपत्योपकारी हि सः स च येन बीजेन सन्निपतितस्तदेव संस्करोति । तदेव चेत् संस्करोति उत्तरसंस्कारार्थं पुनः प्रयोक्तव्यः । तस्य पुनः प्रयोगान्मन्त्रस्यापि पुनः प्रयोगः तद्गुणत्वात् । तस्यापि बीजान्तरे, तस्यावहन्तेः स मन्त्रो गुणस्तदर्थेन विधानात्तस्याप्यसौ प्रतिकर्मावसायिना चोदकेन विहितस्तस्मात् प्रतिबीज मन्त्रस्यावृत्तिः ।

———

निर्वापादिषु मन्त्रभेदाधिकरणम् ।

निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् ॥ ४४ ॥ (पू०)

दर्शपूर्णमासयोश्चतुरो मुष्टीन्निर्वपतीति तस्य मन्त्रो देवस्य त्वेति। तत्रैव च दर्भाणां लवनमन्त्रः बर्हिर्देवसदनं दामीति। तथा स्तरणमन्त्रः ऊर्णाम्रदसन्त्वास्तृणामीति। आज्यग्रहणमन्त्रः धामनामासीति, तेषु सन्देहः किं मन्त्रस्य सकृत् प्रयोगः अथ वा प्रतिमुष्टि प्रतिदानं प्रतिधातु प्रतिग्रहणम्। किं प्राप्तं निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात्। निर्वपणादिषु एकद्रव्यवत्त्वात् सकृत् प्रयोग इत्यर्थः कुतः प्रयोजनैकत्वात्। तत्र तत्रैकं प्रयोजनं निर्वपणे तावद्विषाणामावापनम्। लवने वेदिःस्तरणयोग्यस्य बर्हिष उपसादनं, स्तरणे वेद्याच्छादनम्। आज्यग्रहणे यागयोग्यस्याज्यस्योपादानम्। यावता प्रयोजनं तच्चिकीर्षितं तदर्थो मन्त्र इत्युक्तम्।

---

## द्रव्यान्तरवद्वा स्यात् तत्संस्कारात्।

## ४५ ॥ (सि०)

द्रव्यान्तरवद्वा स्यात् नैकद्रव्यवद्भेदः स्यादित्यर्थः। कुतः तत्संस्कारात् ये व्रीहय एकेन मुष्टिना निरुप्तास्ते संस्कृताः सन्निपत्योपकारित्वात् निर्वापस्य। द्वितीयो मुष्टिरप्यन्यान् व्रीहीन् संस्करोति। तत्र यदि मन्त्रो न प्रयुज्येत मन्त्रकृतेन संस्कारेण तेषां वर्जनं स्यादेवं सर्वत्र तस्मात् तत्र तत्र मन्त्रस्यावृत्तिः।

---

वेदिप्रोक्षणे मन्त्रतन्त्रताधिकरणम्।

## वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४६ ॥ (पू०)

वेदिप्रोक्षणं श्रूयते त्रिः प्रोक्षतीति। तस्य मन्त्रो वेदिरसि बर्हिषे त्वेति। तत्र चिन्त्यते किं प्रत्यावृत्ति मन्त्रोऽथवा सकृदेवेति। किं प्राप्तम्?। वेदिप्रोक्षणे मन्त्रस्याभ्यासः कुतः कर्मणः पुनः प्रयोगात्। यस्मिन् कर्मप्रयोग उक्तो मन्त्रस्तदर्थोऽसाविति गम्यते विशेषस्तस्मादावृत्तिः।

## एकस्य वा गुणविधिः द्रव्यैकत्वात् तस्मात् सकृत्प्रयोगः स्यात् ॥ ४७ ॥ (सि०)

सकृदेव प्रयोगः कुतः द्रव्यैकत्वात्। एकं तद्वेदि द्रव्यं सकृदुक्तेन मन्त्रेण संस्कृतं तत्र भूयो मन्त्रकार्यं नास्ति। ननु कर्मद्वारेण मन्त्रो द्रव्यं संस्करोति तच्च कर्म भिन्नम्। अत्रोच्यते। नैतद्भिन्नमावृत्तिस्तस्य गुणः। क्रियाभ्यावृत्तौ हि कृत्वसुजर्थः प्रत्ययः न क्रियाभेदे तन्मन्त्रवदावृत्तिः तच्च कर्त्तव्यम्। सकृदुक्तेन मन्त्रेण मन्त्रवत् कृतमावृत्तिसम्पादनार्थां पुनः क्रिया तस्मात् सकृत्प्रयोगः।

---

प्रत्यङ्ङ् काण्डूयने मन्त्रतन्त्रताधिकरणम्।

## काण्डूयने प्रत्यङ्गं कर्मभेदात् स्यात् ॥४८॥ (पू०)

ज्योतिष्टोमे कण्डूयनार्थो मन्त्रः कृषिसु श्याम कृष इति यदानेकस्मिन्नङ्गे युगपत् कण्डूरुत्पद्यते तदा चिन्ता। किं प्रत्यङ्गं मन्त्रावृत्तिः अथ वा सकृदेव प्रयोग इति। किं प्राप्तं प्रत्यङ्गं मन्त्र इति कुतः कर्मभेदात्। अङ्गेऽङ्गे कण्डूयनं कर्म भिन्नं यतः पर्य्यवसानात् गृह्यते विशेषः तस्मादावृत्तिः।

अपि वा चोदनैककालमैककर्म्यं स्यात्।
४९ ॥ (सि०)

अपि वा नैवं स्यात्। न ह्यत्र कण्डूयनं चोद्यते। अर्थात् क्रियते कण्ड्वपनयनार्थम्। किमतः यदि चोद्यते अदृष्टार्थं स्यात्। अप्राप्ते शास्त्रमर्थवदिति। प्रतिप्रयोगं चादृष्टभेदात् कर्मनानात्वं भवेत् तथा गृह्येत विशेषः अथ पुनरर्थं गृहीते कण्डूयने यावतोत्पन्ना कण्डूरपनीयते तावच्चिकीर्षितम्। तत्र विशेषो न गृह्यते। ननु यस्याङ्गस्य निष्कर्षणं कृतं तत् संस्कृतमङ्गान्तरे पुनः कर्त्तव्यम। उच्यते। नाङ्गनिष्कर्षणार्थोऽयं यत्नः किं तर्हि कण्ड्वपनयनार्थः। सा च कण्डूरात्मनो न शरीरस्य। तत्र न गृह्यते विशेषः। तस्मात् सकृदेव प्रयोगः।

---

स्वप्ननदीतरणादिमन्त्रतन्त्रताधिकरणम्।

स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु
चैवम् ॥ ५० ॥ (सि०)

ज्योतिष्टोमे स्वपनार्थो मन्त्रः। त्वमग्ने व्रतपा असीति। तत्रैव नदीतरणार्थः देवीराप इति। तथा भिवृष्टस्य उन्दतीरोजो धत्त। अमेध्यप्रतिमन्त्रणस्य अदब्धं चक्षुरिति। स यदा पुनः प्रतिबुद्धः स्वपिति, अनेकस्रोतसं वा नदीन्तरति, सन्तानेन वाभिवृष्यते अनेकं वा मेध्यमेककालं पश्यति तत्र किं मन्त्रस्यावृत्तिः अथ वा सकृदेव प्रयोग इति। तत्र विशेषाग्रहणादावृत्तौ प्राप्तायामुच्यते। स्वप्नादिषु चैवं यथा कण्डूयने सकृत्प्रयोग इत्यर्थः। कृत्स्नां रात्रिमसावुद्दिश्य स्वप्नमन्त्रं प्रयुङ्क्ते नैकान्निद्राम्। तथा सर्वस्रोतांसि तितीर्षुः सर्वाभिवर्षाणि सर्वामेध्यानि च युगपत् सर्वेषामुपगमात् तत्र न गृह्यते विशेषः। तस्मादनावृत्तिर्मन्त्रस्य।

---

प्रयाणे मन्त्रतन्त्रताधिकरणम्।

## प्रयाणे त्वार्थनिर्वृत्तेः॥ ५१॥ (सि०)

दीक्षितस्य प्रस्थितस्य प्रयाणमन्त्रः। भद्रादभिश्रेयः प्रेहीति। तत्र विचार्यते किं विश्रामे पुनः पुनः प्रतिष्टमानो मन्त्रं प्रयुञ्जीत सकृदेवादाविति। विशेषाग्रहणात् प्रतिप्रस्थानमिति प्राप्त उच्यते प्रयाणे त्वार्थनिर्वृत्तेः अर्थमसावुद्दिश्य प्रतिष्ठते आर्थनिर्वृत्तेस्तस्य प्रस्थानाभिसम्बन्धः। तस्मात् सकृदेव प्रयोक्तव्यः।

---

उपरवमन्त्रभेदाधिकरणम् ।

उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ५२ ॥ (पू०)

ज्योतिष्टोमे उपरवमन्त्रः रक्षोहणो वलगहनो वैष्णवान् खनामीति। तत्र सन्देहः किं सर्वोपरवेषु सकृदेव मन्त्रः प्रयोक्तव्यः उत प्रत्युपरवमिति। किं प्राप्तम् उपरवमन्त्रस्तन्त्रं स्यात् सकृदेव प्रयोक्तव्यः कुतः बहुवचनात् बहुवचनान्तोऽयं वैष्णवान् खनामीति। यदि प्रत्युपरवं प्रयुज्येत एकस्मिन् बहुवचनान्ताभिधानं न साधयेल्लोकवत् यथा लोके एकस्मिन्नर्थे बहुवचनं न प्रयुज्यते। अपि च सकृदुक्त एकः शक्नोति सर्वोपरवानभिधातुम्। शक्नोति चेदावृत्तिरनर्थिका। तस्मात् सकृदेव प्रयोक्तव्यः। (पीठपादचतुष्टयाकारोबाहुमात्रो गर्त्तमिद उपरवः।)

न सन्निपातित्वादसन्निपातिकर्मणां विशेषग्रहणे कालैकत्वात् ॥ ५३ ॥ (सि०)

नैव तन्त्रं स्यात्। कुतः सन्निपातित्वात्। सन्निपातिखननकर्मणा येनोपरवेण सन्निपतितं तदर्थमेव विज्ञायते। मन्त्रोऽपि चार्थसन्निपाती मन्त्रान्तेन कर्मादिसन्निपातादतो यस्योपरवस्यायं मन्त्रः सन्निपतितस्तस्यैव मन्त्रकारितः संस्कारो न सर्वेषाम्। अतो न सकृत् प्रयोक्तव्यः। असन्निपातिकर्मणां विशेषग्रहणे कालैकत्वात् सकृद्वचने ये त्वसन्निपातिकर्मणां मन्त्राः

यथा सुब्रह्मण्याह्वाने देवान्ब्रह्माण इति। औपवसथ्येऽहनि, तेषामेककालत्वात् अग्रेह्मणविशेषाणां सकृद्वचनं स्यात्। यत्तु न बहुवचनान्त एकस्याभिधायक इति। प्रातिपदिकार्थोऽभिहितो विभक्त्यर्थश्च कर्मत्वम्। वचनार्थः केवलो नाभिहितः स च नैवाभिधानमर्हति अभिधायकस्य शब्दस्याभावात्। एकस्यैव वा पूजार्थे बहुवचनम्। तस्मादविरोधः।

---

हविष्कृदादिमन्त्रभेदाधिकरणम्।

## हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिं कालभेदात् स्यात् ॥ ५४ ॥ (प्रत्यु०)

इदं सूत्रं पूर्वसूत्रप्रत्युदाहरणार्थं कालैकत्वादिति किमर्थं हविष्कृदध्रिगुपुरोऽनुवाक्यामनो तस्यावृत्तिः कालभेदात् स्यादिति। अथ वाधिकरणान्तरम्। ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशास्तेषु हविष्कृदाह्वानम्। वाजपेये क्रतुपशवः प्राजापत्याश्च तत्राध्रिगुप्रैषः। कृष्णग्रीवयोः पुरोऽनुवाक्यामनोतासूक्तं च। तेषु चिन्ता किं तस्य तस्य सकृत् प्रयोगः अथ वाऽऽवृत्त्येति। सहत्वानुग्रहाय सकृदिति प्राप्त उच्यते। आवृत्तिः स्यादिति। कुतः कालभेदात्। प्रातःसवने यद्धविष्कृदाह्वानमध्रिगुप्रैषश्च तस्य कालभेदात् गम्यते विशेषः प्रातःसवनीयानां पुरोडाशानामयं हविष्कृत्क्रतुपशूनां चाध्रिगुरिति। तथा कृष्णग्रीवयोः सौम्येन व्यव-

दात् पूर्वस्य कृष्णग्रीवस्येयं पुरोऽनुवाक्या मनोता चेति । सर्वत्र कालो न भिद्यते कालभेदाद् गच्छति विशेषः । तस्मादावृत्तिः ।

अध्रिगोश्च विपर्यासात् ॥ ५५ ॥ (प्रत्यु०)

अध्रिगोश्चायमपरो विशेषो विपर्य्यासः स्यात् । तन्त्रभावे अध्रिगोर्ये पुरस्तात् पदार्थाः प्राजापत्यानां यथापश्वालम्भ आश्रुत प्रत्याश्रुते अग्नेर्दारमिरिति मन्त्रः ते यदि तावत् प्रातःसवने क्रियते पर्य्यग्निकरणान्तं काण्डन्तोत्सृष्टं भवति । अथ मा भूदेष दोष इति ब्रह्मसाम्नि क्रियन्ते तथापि विपर्य्यासः कृतो भवति पुरस्तादध्रिगोः कर्त्तव्यानां पुरस्तात् करणेन । तस्मादप्यावृत्तिः । किं च,

करिष्यद्वचनात् ॥ ५६ ॥ (हे०)

या चेयमध्रिगोर्विभक्तिः आरब्धमुपनयतेति सा प्राप्तकालं करिष्यमाणं ब्रूते स यदि प्रातःसवन उच्यते अप्राप्तकालत्वात् पदार्थस्यासमर्थः स्यात् । अथ प्रैषणार्थां तथापि प्रेषणं प्रवृत्त्यर्थं न च प्राजापत्येषु तत् प्रवृत्त्यर्थं युज्यते बहूनां कर्मराशीनां व्यवायान्नष्टः प्रैषणप्रत्ययो भवति तथाप्यसमर्थः । तस्मादप्यध्रिगोरावृत्तिरिति सिद्धान्तः ।

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये एकादशाध्यायस्य चतुर्थः पादः समाप्तः ।

एकादशोऽध्यायश्च सम्पूर्णः ।

——

## अथ द्वादशाध्यायस्य प्रथमः पादः।

पशुपुरोडाशाधिकरणम्।

एकादशेऽध्याये तन्त्रावापलक्षणं व्याख्यातम्। अधुना प्रसङ्गलक्षणं द्वादशे व्याख्यायते। प्रसङ्गशब्दार्थोऽन्यैरुक्तः। एवमेव प्रसङ्गः स्यात् विद्यमाने स्वके विधाविति। अन्यत्र कृतस्याप्यन्यत्रासक्तिः प्रसङ्गः। यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम्। तदिह प्रसङ्ग एवादौ विचिन्त्यते। अग्नीषोमीयपशौ पुरोडाशः। अग्नीषोमीयस्य वपया प्रचर्य्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालन्निर्वपेदिति। किं तस्य पृथक्त्वेनाङ्गानि कर्त्तव्यानि उत यानि पशौ कृतानि तस्याप्युपकुर्वन्तीति ततः सूत्रेणैवोपक्रमः।

**तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदः स्यात् विधिप्रक्रमतादर्थात् श्रुतिकालनिर्देशात्॥ १॥ (पू०)**

तन्त्रं साधारणो धर्म्मग्रामः। यथा दर्शपूर्णमासयो राज्यभागादिः पूर्वः। स्विष्टकृदादिरुत्तरः। स येषां प्रधानानां तानि तन्त्रीणि प्रधानानि तेषां तु समवाय एकदेशकालकर्तृत्वे चोदनातः समानानामेकवाक्यचोदितानामैकतन्त्र्यं भवति। यथा दर्शपूर्णमासयोर्यया च चित्रायामिष्टौ। अतुल्येषु तु भेदः स्यात्।

यानि तु चोदनातो न तुल्यानि। नाना वा वाक्यैश्चोदितानि तेषु तु भेदः स्यात् तन्त्रस्य। यथाऽत्रैवाग्नीषो-

मीयं पशुमालभेत अग्नीषोमीयं पशुपुरोडाशमेकादश-कपालं निर्वपतीति। किं कारणम्। विधिप्रक्रमता-दर्थ्यात्। विधिर्विधानं तदङ्गानां प्रयोगः। तस्य प्रक्रमः तदर्थाः प्रवृत्तिः। विधिप्रक्रमतादर्थ्यं विज्ञायते। अयं पश्वर्थो विधिप्रक्रमो न पुरोडाशार्थ इति। कथं पुनः पश्वर्थत्वं विधिप्रक्रमस्य तादर्थ्यं? श्रुतिकालनिर्देशात् श्रुत्या तत्र कालो निर्दिश्यते। अग्नीषोमीयप्रणयनादन-न्तरं पशोः कालः। तत्र तस्य चोदना। वपाप्रचारादूर्ध्वं पुरोडाशस्य कालः। पशोरवसरे यो विधिप्रक्रमः स केवलः पश्वर्थो विज्ञायते पुरोडाशस्याप्राप्तत्वात्। अत-स्तस्य पृथक्तन्त्वं कर्त्तव्यम्। लिङ्गञ्च पश्वर्थतां तन्त्रस्य दर्शयति। यदेकादश प्रयाजान् यजति पशुमेव तत् प्रयजति। यदेकादशानुयाजान् यजति पशुमेव तदनुयज-तीति एवकारकरणादवधारणं विज्ञायते पशुमेव न पुरोडाशमिति।

## गुणकालविकाराच्च तन्त्रभेदः स्यात्॥२॥ (आ०)

अपि च पाशुकाः प्रयाजानुयाजा गुणतः कालतश्च विकृताः एकादशसंख्याः। पशावुभये वा पञ्चभिश्च प्रयाजै-स्त्रिभिरनुयाजैः पुरोडाशस्य कार्य्यम्। तथाष्टपदाज्ये नानु-याजाः पशोरिज्यन्ते केवलेनाज्येन च पुरोडाशस्यार्थः कालविकारेऽपि चासन्ने हविषि पौरोडाशिकैः प्रयाजै-र्भवितव्यम्। पाशुकास्तु तिष्ठति पशौ वर्त्तन्ते। तिष्ठन्तं पशुं प्रयजन्तीति वचनात्। उभयेऽपि पुरोडाशस्य पृथक्त्वे

वा क्रियमाणा यथा सम्पादिता भवेयुः । तस्मादपि तन्त्रभेदः ।

**तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ ( सि० )**

अथ वा नैव भेदेन पुरोडाशस्य तन्त्रं कर्त्तव्यम् । किं तर्हि मुख्यतन्त्रेण सिद्धिः स्यात् । पाशुकमेव तन्त्रं पुरोडाशस्योपकुर्य्यात् । किं कारणं तन्त्रमध्ये विधानात् । पाशुकस्य तन्त्रस्य मध्ये पुरोडाशो विहितः । अग्निषोमीयस्य वपया प्रचर्य्याग्निषोमीयं पशुपुरोडाशमेकादशकपालन्निर्वपतीति । किमतस्तन्त्रार्थस्याविशिष्टत्वं भवतीति तन्त्रस्यार्थस्तन्त्रार्थः । अङ्गकृत उपकारः । सोऽत्राविशिष्टः पुरोडाशस्य च सन्निधानाविशेषात् पशावपि क्रियमाणान्यङ्गानि पुरोडाशस्य सन्निहितानि । सन्निधानाच्च पशोरप्युपकुर्वन्ति प्रदीपवद् यथा प्रासादे कृतः प्रदीपः सन्निधानाद्राजमार्गेऽप्युपकरोति । विषम उपन्यासः । स खलु प्रत्यक्षेण ज्ञायते । अयं पुनरप्रत्यक्षोऽङ्गोपकारः कथं शक्यो विज्ञातुमिति । अयमपि शास्त्रदृश्यः शास्त्रप्रत्ययाद्गम्यते । शास्त्रं चेद्दर्शपूर्णमासवत् कर्त्तव्यानीति । तद्वच्चेत् कृतानि किमिति नोपकरिष्यन्ति । दर्शपूर्णमासयोः स्वप्रधानैरेकदेशकालकर्तृकाणि क्रियमाणान्युपकृतवन्ति । इहापि तथाविधान्येव क्रियन्ते तस्मादिहापि तद्वदेवोपकुर्वन्तीति विज्ञायते । आह नेह तद्विधानानि दर्शपूर्णमासयोः स्वप्रधानान्युद्दिश्य कृतान्यङ्गानि । इहापि तद्वदेव कर्त्तव्यानि ।

न च पुरोडाशमुद्दिश्य कृतान्यङ्गानि इहापि तद्वदेव कर्त्त-व्यानि। न च पुरोडाशमुद्दिश्येह क्रियन्ते किं तर्हि पशुम्। तस्मात् पुरोडाशस्य न प्रकृतिवत् विकृतानि भवन्तीत्युच्यते। प्रकृतौ न शब्द उपदेशः न हि तत्र श्रूयते। प्रधानान्युद्दिश्याङ्गानि कर्त्तव्यानीति। किं तर्हि अर्थात् क्रियन्ते तेषां तत्र चिकीर्षितत्वात्। न चार्थात् कृतं चोदकेन प्राप्यते यत्कारणं विध्यन्तरम्। तत्राचेपात् कृतान्यङ्गानि इहापि तद्वदेव कर्त्तव्यानि न च पुरोडाश-मुद्दिश्य तेन समुचितं तत्प्राप्यते न पाठात् बाह्यम्। तस्मात् त्वनुद्दिश्यापि क्रियमाणानि प्रकृतिवत् कृतानि भवन्ति। एवं सिद्धा प्रसङ्गादुपकारनिर्वृत्तिः। नन्वेवं सति तत्र लक्षणविशिष्टमेव भवति न खलु तन्त्राङ्गमेव साधारणम् इह त्वङ्गकृत एवोपकारः सोऽपि न साधारणः अन्यकृतो-ऽन्यस्य भवति।

## विकाराच्च न भेदः स्यादर्थस्य विकृतत्वात् ॥४॥
## ( पू० आ० नि० )

अथ यदुक्तं गुणकालविकाराच्च तन्त्रभेदः स्यादिति। तत्र ब्रूमः। विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् अथाङ्गजनित उपकारः स न विकृतयोर्दर्शपूर्णमासयोः स एव कथं ज्ञायते तदुच्यते। प्रयाजानुयाजास्तावदेते दार्शपौर्णमासिकाः। तत्र प्रयाजानुयाजशब्दौ प्रज्ञायेते तौ च चोदकेनेह प्राप्ताः सन्निहिताः विद्यन्ते। प्रकृतिगामित्वं च शब्दस्य न्याय्यं न चैकः शब्दोऽनेकार्थो युक्तः। तस्मा-

दार्शपौर्णमासिको ह्येतदुपकारोऽप्येषां दार्शपौर्णमासिक एव स हि तेषां प्रज्ञातः। यदि च प्रकृतादुपकारादुपकारान्तरं प्रकुर्य्युः। ततोऽप्राकृतकार्य्यत्वान्नैव चोदकेन प्राप्येरन्। अपूर्वा भवेयुः यथा सत्रे गौग्गुलवादिभिरभ्यञ्जनम्। अप्राप्तौ वाऽनेनैव प्रयाजा विधीयन्ते। अनेनेव प्राप्येरन्। तत्र विकारः शब्दः स्यात् न च सकृदुच्चरितः शक्तो ह्यर्थद्वयं विधातुम्। अपूर्वत्वे चैतेषां अङ्गता अपि चोदकेन प्राप्येरन्। तत्र वैश्वदेवे त्रिंशत् सम्पत्तिराहुतीनां न युज्यन्ते। न च प्रयाजात् न चानुयाजाद्वाज्यभागौ अष्टौ हवींषि अग्नये समवद्यति वाजिनो यजत्याहुतीनां सम्पत्त्यै त्रिंशत्त्वायेति। तस्माद् गुणविकारेऽप्यविकृतः प्राकृतोऽङ्गोपकारः। तत्कृता एव पुरोडाशस्याप्युपकुर्वन्तीति न गुणकालविकारं तन्त्रभेदः। तदानीं तमुभौ प्रार्थयेते पशुः पुरोडाशश्च उभयोश्च प्रकृतिवत् क्रियन्तेऽङ्गानि। तस्मात् सकृत्कृतान्येवोभयोरुपकुर्वन्ति। विकार इदानीं किमर्थः पश्वर्थः। पाशुकेषु हि प्रयाजानुयाजेषु ब्रूयन्ते न तु पशोः पुरोडाशस्य च। न चासाधारणान्यङ्गानि पाशुकान्येव सन्निधानात् पुरोडाशस्याप्युपकुर्वन्तीत्युक्तम्। अपि च। पृषदाज्येनापीज्यमाना अनुयाजा आज्येनेष्टा भवन्ति। न हि पृथक्त्वे आज्यत्वं नाशयति यस्य क्षीरेण भोजनमुदितं भवति। यदि तस्मै सशर्करं दीयते न कश्चिद्विरोधो भवति। सशर्करमपि पय एवेति। तथा य एकादश प्रयाजान् यजतीति। असौ तदन्तर्गतान् प्राकृतान् पञ्च येभ्योऽधिकाः षट् न तैरिज्यमानैः पञ्च प्राकृता नष्टा भवन्ति। एवं तिष्ठत्यपि

पशौ क्रियमाणाः प्रयाजाः कृता एव पुरोडाशस्य भवन्ति । क्रमस्त्वेषां प्राकृतो हापितो गुणमात्रञ्च क्रमो न च गुणानुग्रहार्थं प्रधानस्यावृत्तिर्युक्ता न च गुणवशवर्त्ति प्रधानं कामं क्रमविपर्य्यासनिमित्तं प्रायश्चित्तं भवेत् । नावृत्तिः । प्रायश्चित्तं तर्हि कर्त्तव्यम् । क्रियते यो ह्यग्नौ सति सर्वं प्रायश्चित्तं जुहोतीति प्रासङ्गिकत्वाद्वा प्रायश्चित्ताभावः । तस्मादवृद्धिरोधः ।

## एकेषां वा शक्यत्वात् ॥ ५ ॥ ( आ० )

एकेषां वा शक्यभेदेन क्रिया । यथा वेदेरन्युद्धरणस्य व्रतोपायनस्येति । वेदिः कृता नवकृता तिष्ठति न शक्या कर्तुम् । न ह्यर्थः कृतः सन् कर्तुं शक्यते । अथोच्यते । अन्यां करिष्यतीति ।

## आहोपुरोषकं स्यात् ॥ ६ ॥ ( आ० नि० )

तिर्यक् चासौ भवेत्तत्र दिक् संयुज्येत । विहार पृथक्त्वे वाऽश्रुतमापद्येत । तत्रैकदेशकालकर्त्तृकत्वमङ्गप्रधानानामिति स्थितो न्यायः प्रत्युद्ध्रियेत एवमप्युद्धरणं तदाहवनीयनिवृत्त्यर्थम् । सकृदुद्धारणेन च निवर्त्तितोऽसौ । न च निवर्त्तितं शक्यो निवर्त्तयितुम् । यथा कृतः कर्तुं न अथोच्यते । अन्यं निवर्त्तयिष्यतीति । न तस्मिन्ननुपरते द्वितीयस्तत्राहवनीयोऽस्ति । यत्कारणं गार्हपत्याहवनीया वुभावेकास्थौ आहवनीयेऽपपातिते परिशिष्टो गार्हपत्यो भवति । यथा सर्वसाधारणत्वादाज्यादुपांशुयाजार्थेऽप-

पातिते परिशिष्टमन्यदेव तदर्थं भवति। विहार पृथक्त्वं च पूर्वक्रापद्यते। तत्र पूर्वोक्ता एव दोषाः। तथा व्रतं यदुत्सृष्टं न तत् पुनरुत्सृष्टं शक्यते ग्रहीतुम्। अनुत्सृष्टञ्च तत् आप्रधानापवर्गात्।

## एकाग्निवच्च दर्शनम् ॥ ७ ॥ ( हे० )

एकाग्निं पशोः पुरोडाशस्य च दर्शयति। मध्येऽग्ने राज्याहुतीर्जुहोति पुरोडाशाहुतीः पश्चाहुतीश्चेति नाग्न्युद्धरणस्य भेदः। तस्मात् पाशुकं तन्त्रं पुरोडाशे प्रयुज्यत इति

पशुपुरोडाशे आज्यभागाधिकरणम्।

## जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रः प्रतिषेधः स्यात् ॥ ८ ॥ ( पू० सि० )

तस्मिन्नेव पशुपुरोडाशे चिन्ता किमाज्यभागौ कर्त्तव्यावुत नेति आह तत एतत् तावत् परीक्ष्यं किं प्रसङ्गेन चोदको बाध्यते। उत प्रयोगवचन इति। यदि चोदको बाध्यते। ततो न कर्त्तव्यावथ प्रयोगवचनः ततः कर्त्तव्याविति। किं पुनरत्र युक्तम्। चोदको बाध्यत इति किं कारणम् आनुमानिकश्चोदकः। प्रत्यक्षः प्रयोगवचनः। प्रत्यक्षं चानुमानाद्बलीयः। दुर्बलस्य च बाधो न्याय्यः। न च बलीयसः। एवं चेन्न कर्त्तव्यौ चोदकेन हि तौ प्राप्येयाताम्। स चेह बाधितत्वान्नास्तीति। एवं प्राप्त उच्यते। जैमिनेराचार्य्यस्य मतं कर्त्तव्यावाज्यभागाविति। कुतः अतः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। यस्य स्वस्य

तन्त्रस्य कार्यं परतन्त्रमापद्यते तस्य प्रतिषेधः स्यात्। यथा पौरोडाशिकानां पाशुकं यस्य तु न किञ्चित् परकीयं कार्य्यमापद्यते तत्प्रतिषेधो न युक्तः। यथा देवदत्ते यज्ञदत्तयानमारूढ़े देवदत्तयानं निवर्त्तते। न वस्त्रालङ्कारः। न चेहाज्यभागयोः कार्य्यं हीयते। न च किञ्चित् पाशुकमङ्गमापद्यते। तस्मात्तयोरनुवृत्तिः यत्तु प्रयोगवचन इति। नैवात्र प्रयोगवचनस्य प्रवृत्तिः सा ह्यङ्गान्यप्रतिगृह्णीयात् पाशुकैरेव चाङ्गैः पुरोडाशोऽङ्गवान् प्रत्यक्षो ह्ययं नाज्यभागौ गृह्णाति। प्रकरणसन्निहितमङ्गं प्रयोगवचनेन गृह्यते न च पशौ आज्यभागौ विद्येते। प्रतिषिद्धत्वात्। तौ न सोमेऽध्वरे न पशाविति। अपि च क्रमे तत्प्रयोगवच उत्पन्नानाम् अङ्गानां ग्राहकश्चुत्या चोदको ग्राहकश्च तस्मात् स बलवान्।

सोमे वेद्यभेदाधिकरणम्।

## नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात्॥ ८॥ (पू०)

सोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि महावेद्यां वर्त्तन्ते तेषु चिन्ता तेषां वेदिर्भेदेन कर्तव्या उत नेति किं प्राप्तं भेदेन कर्तव्या किं कारणं चोदकं प्रापयति। एवं चोदकानुग्रहो भवति ननु सौमिके च प्रसङ्गात् कार्य्यं साधयेत्। अत्रोच्यते न साधयेत्। कस्मान्नानार्थत्वात्। नानार्थे एते वेदी दार्शपूर्णमासिकी हविषामासादनार्था। सौमिकी प्रधानार्था। तत्र प्रसङ्ग उपपद्यते।

यत् तन्त्रिणोऽङ्गमध्यपात्यङ्गं न कार्य्यं तत् प्रसज्यते । यथा पाशुकाः प्रयाजाः पौरोडाशिकेषु नत्विह तथा तस्माद्वेदिः कर्त्तव्या ।

## अकर्म वा क्षतदूषा स्यात् ॥ १० ॥ ( सि० )

न वा कर्त्तव्या दार्शिकी वेदिः । कुतः । क्षतदूषा स्यात् । सा क्रियमाणा केवलं सौमिक्यादेः क्षताया दूषणं स्यात् । न किञ्चित् स्वार्थं साधयति । ननु हविषामासादनं तत् करिष्यते शक्यं तु तन्महावेद्यामपि कर्त्तुम् । नन्वन्यार्था सेत्युक्तम् । अन्यार्थापि सती हविषामासादने अधिकरणं भवितुं प्रभवति । वेद्यां हविषामासादनं श्रुतम् इयमपि च वेदिः न तत्र तदर्थायामतदर्थायां वेत्येष विशेषः श्रूयते । तस्मान्न कर्त्तव्या ।

दार्शिकपात्राधिकरणम् ।

## पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥११॥ (पू०)

सोम एव यानि दर्शपूर्णमासप्रकृतीनि ग्रहचमसे प्रयुक्ते वर्त्तन्ते । यथा सातत: पशुः सावनाः पुरोडाशाः सौम्यश्चरुरिति तेषु विचार्य्यते किं तेषां ग्रहैश्चमसैर्वा होमः कर्त्तव्यः । अथ वा दार्शिकैः स्रुचादिभिः पात्रैरिति । तत्रोच्यते पात्रेषु च प्रसङ्गः स्यात् कुतः होमार्थत्वात् । होमार्थानि तानि पात्राणि स च होमो ग्रहचमसैनापि निर्वर्त्त्यते सोमतन्त्रमध्यपतितानि कर्माणि । तेषु ग्रहैश्चमसैर्वा होमः कर्त्तव्यः ।

न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥ १२ ॥ ( सि० )

न्याय्यानि वा दार्शपूर्णमासिकानि स्युः तैर्होमः क्रियते। कुतः प्रयुक्तत्वात्। प्रयुक्तानि तानि विद्यन्ते यद्गृहीत्वाज्यान्यासादयन्ति न यजमानमुपहन्तीति प्रथमं तावत्तेषां प्रयोगः प्रोक्षणं सम्मार्जनं च तत्र आज्यग्रहणं तान्येवाज्यप्रयुक्तानि विद्यन्ते अप्रयुक्ते प्रसङ्गः स्यात्। यन्मध्यपातिनोऽङ्गं न प्रयुक्तं तत्कार्य्यं तन्त्रिणोऽङ्गं प्रसज्यते। स्वस्याभावे हि परकीयमुपजीव्यते। असन्निहितेऽपि स्वस्मिन् याने देवदत्तो यज्ञदत्तयानमारोहति सन्निहिते तु स्वयानेनैव हि याति। तत्र हि तस्य यादृशं स्वातन्त्र्येण गमनसुखं न तादृशं परयाने। पुरोडाशानामपि दार्शिकैः पात्रैर्यादृशं साद्गुण्यं तादृशं ग्रहचमसैर्न। न तत्र प्राक्तन्यो वृत्तजातयः प्रोक्षणादयश्च संस्कारा लभ्यन्ते। ग्रहचमसे तेषामभावेऽपि लौकिकास्तैः पुरोडाशानामसम्बन्धः। यदि पुनर्दार्शिकान्यप्रयुक्तानि भवेयुः। किं ग्रहचमसं प्रसज्येत। नेति ब्रूमः। दार्शिकान्येव प्रसज्येरन्। तन्त्रं तन्त्रिणोऽङ्गं क्रियमाणमितरस्यापि कृतं भवति। तत्र प्रसङ्गो यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः। इह तु ग्रहचमसे प्रयुक्तो नेतराणि प्रयुक्तानि भवन्ति। न हि सोमे ह्रयमाने पुरोडाशा हुताः। तस्मादत्यत्र प्रसङ्गः। किं तर्हि इदमुच्यते। अप्रयुक्ते प्रसङ्गः स्यादिति यदि प्रयोग एषां नोपपद्यते। प्रतिषिध्येत

तावतः प्रसङ्गः स्यादित्यर्थः। अपि च न्याय्यानि दार्शपूर्णमासिकानि न ग्रहचमसं किं तेषां न्याय्यत्वं दर्शपूर्णमासयोस्तानि शब्देनोक्तानि ततश्चोदकेन पुरोडाशे अतिदिश्यन्ते। अस्ति शब्दसंस्पर्शः। ग्रहचमसेन न तु हविर्यज्ञेन कश्चिद्धोमः श्रुतः अर्थात् क्रियते। असति शब्देनोक्तेऽर्थक्रिया भवति। दर्शयति च। एतानि पात्राणि युनज्मि ते पृथिवीं ज्योतिषा सहेति। ध्रुवामभिमृशति। युनज्मि वाचमन्तरिक्षेण ते सहेत्युपभृतं युनज्मि वाचं सह दिवा सूर्य्येणेति जुहूमिति। तस्मादेतैर्होमः कर्त्तव्यः।

शामित्रे पशुपुरोडाशश्रपणाधिकरणम्।

शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात्॥ १३॥ (सि०)

पुरोडाश एव चिन्ता। किमेतस्य शामित्रेऽग्नौ श्रपणं कर्तव्यमुत शालामुखीय इति। तत्र स एव न्यायः। इतरस्य प्रयुक्तत्वादिति। गार्हपत्ये च हविषां श्रपणं श्रुतं स च प्रयुक्तो विद्यते शालामुखीय एषोऽत ऊर्द्ध्वं गार्हपत्यो भवतीति। तस्मात्तत्र श्रपणं कर्त्तव्यम्।

प्राजहिते श्रपणाधिकरणम्।

श्रपणं वाऽग्निहोत्रस्य शालामुखीयेन स्यात् प्राजहितस्य विद्यमानत्वात्॥ १४॥ (सि०)

कौण्डपायिनामयने अग्निहोत्रे चिन्त्यते किं तदीयस्य

न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥ १२ ॥ ( सि० )

न्याय्यानि वा दार्शपूर्णमासिकानि स्युः तैर्होमः क्रियेत। कुतः प्रयुक्तत्वात्। प्रयुक्तानि तानि विद्यन्ते यद्गृहीत्वाज्यान्यासादयन्ति न यजमानमुपहन्तीति प्रथमं तावत्तेषां प्रयोगः प्रोक्षणं सम्मार्जनं च तत आज्यग्रहणं तान्येवाज्यप्रयुक्तानि विद्यन्ते अप्रयुक्ते प्रसङ्गः स्यात्। यन्मध्यपातिनोऽङ्गं न प्रयुक्तं तत्कार्थं तन्निर्णोऽङ्गं प्रसज्यते। स्वस्याभावे हि परकीयमुपजीव्यते। असन्निहितेऽपि स्वस्मिन् याने देवदत्तो यज्ञदत्तयानमारोहति सन्निहिते तु स्वयानेनैव हि याति। तत्र हि तस्य यादृशं स्वातन्त्र्येण गमनसुखं न तादृशं परयाने। पुरोडाशानामपि दार्शिकैः पात्रैर्यादृशं सादृगुण्यं तादृशं ग्रहचमसैर्न। न तत्र प्राक्तन्यो वृत्तजातयः प्रोक्षणादयश्च संस्कारा लभ्यन्ते। ग्रहचमसे तेषामभावेऽपि लौकिकास्तैः पुरोडाशानामसम्बन्धः। यदि पुनर्दार्शिकान्यप्रयुक्तानि भवेयुः। किं ग्रहचमसं प्रसज्येत। नेति ब्रूमः। दार्शिकान्येव प्रसज्येरन्। तन्त्रं तन्निर्णोऽङ्गं क्रियमाणमितरस्यापि कृतं भवति। तत्र प्रसङ्गो यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः। इह तु ग्रहचमसे प्रयुक्ते नेतराणि प्रयुक्तानि भवन्ति। न हि सोमे हूयमाने पुरोडाशा हुताः। तस्मादस्यात्र प्रसङ्गः। किं तर्हि इदमुच्यते। अप्रयुक्ते प्रसङ्गः स्यादिति यदि प्रयोग एषां नोपपद्यते। प्रतिषिध्येत

तावतः प्रसङ्गः स्यादित्यर्थः । अपि च न्याय्यानि दार्शपूर्णमासिकानि न ग्रहचमसं किं तेषां न्याय्यत्वं दर्शपूर्णमासयोस्तानि शब्देनोक्तानि ततस्तद्वदकेन पुरोडाशे अतिदिश्यन्ते । अस्ति शब्दसंस्पर्शः । ग्रहचमसेन न तु हविर्यज्ञेन क्वचिद्धोमः श्रुतः अर्थात् क्रियते । असति शब्दोक्तेऽर्थक्रिया भवति । दर्शयति च । एतानि पात्राणि युनज्मि ते पृथिवीं ज्योतिषा सहेति । ध्रुवामभिमृशति । युनज्मि वाचमन्तरिक्षेण ते सहेत्युपभृतं युनज्मि वाचं सह दिवा सूर्येणेति जुहूमिति । तस्मादेतैर्होमः कर्त्तव्यः ।

शामित्रे पशुपुरोडाशाधिकरणम् ।

## शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १३ ॥ ( सि० )

पुरोडाश एव चिन्ता । किमेतस्य शामित्रेऽग्नौ श्रपणं कर्तव्यमुत शालामुखीय इति । तत्र स एव न्यायः । इतरस्य प्रयुक्तत्वादिति । गार्हपत्ये च हविषां श्रपणं श्रुतं स च प्रयुक्तो विद्यते शालामुखीय एषोऽत ऊर्द्ध्वं गार्हपत्यो भवतीति । तस्मात्तत्र श्रपणं कर्त्तव्यम् ।

प्राजहिते श्रपणाधिकरणम् ।

## श्रपणं वाऽग्निहोत्रस्य शालामुखीयेन स्यात् प्राजहितस्य विद्यमानत्वात् ॥ १४ ॥ ( सि० )

कौण्डपायिनामयने अग्निहोत्रे चिन्त्यते किं तदीयस्य

द्रव्यस्य शालामुखीये अपणमथवा प्राजहित इति। प्राजहित इति गार्हपत्यस्य पूर्वाचार्य्यसंज्ञा। अत्रापि स एव न्यायः। गार्हपत्ये अपणं श्रुतं स एव प्रयुक्तो विद्यते। अप्रयुक्ते च प्रसङ्गः स्यादिति। भूयांश्चात्र परिहारः चोदकेन शालामुखीयः प्राप्यते ज्योतिष्टोमे हि तस्य गार्हपत्यत्वं श्रुतं तच्च चोदकपरम्परया कौण्डपायिनामयनमागतं नामधेयेन तु प्राजहिते अपणं प्राप्यते चोदकाच्च नामधेयशब्दो बलवत्तरः। तस्मात्तत्र अपणं कर्त्तव्यमिति।

हविर्द्धानयोर्निर्वपाधिकरणम्।

## हविर्द्धाने निर्वपणार्थं साधयतां प्रयुक्तत्वात् ॥ १५ ॥ (पू०)

क्रते हविर्द्धाने यान्यौषधगुणकान्येष्टकानि कर्माणि वर्त्तन्ते यथा पशुपुरोडाशः सवनीयाः पुरोडाशाः सोम्यश्चरुः। तेषु विचार्य्यते। किं तेषां निर्वापो हविर्द्धाने कर्त्तव्यः। अथवा नान्तरमुपादेयमिति किं प्राप्तं हविर्द्धाने निर्वपणार्थं साधयेयाताम्। एवं वा कुतः। प्रयुक्तत्वात्। प्रयुक्तमस्ति शक्नोति च तेषां निर्वापं साधयितुम्। अन्यस्योपादाने केवलमनर्थको व्यापार आपद्यते। तस्मात्तयोरन्यतरेण निर्वापः कर्त्तव्यः।

## असिद्धिर्वाऽन्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १६ ॥ (सि०)

असिद्धिर्वा हविर्द्धानाभ्यां निर्वापस्य न ताभ्यां साधयितव्य

कुतः ? प्रधानावैगुण्यात् । निर्वापस्य देशः । अपरेण गार्हपत्यं प्रागीषं मनोवाञ्छितं भवति । तस्य दक्षिणचक्रमारभ्य नस्तोपाधि निर्वपतीति । यदि हवि(र्द्धा)ने निर्वापः क्रियते तद्देशं तन्नीयेत । तथा प्रधानं सोमकर्म्म विगुणं भवेत् । हवि(र्द्धा)र्द्धानयोर्मन्त्रवच्च नियमवच्च प्रवर्तनं च कृतं तत्सर्वमनर्थकं स्यात् । अथ च पुनः क्रियेते तथाप्यावृत्तिरश्रुतानुष्ठीयेत । अवैगुण्ये च प्रधानस्य प्रसवो युक्तः । यत्कारणं प्रधानस्य यो धर्म्मस्तमितरे न यथाश्रुतमुपजीवन्तीति । परवशत्वात् यदि यथाश्रुतिनास्य कार्य्यं न सिद्ध्यतीति ततः कामं कार्य्यलोपो भवेत् । स्वं वा साधनं प्रयुञ्जीत न शक्नुयात्प्रधानकार्य्यं व्यावहत्य स्वार्थं साधयितुम् । अथ कस्माद्धवि(र्द्धा द्धाने देशे निर्वापो न क्रियते । एवमपि तेषां कर्म्मणा वैगुण्यं भवेत् । सन्त्युत्तरतन्त्रोपजीवीन्येतानि यथावस्थितं परतन्त्रमुपजीवितुमर्हन्ति । यथा पाशुकान् प्रयाजानन्यकालानपि पशुपुरोडाश उपजीवन्ति । उच्यते । उक्तं तत्र प्रकृतास्ते प्रयाजाः । न च कृतस्य क्रमानुग्रहार्थं पुनः क्रिया न्याय्या अयं पुनः करिष्यमाणो निर्वापः शक्यते कर्तुम् । स यदि सगुणः शक्यते कर्तुम् । तथा सगुणः कर्त्तव्यः शक्यते चनोत्तरमुपादेयं तस्मान्न हविर्द्धानयोर्निर्वापः ।

अनोन्तराधिकरणम् ।

## अनसाञ्च दर्शनात् ॥ १७ ॥ (सि०)

अनो बहुत्वञ्च दृश्यते । अनांसि प्रवर्त्तयन्तीति तस्मादप्यनोऽन्तरमुपादेयमिति ।

दीक्षाजागरणभेदाधिकरणम् ।

## तद्युक्तत्वच्च कालभेदात् ॥ १८ ॥ (पू०सि०) ।

सोमदीक्षाकालरात्रिजागरणमाम्नातम् । यां प्रथमां दीक्षितो रात्रिं जागर्ति । तया स्वप्नेन व्यावर्त्तत इति । दर्शपूर्णमासयोरप्यौपवसथ्येऽहन्येवमाम्नातं तत्प्रायणीया-दिषु चोदकेन प्राप्यते तेषां तत्र मध्यपातिदीक्षाकालेनेव जागरणेन प्रसङ्गात् कार्य्यसिद्धौ प्राप्तायामिदमुच्यते । तद्युक्तत्त्व दीक्षायुक्तत्त्व जागरणं नेतरेषु प्रसज्येत । कुतः कालभेदात् । यदि तावद् यज्ञाङ्गानां रक्षणायाप्रसादार्थं ततो दीक्षाकालेषु रक्षितेषु नेतराणि रक्षितानि भवन्ति । इति तद्रक्षणार्थं प्रायणीयादिषूपवसथकाले भेदेन कर्त्त-व्यम् अथाप्यदृष्टार्थम् । तथाप्यौपवसथो रात्रिस्तस्य नि-मित्तं निमित्तप्राप्तौ नैमित्तिकं कर्त्तव्यम् । तस्माद्भेदेन कर्त्तव्यम् ।

विहारपृथक्त्वे तन्त्रावापाधिकरणम् ।

## मन्त्राश्च सन्निपातित्वात् ॥ १९ ॥

वरुणप्रघासेषु विहारपृथक्त्वे सति ये मन्त्राः सन्नि-पातिनो यथाज्यग्रहणे प्रोक्षणेऽभिमर्शने तेषां किं तन्त्रेण प्रयोगः । अथ वा भेदेनेति तन्त्रावापचिन्तेयं न प्रसङ्ग-चिन्ता तत्र प्रयोगवचनानुग्रहाय तन्त्रभावे प्राप्ते उच्यते । मन्त्राश्चाज्यग्रहणादयो भेदेन कर्त्तव्याः । कुतः ? सन्नि-पातित्वात् । सन्निपत्योपकारिण एते मन्त्राः उपस्थितं कर्माभिदधति पृथक्कर्म्माण्यध्वर्युप्रतिप्रस्थातारावुपतिष्ठेते ।

तस्मात् पृथक् प्रयोक्तव्याः। अपि च कारणानां मन्त्राः तेन कर्मादिसन्निपातं वक्ष्यति। मन्त्राणां कारणार्थत्वात् तत्र कर्मादिसन्निपातः स्यात् सर्वस्य वचनार्थत्वादिति। तथा सति येन कर्मणा सन्निपतितो मन्त्रस्तदर्थोऽसाविति गम्यते विशेषः। तस्मादप्यावृत्तिः।

सोमेऽग्न्याधानाधिकरणम्।

**धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न क्रियते ॥ २० ॥ (सि०)**

सोमे दीक्षणीयादिष्वैष्टिकेषु कर्मसु चोदकप्राप्तमग्न्यन्वाधानं किं कर्त्तव्यमुत नेति। कर्त्तव्यम् एवं चोदकोऽनुगृहीतो भविष्यति। एवं प्राप्त उच्यते। न कर्त्तव्यं कुतः? धारणार्थत्वात्। विहृतस्याग्नेर्धारणार्थं तत् सोमार्थेन च विहृतस्य तत्कृतम्। तेन धृतोऽग्निः। न च धृतस्य धारणकार्य्यमस्ति। नन्वमन्त्रकं तत्। सत्यममन्त्रकमपि तु तत्कृतं न च कृतस्य मन्त्रार्थं पुनरावृत्तिरस्ति। तस्मान्न कर्त्तव्यम्।

दार्शपौर्णमासिकव्रताधिकरणम्।

**तथा व्रतमुपेतत्वात् ॥ २१ ॥ (सि०)**

तत्रैव दार्शपौर्णमासिकं व्रतं चोदकप्राप्तं तथैव न क्रियते यथाग्न्यन्वाधानमुपेतत्वात्। न ह्युपेतमनपवृक्तं सच्छक्यमुपेतुम्। अप्राप्तस्य हि प्रापणमुपगमनं तत्प्राप्तस्य न शक्यम्।

**विप्रतिषेधाच्च ॥ २२ ॥ ( हे० )**

अग्ने व्रतपते व्रतं चरिष्यामीति वरणतो वचनं विप्रतिषिद्धं वर्त्तमानस्य भविष्यश्च: ।

**सत्यवदिति चेत् ॥ २३ ॥ ( आ० )**

अथ सत्यवत् कस्मान्न भवति । यथा सत्यवचनं व्रतं पुरुषधर्म्मत्वादनुवर्त्तमानमपि दर्शपूर्णमासयो: पुनरुपेयत इति स्थितायां प्रतिज्ञायां सूत्रेण चोदयति ।

**न संयोगपृथक्त्वात् ॥ २४ ॥ ( आ०नि० )**

तत्र पुरुषसंयोग: कर्म्मसंयोगश्च पुरुषार्थमुपेतं कर्म्मार्थं पुनरुपेयते नन्विहापि संयोगपृथक्त्वात् सोमार्थमुपेतमैष्टिकार्थं पुनरुपेयते इति । नेह उपगमनेनार्थ: यत् सोमार्थं तदेवेतरत्र प्रसङ्गात् कार्यं साधयति । नन्विहापि तद्वदेव साधयिष्यति । साधयेद् यदि कर्मार्थता तस्या- ज्ञाता चेत् । सा त्विहैव ज्ञाप्यते । ऐष्टिकानां तु प्रकृतौ ज्ञाता तस्मात् सत्यदृष्टान्त: किमर्थं ज्ञानस्य तु प्रयोजनं प्रायश्चित्तविशेषस्तृतीयाध्याये व्याख्यात: ।

देवतापरिग्रहाधिकरणम् ।

**ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २५ ॥ (आ०)**

पूर्वोक्तमग्न्यन्वाधानं सौमिकं प्रसङ्गादैष्टिकेषु कार्यं साधयतीत्युक्तम् । तदिदानीमाक्षिप्यते । धारणार्थत्वा- त्तस्य प्रसङ्ग उक्त: । न च तत्केवलं धारणार्थं किं तर्हि धारणार्थञ्च देवतापरिग्रहार्थञ्च । एवं हि दर्शपूर्ण-

मासयो: श्रूयते समाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं गृह्णाति देवता एव तत्पूर्वेद्युर्गृह्णीताः श्वो भूते यजते इति। तत्र यद्यपि धारणार्थं सौमिकेन प्रसङ्गादेतत् सिध्यति। देवतापरिग्रहार्थं तद्दार्शपौर्णमासिकमैष्टिकेषु कर्मसु कर्त्तव्यम्। आह नैतद् युक्तम्। देवतापरिग्रहार्थमपि प्रसङ्गादेव सिध्यति। कुतः। दृष्टेस्तदर्थत्वात्। सोमेऽपि दीक्षणीयेष्टिर्देवतापरिग्रहार्था श्रूयते। आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपेद्दीक्षिष्यमाणोऽग्निः। प्रथमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता यज्ञश्च तदुभयतः परिगृह्य दीक्षत इति सैव देवता परिग्रहणार्था प्रसङ्गादैष्टिकानां साधयिष्यतीति।

शेषवदिति चेन्न वैश्वदेवो हि स्याद् व्यपदेशात्॥ २६॥ (आ०)

उच्यते न सिध्यति दीक्षणीया न देवतापरिग्रहणे वर्त्तते प्रधानाङ्गानाम् देवता अपरिगृहीतास्तत्परिग्रहार्थं दार्शपौर्णमासिकमैष्टिकेषु कर्त्तव्यमिति चेन्न कर्त्तव्यम्। दीक्षणीयैव प्रसङ्गाद्देवता परिग्रहार्था: सेत्स्यति। ननु प्रधानदेवतापरिग्रहार्था दीक्षणीयेत्युक्तम्। प्रधानदेवतायां सती अङ्गदेवतां गृह्णाति कथं वैश्वदेवी हि। अस्ति सोमे वैश्वदेवो ग्रहयज्ञः। तत्र सर्वदेवता इज्यन्त तन्मध्ये चाङ्गदेवता अपि। तस्मात्ताः परिगृहीताः। अनेन तत्परिग्रहार्थेनैष्टिकेनान्य-

न्वाधानार्थेन नार्थः स्याद्व्यपदेशात्। स्यादार्थः ऐष्टिके नाग्न्यन्वाधानेन नाङ्गदेवतापरिग्रहणम्। ननु विश्वे देवा इज्यन्त इति परिगृहीताः। न तत्र सर्वा देवता इज्यन्ते। किं तर्हि विशेषदेवतागणः। यथा साध्यावसवो रुद्रा इति। कथं ज्ञायते। व्यपदेशात् व्यपदेशो भवति। अग्निर्वसुभिः सोमो रुद्रैरिन्द्रे मरुद्भिर्वरुण आदित्यै बृहस्पतिर्विश्वे देवैरिति वस्वादिभ्योऽप्यन्तरभूतान् विश्वे देवान् दर्शयति। यदि च सर्वे देवा उच्येरन् विश्वे देवशब्देन तेभ्योऽर्थान्तरभूता न स्युः। तस्माद्विश्वे देवशब्दो गणवचन एव। एवं वेदपरिगृहीता अङ्गदेवतास्तदर्थमैष्टिकमग्न्यन्वाधानं कर्त्तव्यम्।

**न गुणार्थत्वात्॥ २७॥ (हे०) (आ०नि०)**

नानेन व्यपदेशेन गणो विश्वे देवः शक्यः कल्पयितुम्। गुणार्थोऽयं व्यपदेशो बृहस्पतिप्रसङ्गार्थः अग्न्यादयो वस्वादिभिः। केवलैः समेताः बृहस्पतिस्तत्सर्वैस्तैश्चान्यैश्चेति। यथा सेनापतिभृत्यबलेन सहागतः। समाहर्त्ता निजेन बलेन राजा तु सर्वैर्बलैस्तैश्चान्यैश्चेति। अपि च। वैश्वदेवो गणः कल्प्यः। सर्वे तु देवाः शब्दादेवावगम्यन्ते। तथाच दीक्षणीययागदेवतापरिग्रहेऽपि प्रसङ्गात् सिद्ध्यतीति न कर्त्तव्यम् दार्शपौर्णमासिकमैष्टिकेष्वग्न्यन्वाधानम्।

पत्नीसन्नहनाधिकरणम्।

**सन्नहनञ्च वृत्तत्वात्॥ २८॥ (सि०)**

पत्न्याः सन्नहनं च दर्शपूर्णमासयोः समाम्नातं योक्त्रेण पत्नीं सन्नह्यतीति तत्सोमाङ्गभूतेष्वैष्टिकेषु कर्मसु चोदकेन प्राप्तमपि न कर्त्तव्यम्। कुतः कृतत्वात्। दीक्षाकाले सोमार्थं पत्न्याः सन्नहनं कृतं योक्त्रेण पत्नीं संनह्यति। मेखलया दीक्षितो मिथुनत्वायेति। यदाम्नातं सन्नहनं च वाससो धारणार्थं सर्वार्थमसौमिकेनैवाऽकर्मापवर्गात्। प्रसङ्गेन सिद्ध्यतीति।

आरण्यभोजनाधिकरणम्।

अन्यविधानादारण्यभोजनं न स्यादुभयं हृत्त्यर्थम्॥ २९॥ (पू० सि०)

दर्शपूर्णमासयोरारण्यभोजनमाम्नातम्। यदारण्यमश्नाति तेनारण्यानयो इन्द्रियमेवात्मनो धत्ते इति तत्प्रायणीयादिषु चोदकेन प्राप्यते प्राप्तमपि सन्न कर्त्तव्यम्। किं कारणम्। अन्यविधानात्। यद्दर्शपूर्णमासयोरारण्यभोजनं तद्वृत्त्यर्थम्। सोमेऽप्येतदाम्नातं पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्येति। तदपि दृष्टकार्य्यत्वाद् वृत्त्यर्थमेव तयोः सौमिकं प्रत्यक्षं श्रुतत्वात् प्राधान्याच्च अवश्यं कार्य्यं तेन वृत्तौ प्रसङ्गात् सिद्धायामितरन्निवर्त्तते।

शेषभक्षाधिकरणम्।

शेषभक्षास्तथेति चेत् नान्यार्थत्वात्॥३०॥ (पू० नि०)

दर्शपूर्णमासयोः शेषभक्ष ऐडादिः सोमे वैष्टिकेषु कर्मसु

सोऽङ्कग्रासः सोऽपि सौमिकेन व्रतेनारण्यवन्निवर्त्तेत इति चेत्। न। कस्मात्। न स ह्यर्थः। न ह्यलं हृत्तये संस्कारार्थोऽसौ उपयुक्तशेषत्वात् भक्षणमिति द्वितीयानिर्देशाच्च यजमान पञ्चमास्त्विज इडां भक्षयन्तीति तस्मात् कर्त्तव्यम्।

परिक्रयाधिकरणम्।

## भृतत्वाच्च परिक्रयः ॥ ३१ ॥ ( सि० )

दर्शपूर्णमासयोः परिक्रयोऽन्वाहार्य्य आम्नातः इह चोदकेन प्राप्तः स च कर्त्तव्यः। कुतः। भृतत्वात्। भृतास्त्वृत्विजः सोमार्थेन परिक्रयेण तस्य द्वादशशतं दक्षिणेति। एकदेशकालकर्तृत्वं चाङ्गप्रधानाम्। तस्मात्तैरेवाङ्गानि कर्त्तव्यानि। अतो न पृथगङ्गानां परिक्रयः तस्मादन्वाहार्य्यो निवर्त्तते।

## शेषभक्षास्तथेति चेत् ॥ ३२ ॥ ( आ० )

अथ शेषभक्षा अपि तथा निवर्त्तेरन् यथा अन्वाहार्य्य इति चेत् परिक्रयार्थः शङ्क्योच्यते।

## न कर्मसंयोगात् ॥ ३३ ॥ ( आ० नि० )

नेति निवर्त्तेरन्। नह्येते परिक्रयार्थाः। अन्वाहार्य्येण क्रियमाणानतानां निर्वृत्तिर्भूयिष्ठे कर्मण्येते। न चाल्पमानमानाय। तस्मान्नैते परिक्रयार्थाः। किन्तु संस्कारार्थाः अतस्तदर्थं कर्त्तव्याः।

होत्वरणाधिकरणम्।

## प्रवृत्तवरणात् प्रतितन्त्रवरणात् प्रतितन्त्रवरणं होतुः क्रियेत ॥ ३४ ॥ ( पू० सि० )

दर्शपूर्णमासयोर्होतुर्वरणमाम्नातम्। अग्निर्दैवो दैव्यो होता देवान्यक्षदिति। तच्चोदकैनैष्टिकेषु कर्म्मसु सोमाङ्गभूतेषु चोद्यते। अस्ति तु सोमेऽपि होतुर्वरणम् अग्निर्होता स मे होता होतस्त्वं मे होताऽसीति। होतारं वृणीत इति। तत्र विचार्य्यते। किमैष्टिकेषु कर्म्मसु दार्शपौर्णमासिकं होतुर्वरणं कर्त्तव्यम् उत नेति। किं प्राप्तं न कर्त्तव्यमिति कस्मात्। करणं तावदानत्यर्थं सौमिकेन च वरणेनानति होतुः। साङ्गस्य सोमस्य करणेन चाननत्यानमनकार्य्यमस्ति। तस्मान्न कर्त्तव्यम्। एवं प्राप्ते ब्रूमः। प्रवृत्तवरणान् प्रतितन्त्रं वरणं होतुः क्रियते। नैतदस्ति सौमिकं वरणं प्रसङ्गात् दर्शपूर्णमासिकस्य कार्यं साधयिष्यतीति। प्रवृत्ते वरणात् प्रवृत्ते कर्म्मणीति दार्शपौर्णमासिकं वरणं क्रियेत। अतस्तत्रानत्यर्थं किं तर्हि कर्म्ममात्रं न चेत् क्रियेत तेन गुणे वैगुण्यं स्यात्। तस्मात् प्रतिकर्म्मभेदेन कर्त्तव्यम्।

## ब्रह्मापीति चेत् ॥ ३५ ॥ ( आ० )

इति चेत् पश्यसि प्रवृत्तवरणाद्धोतुर्वरणं प्रति कर्म्म कर्त्तव्यमिति। ब्रह्मापि प्रवृत्ते कर्म्मणि क्रियते प्रणीता प्रणयनकाले तस्मात्तस्यापि वरणं धर्म्ममात्रम्। अतस्तदपि प्रतिकर्म्म कर्त्तव्यम्। वक्तव्यो वा विशेषः।

## न प्राक् नियमात्तदर्थं हि ॥ ३६ ॥ (आ०नि०)

न ब्रह्मवरणं कर्त्तव्यं किं कारणं प्राङ्नियमात् प्राग्-वरणादित्यर्थः सत्यम् प्रवृत्ते कर्म्मणि ब्रह्मणो वरणं प्राग्वरणान्न किञ्चित्। ब्रह्मत्वमस्ति वरणादुत्तरकालं ब्रह्मणः कर्म्म तदर्थं वरणं कर्म्मार्थम्। तस्मान्न धर्म्ममात्रम्। किमर्थं तर्हि आनत्यर्थमेव सौमिकेन वरणेनानतः तस्माद् ब्रह्मवरणं न कर्त्तव्यम्।

## निर्दिष्टस्येति चेत् ॥ ३७ ॥ ( आ० )

अथोच्येत। अस्यमावास्यायामौपवसथ्येऽहनि वेदि कर्म्म निर्दिष्टं पूर्वेद्युरमावास्यायां वेदिं करोतीति तत्र वेदि परिग्रहे प्रसवो ब्रह्मणा क्रियते तेन ब्रह्मापि वृत्तवरण इति।

## नाश्रुतत्वात् ॥ ३८ ॥ ( आ० नि० )

पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतं न परिग्रहणम् अश्रुतत्वात्। यथाकालमेव वृते ब्रह्मणि परिग्रहः करिष्यते वरणस्य कर्मार्थत्वात्। न प्राग् वेदिकरणात् पूर्वं परि-ग्रहः तत्रापि ब्रह्मणा प्रसवो दातव्यः। बाढ़म् अयं तर्ह्यन्यः परिहारः दर्शपूर्णमासप्रकरणे हविषामधिवासना-दूर्ध्वं वेदिकरणमाम्नातम्। ब्रह्मवरणमपि प्रणीताप्रण-यनकाले प्राक् जन्मत्वप्रवृत्ते दृष्टार्थत्वादानत्यर्थम्। एवं स्थिते अमावास्यायां वेदिकरणवचनेनोपदिष्टं तस्मिन्नप-कृष्यमाणे परिग्रहोऽप्यपकृष्टः प्रसवोऽपि ब्रह्मवरणमपि प्रधानदेयकालत्वाद् गुणानाम्। एवं सति पौर्णमास्यां

प्रणयनकाले ब्रह्मवरणममावास्यायां पूर्वेद्युरुभयत्रावृत्ते ब्रह्मत्वे तस्मादुभयत्रानर्थ्यम्। अतो न प्रतिकर्म्म ब्रह्म-वरणं कर्त्तव्यम्। सौमिकेनैव वरणेनानतत्वात् ब्रह्मणः।

## होतुस्तथेति चेत्॥ ३९॥ (आ०)

इति चेत् पश्यसि। यद्यपि प्रवृत्ते कर्म्मणि ब्रह्मणो वरणं न च वरणात् प्राक् किञ्चिद् ब्रह्मणः कर्मास्ति तस्मान्न प्रवृत्तवरणे ब्रह्मेति। होतुस्तथा होतुरपि प्राग्-वरणान्न किञ्चित् कर्म्मास्ति तस्यापि वरणं न धर्म्ममात्रम्।

## न कर्मसंयोगात्॥ ४०॥ (आ० नि०)

अस्ति होतुः प्राग्वरणात् सामिधेनीकर्म्मणा संयोगः प्रवृत्तः सामिधेनीरन्वाहेति। तस्माद्धोतृवरणमदृष्टार्थम्। तदैष्टिकेषु कर्म्मसु दीक्षादिषु कर्त्तव्यम्। ब्रह्मवरणं तु दृष्टार्थम्। तत्सौमिकेनैव कृतत्वात् न कर्त्तव्यमिति।

बर्हिः प्रोक्षणाधिकरणम्।

## यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात् प्रतितन्त्रं क्रियेत॥ ४१॥ (पू० सि०)

सोमे श्रूयते। यदातिथ्यायां बर्हिस्तदुपसदां तदग्नी-षोमीयस्येति। तत्र यन्निष्ठितस्य बर्हिषो लूनस्य क्रियते तथा प्रोक्षणमग्राणामपपातनं मूलानामवसेचनं तत् किमातिथ्यादिप्रयोगभेदेन कर्त्तव्यम्। अथ वा यदाति-थ्यायां कृतं तदेवेतरत्र प्रसज्यते। किं प्राप्तं यज्ञोत्पत्त्युप-देशे एकस्मिन् यदातिथ्यायां बर्हिस्तदुपसदामिति यन्नि-

यतस्मिति कर्म क्रियेत। तत्प्रयोगभेदाद्भिन्नम्। भिन्न-प्रयोगाख्येतानि आतिथ्यादीनि कर्माणि तेषु दृष्टान्ते विशेषः। यद् यस्य प्रयोगे प्रोक्षणादिकृतं तदर्थमिति। तस्मादन्यार्थमावर्त्तयितव्यमिति। एवं प्रति कर्माभ्यासः। न चात्र प्रसङ्गो युज्यते। न ह्यातिथ्यायास्तन्त्रमध्यपतिता उपसद अग्नीषोमीयो वा। न च कृतत्वादुपदेशो हि। न वा प्रोक्षणादि कर्त्तव्यम्। कुतः कृतत्वात्। कृतं तदातिथ्यायां बर्हिषः। तेन संस्कृतं तद्बर्हिः पुनःक्रियायां हेतुर्नास्ति। ननु कर्मार्थाः संस्काराः। न कर्म भिन्नम्। अतो यस्मिन्नेव कर्मणि क्रियन्ते तदर्थाः भवन्ति। कर्मार्था अप्येते सन्तानास्कन्दपातिका यत् कर्माणि न सम्बध्यन्ते। किं तर्हि बर्हिर्द्वारेण यदीयं बर्हिः तेन सम्बध्यते। साधारणं चेदमातिथ्यादीनां बर्हिः। कथं ज्ञायते। तदुपदेशो हि यदातिथ्यायां बर्हिरित्यनेन वाक्येन तेषां बर्हिषः साधारण्यमुच्यते। न धर्मातिदेशः। न हि निर्दिष्टिकोपदेश इत्युक्तम्। अपि वोत्पत्तिसंयोगात्तदर्थ-सम्बन्धो विशिष्टानां प्रयोगैकत्वे हेतुः स्यादिति। एवं चेदातिथ्यायामपि क्रियमाणाः संस्काराः सर्वार्था एव भवन्ति। तस्मान्न प्रतिकर्त्तव्या इति।

तत्र स्तरणमन्त्रस्याप्रसङ्गाधिकरणम्।

**देशपृथक्त्वात् मन्त्रो व्यावर्त्तते ॥४२॥ (प्रसि०)**

तत्रैव स्तरणमन्त्रश्चिन्त्यते। किमग्नीषोमीये भेदेन कर्तव्यः। अथवा आतिथ्यायां प्रयुक्तः स एव प्रसज्यत इति

साधारणे बर्हिषि प्रयोगात्। पूर्वोक्तेन न्यायेन प्रसङ्गे प्राप्त उच्यते। मन्त्रो व्यावर्त्तते भेदेन कर्त्तव्य इति। कुतः? देशपृथक्त्वात्। पृथगितौ देशौ उत्तरवेदिसमीपं प्राग्वंशश्च। देशभेदात् स्तरणमावर्त्तते। स्तरणाङ्गश्च मन्त्रः। ऊर्णां म्रदसन्त्वास्तृणामीति स्तरणावृत्तौ मन्त्रस्य व्यावृत्तिर्न्याय्या। प्रधानतन्त्रत्वात् गुणानामपि च स्तरणं देशसंस्कारकं तेनातिव्याप्यां प्राग्वंशदेशः संस्कृतो नोत्तरवेदिदेशस्तत्र यदि मन्त्रो न प्रयुज्येत विगुणस्तस्य संस्कारः स्यात्। तस्मादावृत्तिस्तरणमन्त्रस्य।

सन्नहनहरणमन्त्राधिकरणम्।

## सन्नहनहरणे तथेति चेत् ॥ ४३ ॥ (पू०)

अग्नीषोमीय एव देशान्तरं नीयमानस्य बर्हिषः सन्नहनहरणमन्त्रौ प्रयोक्तव्यौ वा नेति चिन्त्यते। तत्राह सन्नहनहरणमन्त्रौ तथा यथा स्तरणमन्त्रः भेदेन प्रयोक्तव्याविन्यर्थः। कुतः। उक्तो न्यायः। सन्नहनहरणमन्त्रौ कर्माङ्गे ते च कर्मणि आवर्त्तेते। अतो मन्त्रयोरावृत्तिर्न्याय्या तस्माद्भेदः।

## नान्यार्थत्वात् ॥ ४४ ॥ (सि०)

नैतद्युक्तम् कुतः अन्यार्थत्वात् लूनस्य बर्हिषो वै सन्नहनहरणे ते उपादानार्थे। तथाहि स्वीक्रियमाणस्यैवोपवर्णनारूपं पूषा ते ग्रन्थिं ग्रथ्नातु बृहस्पतेर्मूर्ध्ना हरामीति। इमे पुनः स्वीकृतस्य देशान्तरप्रापणार्थे अन्यार्थत्वादप्राकृतकार्येण मन्त्रं गृह्णीतः। यथा तत्रैवा-

तिष्ठायां यदा गार्हपत्यदेशादाहवनीयदेशं प्रोक्ष्य बर्हिर्नीयते न तदाहरणमन्त्रः प्रयुज्यते एवमिहापि।

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये
द्वादशाध्यायस्य प्रथमः पादः।

---

विहारे लौकिककार्य्यप्रतिषेधाधिकरणम्।

## विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥ (पू०)

विहार इति गार्हपत्यादिरग्निरुच्यते विहरणात्। स लौकिकानां कर्म्मणां पर्व्वणां स्थालीपाकादीनामन्येषां वाग्निसाध्यानां पचनदहनप्रकाशनादीनामर्थं साधयेत् निर्वृत्तिं कुर्य्यात् प्रभुत्वात्। प्रभवति ह्याहुतिप्रक्षेपणे पाकादौ च संयुक्तं च केनचित्प्रयोजनेनाग्निद्रव्यमुत्पन्नं वसन्तेऽग्नीनादधीतेति तत्सामर्थ्याद् यत्र यत्रोपयुज्यते तत्र तत्रोपयुज्यते एवं तस्योत्पत्तिरर्थवती भवति।

## मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ (हे०)

मांसपाकप्रतिषेधो भवति तद्वत्। यद्वत् न्यायोपदिष्टः मांसं न पचेयुः। यस्मिन्नग्नौ ये च पचेयुः। क्रव्यादं कुर्युरिति। लौकिके हि पाके मांसप्रसङ्गो न वैदिके श्रामिके मांसपाकम्।

## निर्देशाद् वा वैदिकानां स्यात् ॥३॥ (सि०)

वैदिकानां वा कर्म्मणां विहारोऽर्थं साधयेन्न लौकिकानां कुतः निर्देशात् निर्दिश्यते गार्हपत्यादीनां कार्यं यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतो भवतीत्येवमादिभिर्वाक्यैर्यासावुत्पन्ना कार्य्याकाङ्क्षा सा एतैर्वचनैर्निवर्त्तिता एवमर्थैवैषामुत्पत्तिः। तस्मान्न लौकिकेषु प्रसज्येरन् माठरादीनामयं परिहारो न स्थालीपाकादीनां तेषामप्याहवनीय एव होमः प्राप्नोति नैष दोषः यदाहवनीये जुहोतीति नियमार्थ एष वादः। अन्तरेणापि हि वचनमाहवनीये होमोऽन्यत्र च प्राप्तः। तदेतत् नियमशासनं यत्रानियमप्रसङ्गस्तद्विषयो विज्ञायते। वैदिकेषु चानियमप्रसङ्ग आगत आयतनस्यानिर्दिष्टत्वात्। लौकिकानां तु निर्दिष्टमायतनं औपासनोऽग्निः। तस्मान्न तान्याहवनीये प्रसज्येरन्।

## सति चोपासनस्य दर्शनात् ॥ ४ ॥ (हे०)

सति च विहारे औपासनोऽग्निर्दृश्यते यः कामयेत राष्ट्रमस्यै प्रजायै स्यादिति। तस्यौपासने प्रतिहतमन्या जुहुयादिति। राजसूये प्रवृत्ते कर्म्मणि एतद्वचनं तस्मिंश्च काले विहारोऽस्ति यदि च तत्रैव लौकिकानां कार्य्यं साधयेत्। यदि च सत्याल्तस्यां नौपासनकार्य्यभावात् स्यात्।

## अभावदर्शनाच्च ॥ ५ ॥ (हे०)

मांसपाकस्य च वैहारिकेऽग्नावभावं दर्शयति। मांसी

यति वा एतस्याहुतस्याग्नयो यजमानस्य ते यजमानमेव ध्यायन्ति। यजमानं सङ्कल्पयन्ति पचन्ति ह वा अन्येष्वग्निषु वृथामांसमथैतेषां नातोऽन्या मांसाशा विद्यते। अन्यत्र पशुबन्धान्मांसस्याशनमेव वैहारिकाणामग्नीनां परिहरति तस्मादपि न लौकिकेषु विहारप्रसङ्गः।

**मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् ॥ ६ ॥(आ०नि०)**

यत्तु मांसपाकप्रतिषेधश्च तद्वदिति। तद्विहितप्रतिषेधः स्यात्। आहवनीये वपायाः श्रपणं विहितं तस्यायं प्रतिषेधः। कस्मात् प्राप्तत्वात्। आहुतिसंयोगाच्च। तस्मान्नाग्नौ मांसं पचति यस्मिन्नाहुतीर्जुहोति। संयोगवाक्यशेषे श्रूयते। आहवनीये चाहुतयो हूयन्तेऽस्माद्वपाश्रपणस्यायं प्रतिषेधः।

**वाक्यशेषो वा दक्षिणस्मिन्ननारभ्य विधानस्य ॥ ७ ॥ (आ०नि०)**

अथवाऽयमन्यः परिहारः दक्षिणाग्नौ व्रतश्रपणवाक्यस्यायं विशेषः। अन्यत्र मांसादिति। या सरस्वतीवेशमतीति पशुपुरोडाशो न स्यात्। न कर्त्तव्यः। कुतः छिद्रापिधानार्थत्वात्। योऽसौ दक्षिणाग्नौ होमः तत्रैतत् श्रूयते तस्माद्दक्षिणाग्न्यभिप्रायं विज्ञायते।

पशुपुरोडाशाधिकरणम् ।

**सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥ (पू०)**

पशुपुरोडाशो न कर्त्तव्यः । कुतः छिद्रापिधानार्थत्वात् । पशोः छिद्रापिधानार्थः स एवं प्रस्तूयते सुषिरो वै-तर्हि पशुर्वर्हिर्वपामुत्खिदति यद्‌व्रीहिमयः पुरोडाशो भवत्यपिधानायाऽसुषिरायेति । अन्येषां चैवमर्थत्वात् । तच्छिद्रापिधानमन्यैरेव क्रियते । सवनीयैः पुरोडाशैः । तथापि श्रूयते अनुसवनीयाः पुरोडाशाः निरूप्यन्ते पिहित्यै अच्छिद्रताया इति । अतः कृतार्थत्वात् पशुपुरोडाशो निवर्त्तते ।

**क्रिया वा देवतार्थत्वात् ॥९॥ (सि०)**

कर्त्तव्यो वा पशुपुरोडाशः । कुतः ? देवतार्थत्वात् । देवतासंस्कारार्थोऽयमित्येतदुक्तम् अपि वा शेषभूतत्वात् संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगादिति । न च पुरोडाशः छिद्रापिधानार्थः प्रत्यक्षविरोधादर्थवाद-मात्रं तत् पुरोडाशपिधानार्थं वादमात्रे सवनीयेष्वित्येव-मेवायात् तस्माच्चोदकप्राप्त्या कार्य्यः पुरोडाशः ।

**लिङ्गदर्शनाच्च ॥ १० ॥ (हे०)**

यथा प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने अङ्गैः तृतीयसवन इति । तत्रविप्रकर्षपरे वाक्ये पुरोडाशं दर्शयति । तस्मादपि कार्य्यः ।

सवनीये हविष्कृदाह्वानाधिकरणम् ।

**हविष्कृत्सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्थं पशुं प्रत्याहृता मा कुर्याद् विद्यमानत्वात् ॥ ११ ॥ (पू०)**

सवनीयेषु पुरोडाशेषु हविष्कृदाह्वानं न कर्त्तव्यं कुतः ? पशुं प्रत्याहृतासौ पशुमध्यपतिताश्च सवनीयाः तेषु सैव विद्यमानत्वात् प्रसङ्गादुपयोक्ष्यते। नार्थः पुनराह्वानेन नैव पशोर्हविष्कृदस्ति औषधार्था अवहननार्था वा यथा पत्नीवत् तुल्यवत् श्रूयत इति। संकर्षे वक्ष्यति। प्रकृतौ यदि सर्वार्था आद्यौषधिसान्नाय्यार्थेत्येवं कृत्वा चिन्त्यते कृत्वा चिन्तेयम्।

**पशौ तु संस्कृते विधानात् ॥ १२ ॥ (२पू०)**

तार्त्तीयसवनिकेषु पुरोडाशेषु तु सौम्याश्विनयोश्च भेदेन हविष्कृत् स्यात्। कुतः ? पशौ संस्कृते विधानात्। पक्षे पशावेते विधीयन्ते तस्मिन्काले पाशुकी हविष्कृत् कृतार्थत्वादपवृक्ता। तस्मादन्या ह्वातव्या।

**योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥ (सि०)**

न वान्या आह्वातव्या सैव कुर्याद्विद्यमानत्वात्। न तु कृतार्थत्वादपवृक्तासौ नापवृज्यते। कुतः यज्ञायासौ पशुबन्धापवृक्ता आदावेव न केवलं सा यज्ञाङ्गानि सर्वाणि सा-

धयितुम्। कस्त्वायुनक्ति सत्वायुनक्तीत्येवमादिना मन्त्रेण यज्ञार्थं युक्ता तस्या यद्विमोको विसर्गो न्याय्यः तत्कारणं कस्यांचिदापदि पुनस्तथा कदाचित् कार्यं भवेत्। तस्मान्न भेदेनाहृतव्या।

निशियज्ञाधिकरणम्।

## निशियज्ञे प्राकृतस्याप्रवृत्तिः स्यात् प्रत्यक्षशिष्टत्वात्॥ १४॥ (पू०)

इदं श्रूयते। अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्। योरक्षोभ्यो बिभीयादिति। पुनरपि तत्रैवामावास्यायां निशि यजेतेति। तस्मिन् किममावास्या तन्त्रं निशि प्रसज्यते उत नेति। चिन्तायां पक्षः परिगृह्यते। निशि यज्ञे प्राकृतस्याप्रवृत्तिरिति। अस्मिन्निशियज्ञे प्राकृतस्य तन्त्रस्यातन्त्रस्याप्रवृत्तिः न प्रसज्यते कुतः? प्रत्यक्षशिष्टत्वात्। प्रत्यक्षशिष्टा इयमिष्टिः अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपति योरक्षोभ्यो बिभीयादिति उक्तं किमतः तत एवं विज्ञायते स्वतन्त्रेयमुत्पन्ना न कस्यचित् कर्मणस्तन्त्रं मध्ये यथा पशुपुरोडाशोऽग्नीषोमीयस्य वपया प्रचर्य्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालन्निर्वपतीति। यथा वैष्णवी वैश्वदेवस्य यदधोऽवभृथे तथा स्फ्यया आश्रियेत तद्विष्णव उरुक्रमायावद्येदिति। न त्वमावास्यायामित्यामावास्या कर्म्मणो मध्ये श्रुता नामावास्याशब्दः कर्मवचनः। किं तर्हि कालवचनः काले श्रुतिः कर्मणि लक्षणा, श्रुतिश्च लक्षणातोन्याय्या न चेत्। कस्य-

चित् कर्मणो मध्ये श्रूयते कस्य तन्त्रं ग्रहीष्यते न तस्मात् स्वतन्त्रा ।

## कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥१५॥(सि०)

कालभेदाद् वाक्यभेदस्तावदमावास्यायां रात्रौ निशि यज्ञः प्रतिपद्यहन्यमावास्या कालभेदेन वैगुण्यान्नामावास्यातन्त्रं निशि यज्ञस्योपकर्त्तुमर्हति कथं तर्हि पाशुकाः प्रयाजास्तिष्ठति पशौ क्रियमाणाः सन्तस्तस्य पुरोडाशस्योपकुर्वन्ति उक्तस्तत्र न्यायो न क्वतस्य गुणानुग्रहार्थमावृत्तिरस्तीति । इह पुनरक्वतामावास्या तस्मादवैगुण्याय स्वतन्त्रं कर्त्तव्यम् । वाक्यभेदाच्च भिन्नदेशे चैकवाक्ये अमावास्यायां यजेत अमावास्यायां निशि यज्ञेनेति एवं दर्शपूर्णमासप्रकरणे । एवं काम्यास्विष्टिषु । किमतः । यदि समानदेशे स्यातां ततः अमावास्यायां यजेतेति आमावास्ये कर्मणि काल उपात्तस्तस्मिन्नेव च निशि यज्ञश्चोदित इति गम्येत तत्रामावास्यामध्य एव विहितः स्यात् । यथा पुनर्देशभेदे सति यथामावास्यायां यजेतेत्येकं दर्शपूर्णमासप्रकरणे, एकं काम्यास्विष्टिषु अनुपादेयत्वेन चोद्यते एवमिहापि ! न तुल्यकालत्वे प्रसङ्गो भवति । यथा विक्वता इष्टयो दर्शपूर्णमासाभ्यां तुल्यकाला अपि सत्यो न दार्शपौर्णमासिकं तन्त्रमुपजीवन्ति तस्मात्तन्त्रभेदः ।

वेद्युद्धननाधिकरणम् ।

## वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥१॥(पू०)

किमेष एवोत्सर्गः सर्वतन्त्रं भिन्नम् । न खलु वेद्युद्धननं व्रतं तदेव यद्दर्शार्थं वेदेरुद्धननं कृतं तेनोद्धतायाः पुनरुद्धननेन हि किञ्चित्कार्य्यमस्ति केवलं कृतदूषणं भवेत् । व्रतं चोपेतमनुत्सृष्टं पुनरुपेतुमशक्यम् उपेयमानञ्च पिष्टपेषणवदकिञ्चित्करं स्यात् । तस्मादेतदुभयमपि तदेव प्रसज्यते ।

**तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥१७**

**(सि॰)**

तत्तन्त्रा वा निशीष्टिः स्यात् । आमावास्यातन्त्रेयं न स्वतन्त्रा कुतः ? तन्त्रमध्ये विधानात् । आमावास्यातन्त्रमध्ये इयं विहिता आमावस्यायां निशि निर्वपेदिति न तु कालवचनोऽमावास्याशब्दो न कर्म्मवचन इत्युक्तं सत्यं कालवचनः स तु कालस्तन्त्रमध्ये तत्र विधीयमानत्वात् तन्त्रमध्ये विहिता भवति सवनीयवत् । तद्यथा सवनीयाः पुरोडाशा न ता ॥ पशुकर्म्मोद्दिश्य विधीयन्ते अथ च पशुतन्त्रमध्ये विहि भवन्ति यस्मिन् स्थाने विहिता तत्स्थाने पशुतन्त्र मपि तन्त्रमध्ये पतिता सवनीयभेदे च न स्वतन्त्रा भवितुमर्हति ।

इध्मबर्हिरधिकरणम् ।

**वैगुण्यादिध्मबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवतार्थम् ॥१८॥ (पू॰सि॰)**

अत्राह किमेष एवोत्सर्गः सर्वममावास्यातन्त्रनिशी-

थ्यर्थं साधयतीति न खलु इध्मावर्हिर्न साधयेत् कुतः। वैगुण्यात्। इध्मो नामाग्निसमिन्धनार्थः स प्रतिपद्याह्नितः अमावास्यायां निशि वर्तमानस्य निशि यज्ञस्याग्निं समिन्धनं साधयेद्वर्हिरपि वेदिस्तरणार्थम्। ते यदि प्रसज्येयातां विगुणो निशियज्ञः स्यात्। तस्माद्भेदेन ते कर्त्तव्ये॥

देवतार्थाग्न्यन्वाधानाधिकरणम्।

**अग्न्यन्वाधानञ्च यदि देवतार्थम्॥१९॥ (पू०)**

यदि देवतापरिग्रहार्थमग्न्यन्वाधानं तदपि भेदेन कर्त्तव्यम्। प्राकृतेनाग्न्यन्वाधानेनामावास्यादेवताः परिगृहीताः न च रक्षोघ्नोऽग्निः तत्परिग्रहार्थमप्यग्निधारणार्थं ततः प्राकृतेनैव धारितत्वादग्नेर्न कर्त्तव्यं देवतापरिग्रहार्थता वाक्यशेषे श्रूयते ममाग्ने वर्चोविहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाति देवता एव तत्पूर्वेद्युः परिगृहीताः। श्वो भूते हि यजत इति अचाम्रक्षते।

आरम्भणीयाधिकरणम्।

**आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् कृता पुनस्तदर्थेन॥२०॥(पू०)**

वैकृतेषु कर्मसु दार्शपौर्णमासिकारम्भणीया कर्त्तव्या उत नेति विचारेण कर्त्तव्येत्युच्यते। किं कारणं प्रकृतिकालमध्यत्वात्। प्रकृते दर्शपूर्णमासयोर्यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति तन्मध्ये वैकृतानि कर्माणि यत्तत्र कृता पुनस्तदर्थेन कृतस्य यावज्जीविकस्य प्रयोगस्यार्थेन आदौ कृतारम्भणीया।

## सकृदारम्भसंयोगात् ॥२१॥ [हे०]

एकः पुनरारम्भो यावज्जीवप्रयोगादित्युक्तम्। एवं सैव तेषां प्रसङ्गात् कार्य्यं साधयिष्यतीति तस्मान्न तेषु भेदः स्यात्।

## स्याद्वा कालशेषभूतत्वात् ॥२२॥(सि०)

स्याद्वा विकृतिष्वारम्भणीया कुतः? चोदकेन प्राप्यत इति न तु प्रकृतिकालमध्यपातात् प्रसज्यत इत्युक्तं न यावज्जीवकालः। प्रकृतेः शेषभूतत्वात् काल-धर्म्मोऽसावित्युक्तं कर्त्तुर्वा श्रुतिसंयोगादिति योऽसौ काल-धर्म्मनियमः। तस्याकालः प्रकृतेस्तु दर्शपूर्णमासः स्वकालः तस्मान्न दर्शपूर्णमासप्रयोगस्य तन्त्रमध्ये प्रतीमा विकृतयः अतो न स्वारम्भणीया प्रसज्यते। अन्यथा कृत्वा दोष उक्तोऽन्यथा परिहारः दार्शपूर्णमासिके यावज्जीवं काल इति कृत्वादोष उक्तः॥ नैयमिक इति परिहारः पत्त्या-न्तरैरपि परिहारा भवन्ति॥

## आरम्भविभागाच्च ॥२३॥ (हे०)

विभक्तः प्रकृतिविकृत्योरारम्भस्तदा प्रकृतिरुत्पन्नस्यैव हि कामेन निमित्तेन वा चोद्यते। अतस्तस्याः प्रकृत्यारम्भेणारम्भः आरम्भभेदाच्च तन्निमित्ताया आरम्भ-णीयाया भेदः स्यात्। तस्माद्विकृतिष्वारम्भणीया।

विप्रतिषिद्धधर्माणां समवाये भूयसां स्वधर्मकत्वाधिकरणम्।

पञ्चदशरात्रे अग्निष्टुदेकाहः प्रथममहः। ततोज्योति-

गौरायुरिति अहः। परिशिष्टेष्वेकादशाहिको धर्मः कर्त्तव्य
इत्याश्निष्टुत इति ननु सिद्धमेतत् चोदकनामधेययोर्बलाबल
परीक्षायामैकाहिको धर्मः कर्त्तव्य इत्युक्तम्। न
च क्रत्वभिधानादधिकानामशब्दत्वमिति तथा सिद्धन्या-
यान्तरेणाक्षिप्यते। अथवा नाम्नामेव मिथश्चिन्ता।

विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्
सधर्म्मकत्वम् ॥२४॥ [सि॰]

विप्रतिषिद्धधर्माणामेतेषामग्निष्टुतस्त्वेकादशानां चाह्नां
समवाय एतस्मिन् पञ्चदशरात्रे भूयसामेकादशानामह्नां
सधर्मकत्वं स्यात्। तदीयो धर्मः कर्त्तव्यः को हेतुः
भूयस्त्वमेव। बहुषु गुणसम्पन्नेषु महत्फलं भवति।
एकस्मिन्नल्पं फलम्। एष लोके दृष्टान्तः। लोके
एकादशसु प्रदीपेषु तैलवर्त्तिसम्पन्नेष्वेकस्मिन् गृहे
महान् प्रकाशो भवति। विपर्य्यये अल्पः। किं पुनरिहोदा-
हरणम्। सुब्रह्मण्याग्निष्टुत्याग्नेयी इतरेष्वहःस्वैन्द्री-
तत्रैन्द्री कर्त्तव्या॥

तुल्यसंख्यानां मुख्यधर्मग्रहणाधिकरणम्।

मुख्यं वा पूर्वचोदनाल्लोकवत् ॥२५॥ सि॰

यत्र तुल्यसंख्यानां प्रधानानां धर्मविप्रतिषेधः। तत्र
मुख्यधर्मःकर्त्तव्यः यथाग्नावैष्णवमेकादशकपालं निर्वपेत्
संग्रामे। सारस्वतीं मेषीं वानस्पतये इति तत्र मुख्य-
स्याग्नावैष्णवस्य कल्पो भवति कुतः? पूर्वचोदनात्।

पूर्वचोदितत्वात्। पाठक्रमेणापूर्वमग्नावैष्णवः कर्त्तव्यः। तस्य धर्मा अप्रत्यनीकाः प्राप्नुवन्ति उत्तरस्य तु पूर्वेण विरुद्धाः तदुत्तरकाला हि तस्य प्राप्तिः। तद्धर्माणाञ्च पूर्वस्य कृते कल्पे उत्तरस्य तेनैव कृतार्थत्वात्। स्वकल्पो निवर्त्तते। एकाधिकरण्यं चैके मन्यन्ते। तेषां दक्ष-दृगराचेऽपि मुख्यधर्मानुग्रहणं वा।

## तथा चान्यार्थदर्शनम् ॥ २६ ॥ (उदा०)

अन्यार्थोऽपि पूर्वं प्राप्तस्य बलीयस्त्वं दर्शयति। अध्वरस्येव पूर्वमथाग्नेयीज्यते रूपापिच्छेव कल्पवदग्नि-कर्मेति इदं चापि यथा वै पूर्वावसायिनो जघन्यावसायिनं नोत्तीयन्ते नावसास्यन्तीत्ये वसेवेतदिति।

ज्योतिष्टोमे दीक्षणीयाधिकरणम्।

## अङ्गगुणविरोधे च तादर्थ्यात् ॥२७॥ (पू०सि०)

ज्योतिष्टोमे दीक्षणीया आग्नावैष्णवमेकादशकपाला-न्निर्वपेत् दीक्षिष्यमाण इति तत्रैव। स सोम्यसहः तयोः पूर्वकालः य इष्ट्वा पशुना सोमेनाग्रयणेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति वचनात्। यदा एका दीक्षा तिस्र उपसद इत्येवमादयः कल्पास्तदा-विरोधः। तत्र चिन्ता किं दीक्षा पर्वणि कर्त्तव्या। अपर्वणि सुत्या उत विपर्यय इति मुख्यत्वाद्दीक्षा कार्येति प्राप्त उच्यते। अङ्गगुणेन प्रधानगुणस्य विरोध एतस्मि-न्न गुणो बाध्येत। कुतः तादर्थ्यात्। अङ्गगुणवत् क्रि-

यते प्रधानं सगुणं स्यात् इति चेदङ्गे गुणवति क्रियमाणे विगुणमापद्यते कोऽर्थोऽङ्गेनागुणवता कृतेन। तस्मात्पर्वणि शुल्वा कर्त्तव्या अपर्वणि दीक्षा।

परिध्यधिकरणम्।

## परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥ २८ ॥ (पू०)

पशुमत्सु चातुर्मास्येषु श्रूयन्ते। परिधौ पशुं नियुञ्जन्तीति स परिधिरुभयधर्मा स्यात्। परिधर्मा यूपधर्मा च कस्मात् द्व्यर्थत्वात् स करोति अग्नेश्च परिधानं पशोश्च प्रागल्भ्यमर्थप्रयुक्ताश्च धर्मास्तस्मादुभये कर्त्तव्याः। अविरुद्धाश्च ये यथा यवमतीभिरद्भिः प्रोक्षणमञ्जनं परिव्याणमिति यूपधर्माः। इध्मसन्नहनं समानं जुह्वा वसुरसीत्येवमादिभिरञ्जनमध्याश्रावणमिति परिधिधर्माः।

## यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥२९॥(पू०)

विरोधे तु सति यूपधर्माः कस्मान्मुख्यानन्तर्यात्। मुख्यः पशुः स हि यजिं निर्वर्त्तयति। तस्यानन्तरो यूपः सन्निपातित्वात्। तेन सोऽन्तरङ्गः परिधिस्त्वग्निना सम्बध्यते। अग्निर्हविषा स बहिरङ्गः। अन्तरङ्गबहिरङ्गयोश्चान्तरङ्गं बलीयः। तत् कस्य हेतोः। अत्र हि पूर्वः प्रत्ययो भवेत्। इमे धर्मा अपूर्वार्थाः। तत्साक्षादपूर्वेणासम्बध्यमानाः तदङ्गेषु विज्ञायन्ते अतस्तत्र बुद्धिरपूर्वासम्भवेन निर्वर्त्तमानाङ्गेषु प्रवर्त्तमानान्तरङ्गे तावदापतति ततो व्यवहितो बहिरङ्गे च यत्र पूर्वमापतति। तत्रैव तिष्ठति तदतिक्रमे कारणाभावात्। तस्माद्विरोधे ये ये

धर्मास्ते कर्त्तव्याः। कः पुनरसौ तच्चणमुच्छ्रयणं निखनन-मिति।

## इतरो वा तस्य तत्र विधानात् उभयोश्चाङ्ग-संयोगः ॥ ३० ॥ (सि॰)

इतरो वा यूपधर्मो वाऽविरोधी कर्त्तव्यः कुतः? तस्य तत्र विधानात्तस्य यूपकार्य्यस्य पशुनियोजनस्य तत्र परिधौ विधानात्। परिधौ पशुं नियुञ्जन्ति अवस्थाप्य परिधित्वं नियोजनमुच्यते। तस्य परिधित्वानुपमर्द्देन विज्ञायते। तथाभूतोपदेशात्। यथा खलेवालीयूपो भवतीति। यद्युच्छ्रयेत तच्चेद्वा परिधित्वमेव व्याहन्येत सत्योक्तोऽसावुपशमश्च तत्र परिधौ पशुं नियुञ्जन्तीत्येतदेव वाऽयथार्थं स्यात्। उभयोश्च पत्तयोरङ्गेनैव धर्मस्य संयोगः उभयोश्चाङ्गसंयोगः न क्वचित्प्रधानेन प्रत्यासत्तिरिति यच्च सत्योपकारविशेषः तस्मादकरणं सा अतः परिधिधर्मः कर्त्तव्यः।

सवनीयपुरोडाशाधिकरणम्।

## पशुसवनीयेषु विकल्पः स्यात् वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३१ ॥ (पू॰)

सवनीये पशौ सवनीयेषु पुरोडाशेषु पुरोडाशे प्रसङ्गे विकल्पः स्यात् पाशुकं वा तन्त्रं सवनीयेषु प्रसज्यते। सवनीयतन्त्रं वा पशोः कुतः? विशेषाभावात्। नात्र पुरोडाशाः पशुतन्त्रे विधीयन्ते। न पशुपुरोडाशतन्त्रे उभयोः स्वतन्त्रम् आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परि-

यीयाग्नेयं सवनीयं पशुमुपाकरोति अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्त इति तत्र यदि कस्यचित् प्रत्यक्षशिष्टं स्यात्। कस्यचिदानुमानिकं तदा यस्य प्रत्यक्षशिष्टं सतन्त्री स्यादितरः प्रसङ्गभाक् उभयोश्चाश्रुतभूतत्वं पशुरपि वैकृतः पुरोडाशा अपि तेनायमपि विशेषो नास्ति अत उभयो-स्तुल्यप्राप्तेरन्यतरेण कृतार्थत्वाद्विकल्पः। ननु वैकृत एवायं पशुः तत्र वैकृतश्चेति संशयवचनं न युक्तम्। अत्रोच्यते। असंशयितेऽपि संशयवादी भवति। यथा ईजानाबहु-भिर्ब्राह्मणावेदपारगाः। शास्त्राणि चेत्प्रमाणं स्युर्यतस्ते परमा गतिः।

## पाशुकं वा वैशेषिकाम्नानात्तदनर्थकं वि-कल्पे स्यात् ॥ ३२ ॥ (सि०)

पाशुकं वा तन्त्रं पुरोडाशेषु प्रसज्यते। न विकल्पः स्यात् कुतः? तस्य वैशेषिकाम्नानात् पशोर्वैशेषिको धर्मः तत्राम्नातः सूक्तवाक प्रैषः अग्निमश्येति तदाम्नातमनर्थकं विकल्पे सति स्यादन्तरेणापि ह्याम्नानं पक्षे भवत्येव सः अतः आम्नातसामर्थ्यान्नित्योऽसौ न च पौरोडाशिके तन्त्रे प्रसज्यते स हि मैत्रावरुणेन प्रैषो वक्तव्यः। न च तत्र मैत्रा वरुणोऽस्ति दर्शपूर्णमासयोश्चत्वार ऋत्विज इति नियमात् पशौ तु न सोऽस्ति पशुतन्त्रे प्रसज्यमाने न किञ्चिद्वैगुण्यं पुरोडाशतन्त्रे सति ऋत्विक्संख्या वा वर्जयितव्या अमैत्रा-वरुणेन वायं प्रैषो वक्तव्यः। उभयथाप्रकृतिविरोधः। तस्मात् नियमेन पाशुकं तन्त्रं प्रसज्यते।

पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्
॥ २३ ॥ (हे०)

अपि च पशोस्तन्त्रस्य विप्रकर्षो वपया प्रातः सवनेन चरन्ति पुरोडाशेन मध्यन्दिने सवने अङ्गैस्तृतीयसवन इति । तस्य विप्रकृष्टत्वात् तन्त्रमध्ये पुरोडाशानां विधानं युज्यते प्रातःसवनीयानां तु पुरोडाशानां तन्त्रं प्रातः सवन एवापवृज्यते । अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्त इति वचनात् । तन्मध्ये पशोः पातो न घटते पुरोडाशाङ्गप्रचारयोर्व्यतिरेकात् । इह च प्रातः सवनीयैरेव सह पशोः सन्देहः इतरे पुनः पुरोडाशा असंशयं पशोः प्रातः सवनीयानां वा तन्त्रमध्ये पतिताः । ननु अग्निमारुतादूर्द्ध्वमनुयाजैश्चरन्तीति अनुयाजानामुत्कर्षात् पौरोडाशिकमपि तन्त्रं प्रवर्त्तते । नेत्याह । अयमपि पाशुकानामनुयाजानामुत्कर्षः कथं ज्ञायते सोमान्तेश्वरीः प्रतिपत्तिर्दृश्यते संस्थिते यज्ञे प्रस्तरं प्रासयति । चरमयज्ञवेशसायेतिसा पश्वनुयाजैरुत्कृष्टस्य युज्यते न पौरोडाशिकैस्तस्योत्कर्षो न प्राप्नोति प्रासङ्गिकश्च नोत्कर्षेदसंयोगादिति । तेषां हि हविःप्रचारादूर्द्ध्वमवसरः तद्वशश्च उत्कर्षवादः प्रातःसवनीयानान्तु ये अनुयाजा न ते तद्देशाः । अतो न तेषामुत्कर्षः । तस्मात् पाशुकं तन्त्रम् । अथ वचनमिदं कस्मान्न भवति । परिहृतमेतद्विकारवाक्यं स्यात् । प्रतिपत्तिविशेषं कालं च विदधत् । तस्मात्पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते । न विकल्प्यते इति ।

समानतन्त्रयोः प्रकृतिविकृत्योर्वैकृततन्त्रताधिकरणम् ।

अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३४ ॥ (पू०सि०)

यदा प्रकृतिर्विकृत्या समानतन्त्रा तदा किं प्राकृतं तन्त्रं कर्तव्यम् । उत वैकृतं ननु नैव प्रकृतिर्विकृत्या समान तन्त्रा ऽस्ति । समानतन्त्रा चेदित्येवं कृत्वा चिन्त्यते किं प्राप्तम् । यदि पूर्वं प्रकृतिः प्रयुज्यते । तत्प्राकृतम् अथ विकृतिस्तती वैकृतं किं पुनः अत्र युक्तं प्रकृतिरिति नित्या प्रकृतिरागन्तुर्विकृतिरिति काम्ये वा निमित्ते वोत्पन्ने आगच्छति पूर्वावसायिनश्च बलीयां सो जघन्यावसायिभ्यस्तस्मात् प्रकृतिः पूर्वं प्रयुज्यते तस्य तन्त्रं कर्तव्यं प्राप्तकालत्वात् । तस्मात् प्राकृतं तन्त्रं कर्तव्यमित्येवं प्राप्तमेवं प्राप्ते ब्रूमः । अपूर्वे च वैकृतं तन्त्रं प्रकृतेः प्रसज्यते समानतन्त्रा चेदनित्यत्वाद्विकृतेः काम्ये वा उत्पन्ने निमित्ते साऽवागच्छति नैमित्तिकी चिकीर्षा तन्नित्यां चिकीर्षा बाधते । सत्यां हि नित्यायां सा भवति अतस्तामबाधमाना नैवोत्पद्यते यदि न बाध्येत । अनर्थकं स्याद्वैकृतं विधानं तस्माद्वैकृतं तन्त्रं प्रकृतौ प्रसज्यत इति ।

आग्रयणेष्ट्यधिकरणम् ।

आग्रयणे द्यावापृथिवीय एककपालः स वैश्वदेविकैककपालप्रकृतिस्तस्य धर्मः प्रस्तूनं बर्हिरितरेषां प्रस्तूनमप्रस्तूनं वा तत्र किमनियम उत प्रस्तूनमेवेति विचारः । आग्रयणे तु ऐन्द्राग्नस्य मुख्यत्वादनियमे प्राप्ते उच्यते ।

अधिकश्च गुणः साधारणे विरोधात् कांस्य-भोजिवदमुख्येऽपि ॥ ३५ ॥ (पू०)

साधारण एतस्मिन् दार्शपौर्णमासिके आग्नेयेन्द्राग्नीनां योऽयमधिको गुणः द्यावापृथिवीयस्य वैशेषिकः सोऽपि मुख्येऽपि सति द्यावापृथिवीये नियम्येत । अविरोधात् । कांस्यभोजिवत् । तद्यथा शिष्यस्य कांस्यपात्रभोजित्वनियम उपाध्यायस्य न नियमः । यदि तयोरेकस्मिन् पात्रे भोजनमापद्यते । अमुख्यस्यापि शिष्यधर्मो नियम्येत माभूद्धर्मलोप इति एवमिहापि तस्मान्न नियमः ।

तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३६ ॥ (पू०)

तस्य प्रसूनस्य प्रवृत्त्या वैश्वदेविकं तन्त्रं सूक्तवाकस्य प्रैषेण वैशेषिकेण नियतम् ।

न वाऽविरोधात् ॥ ३७ ॥ (सि०)

न वा नियम्यते कुत अविरोधात् । अविरुद्धोऽयं धर्मस्तरेणापि हविषान्तेन न वैशेषिकः । अवैशेषिकत्वान्न तत्राऽन्यतरन्नियन्तुं शक्नोति वैशेषिकस्तु सूक्तवाकस्तस्मात् सोऽन्यतरं नियन्तुमुत्सहते किं च ।

शास्त्रलक्षणत्वाच्च ॥ ३८ ॥ (हे०)

न च शास्त्रविहिताः प्रसूनाः किं तर्हि चोदकप्राप्ताः

किमतः यदि शास्त्रविहिता भवेयुः। ततस्तेन प्रकृतिलिङ्गेन वैश्वदेविकं तन्त्रं नियम्येत एवं द्यावापृथिवीयधर्म्मत्वात् प्राप्तानामेव प्रसूतानां पूनर्वचनमानर्थक्यपरिहारलक्षणं वा वैश्वदेविकस्य तन्त्रस्य विधानं विज्ञायते। प्रसूनादितन्त्रं भवतीति न तच्छास्त्रलक्षणं तस्मान्नास्ति तन्त्रस्य नियम इति।

इत्याचार्य्य श्रीशवरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य द्वितीयः पादः॥

---

## अथ द्वादशाध्यायस्य तृतीयः पादः।



विश्वजिति वत्सत्वगधिकरणम्।

**विश्वजिति वत्सत्वग्नामधेयाऽहतमितरथा तन्त्रं भूयस्त्वादहतं स्यात्॥ १॥ (पू०)**

अस्त्यष्टरात्रोऽहीनस्तस्य विश्वजिदभिजितावग्निष्टोमावभित उभयतो ज्योतिर्म्मध्ये षड़हः पशुकामो ह्येतेन यजेतेति। विश्वजित्येकाहवत्सत्वगवभृथादुदेत्येतस्य परिधानार्थाम्नाता वत्सत्वचं परिधत्त इति ज्योतिष्टोमे अहतं वासः अष्टरात्रे उभयं प्राप्यते। तयोः परिधानयोरेकार्थत्वाद्विकल्पे प्राप्त उच्यते। वत्सत्वक् स्यान्न वि-

कल्पः। नामधेयेन वत्सत्वक् प्राप्यते। चोदकेनाहतं चोदकाच्च नामधेयशब्दो बलवत्तर इत्युक्तम्। अपिच वत्सत्वग्विधानादधिकानामशब्दत्वमिति यदि नामधेयतः प्राप्तिर्न स्यात्ततो भूयस्त्वेन ज्योतिष्टोमप्रकृतीनामकामहतं स्यादस्ति त्वसौ तस्मान्नाहतं भवति। नन्वभिजिज्ज्योतिरिति ज्योतिष्टोमिकधर्म्मग्राहीण्येतानि नामधेयानि सन्ति तथापि मुख्यत्वादभिजित एव बलवत्वम्।

## अविरोधो वा उपरिवासो हि वत्सत्वक्॥२॥(सि॰

न वा नियमः वत्सत्वगेवेतिकिं तर्हि समुच्चयः सर्वाङ्गोपसंहारी प्रयोगवचनोऽनुग्रहीष्यते। ननु नामधेयस्य बलवत्वादहतं बाध्यते। विरोधे सति बाध्येताविरोधश्चानयोः कथमुपरिवाससः कार्यं वत्सत्वग्भविष्यति। वासो ह्ययं पुरुषस्याचारतः प्राप्यते ननूपरिवाससि परिधत्त इति न भवति नैतदेवमुपरिवाससपि भवति यथा कम्बलं परिधत्ते रौरवं परिधत्त इति तस्मात् समुच्चयः।

अनुनिर्वाप्याधिकरणम्।

## अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् शिष्टकृद्दर्शनाच्च ॥३॥ (पू॰)

अग्नौ श्रूयते अग्नीषोमीयस्य पुरोडाशमनुदेवसुवां हवींषि निर्वपतीति। अनुबन्ध्यायामपि देविकाहवींषि तत्र भूयस्त्वेन तन्त्रं नियम्येत। अनुनिर्वाप्याणां बहुत्वात्। ततन्त्रं पशुपुरोडाशे प्रसज्येत। किञ्च यत्स्विष्टकृच्छब्दकं

स्विष्टकृतौ वचनं दृश्यते पशुपुरोडाशस्य देविकाहविषां चाग्नये स्विष्टकृते समवद्यतीति। तदनुनिर्वाप्याणां तन्त्र उपपद्यते। यदा तु पशुपुरोडाशतन्त्रं तदा स्विष्टकृच्छब्दकं स्यात्तस्मादनित्यत्वादागन्तुकत्वाद्वा तथा।

**आगन्तुकत्वाद्वा स्वधर्मा स्यात् श्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥ (सि०)**

आगन्तवोऽनुनिर्वाप्या श्रुतिविशेषात् एवं हि श्रूयते पशुपुरोडाशमनुनिर्वपतीति एवं श्रुते पूर्वं पशुपुरोडाशः पश्चादनुनिर्वाप्या भवन्तीति स मुख्य इतरे तु जघन्या अतस्तेषामागन्तुत्वात् इतरस्य च मुख्यत्वात् पशुपुरोडाशः स्वधर्मा स्यात्।

**स्वस्थानत्वाच्च ॥ ५ ॥ (हे०)**

अपि च पशुपुरोडाशस्थानं यद्वपाप्रचारात् परतः अङ्गैरपि तस्य तत्स्थानैरेव भवितव्यं प्रधानदेशत्वात्तेषां यद्यनुनिर्वाप्याणां तन्त्रं स्यात्। ततस्तस्मिन् स्थाने तदङ्गानि क्रियेरन् पशुपुरोडाशाङ्गान्यन्य स्थानानि भवेयुः। तेषां स्वस्थानाय पशुपुरोडाशस्य तन्त्रं स्यात् कर्तव्यम्।

**स्विष्टकृच्छ्रपणान्नेति चेद् विकारः पवमानवत् ॥ ६ ॥ (आ०नि०)**

स्विष्टकृच्छ्रपणान्नेति चेद् इति यदुक्तं तत्परिहर्तव्यम् अत्रोच्यते विकारः पवमानवदेवञ्च पशुपुरोडाशस्य तन्त्रेण अनिरुक्ते स्विष्टकृति प्राप्तौ विकारो वचनाद्

भविष्यत्यग्नये स्विष्टकृते समवद्यति स स्विष्टकृच्छब्दकं वचनं कर्तव्यमिति यथाग्नये पवमानाय निर्वपतीति वचनात् पवमानशब्दको निर्वापः क्रियते एवमिहापि।

अविकारो वा प्रकृतिवच्चोदनां प्रतिभावाच्च ॥ ७ ॥ (सि०)

अविकारः अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यं प्रकृतिवदतिदेशाद्यन्तवचनादिति नात्र विकारो विधीयते। किं तर्हि समवदानं देविकाहविषां अग्नये स्विष्टकृते समवद्यतीति। तत्र विकारेऽन्यस्मिन् विधीयमाने वाक्यं भिद्यते। कथं तर्हि स्विष्टकृद्वचनम्। चोदनां प्रतिभावाच्च।

दर्शपूर्णमासयोर्यास्ति स्विष्टकृच्चोदना सा स्विष्टकृच्छब्दिका तत्प्रत्ये तद्वचनं तदुपलक्षणाय तस्मादग्नये याऽग्नौ शेषभागितया तदुक्तं स्यात्तावदग्नये स्विष्टकृत इति यथा शरमयं बर्हिर्भवतीति नवनीतमाज्यमिति प्राकृते कार्ये ह्येते प्रकृतिलिङ्गेन द्रव्यशब्देन एवमिहापि स्विष्टकृच्छब्देन प्राकृती लक्षणया देवतानूद्यते।

आधारे ऋजुत्वादिसमुच्चयाधिकरणम्।

एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात् ॥ ८ ॥ (सि०)

य एकस्मिन् कर्मणि गुणा बहवः शिष्यन्ते तेषां सर्वेषां क्रिया स्यात्। समुच्चय एव सर्वेषां शासनमर्थवद् भविष्यति। सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुगृह्यते

यथाधारे ऋजुमाधारयति सन्ततमाधारयति प्राञ्चमाधारयति च ।

विकल्पाधिकरणम् ।

**एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य ॥ ९ ॥ (सि०)**

ये त्वेकार्था एककार्यार्थाः ते विकल्पेरन् यथा व्रीहियवौ यथा खादिरादीनि यूपद्रव्याणि द्रव्यान्तरे ते विकल्प्येरन् । तस्मात् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य एकेन कार्ये कृते यदि द्वितीय उपादीयते । आवृत्तिः प्रधानस्य भवेत् सा चायुक्ता किं कारणं प्रधानं हि फलाय वा क्रियते फलवदुपकाराय वा नाङ्ग सकृत्कृतेन च कृतं कार्यं तस्य निरर्थिका आवृत्तिः ।

**अभ्यस्येतार्थवत्त्वादिति चेत् ॥ १० ॥ (आ०)**

इति चेत्पश्यसि अनर्थकोऽभ्यास इति नानार्थको गुणान्तरं स तस्यार्थवत्त्वायाभ्यस्येत ।

**नाश्रुतत्वात् विकल्पवच्च दर्शयति कालान्तरेऽर्थवत्त्वं स्यात् ॥ ११ ॥ [आ०नि०]**

नैतद्युक्तम् । कुतः ? अश्रुतत्वात् । अश्रुतोऽभ्यासः तस्य प्रमाणं नास्ति केन वारिष्यति गुणान्तरशासनस्यार्थवत्त्वं वक्ष्यति । कालान्तरे अर्थवत्त्वं स्यादिति । अभ्यासशास्त्रं क्वचिद् भवति संसव उभे कुर्वीत् । गोसव उभे कुर्यात् । अभिजिद्विश्वजितौ काह्हे सूयते उभे द्रव्यान्तरे कुर्यादिति तत् समुच्चये सति न स्यात्

तस्मादपि च विकल्पवच्च दर्शयति विकल्प इव दर्शनं भवति बैल्वो वा खादिरो वा पालाशो वाऽन्येषां यज्ञक्रतूनां यूपा भवन्ति तथैतस्य खादिर एव कार्य इति वाजपेये खादिरं नियच्छन् अन्यत्र विकल्प मनुवदति तस्मादपि विकल्पः कालान्तरे अर्थतत्त्वं स्यात्। यच्च गुणान्तरयासनस्यानर्थक्यमिति कालान्तरे प्रयोगान्तरेऽर्थवत्त्वं तस्यापि भविष्यति तस्मिन्नर्थवति नाभ्यासस्य प्रमाणम्। ननु विकल्पस्यापि नास्ति प्रमाणं विकल्पेन किञ्चिदश्रुतं क्रियते व्रीहिभिर्यजेतेति श्रुतैरिज्यते। यवैर्यजेतेत्यपि श्रुतम्। तैरपीज्यते। एकस्मिन् प्रयोगे कार्य्याभावान्नोभाभ्यामिज्यते। अथ कस्मान्न मिश्रीयते तेन। तदुक्तम् एकैकस्य निरपेक्षस्य साधकत्वं श्रुतं तस्मिन् मिश्रीभावे बाध्येत। तस्माद्विकल्पः।

प्रायश्चित्ताधिकरणम्।

**पायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ॥ १२ ॥ (पू०)**

प्रायश्चित्तानि द्विःप्रकाराणि कानिचिद्वै गुणस्य प्रमादादापतितस्य समाधानार्थानि कानिचिन्निमित्त कर्माङ्गानि तत्र समाधानार्थानि यथायं ऋतक्तीयज्ञ आर्त्तिमियात् भूः स्वाहेति गार्हपत्ये जुहुयादथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामत स्वः स्वाहेत्याहवनीय एवेति। आर्त्तिमियाद्विनाशमिया-

दित्यर्थः। कः पुनर्यज्ञस्य विनाशः शिष्टस्याक्रिया प्रतिषिद्धसेवनं च कथं पुनर्ज्ञायते विनष्टस्य समाधानार्थं तत्प्रायश्चित्तमिति वाक्यसंयोगात्। यद्यार्त्तिमियादिदं कुर्य्यात्। यदि तस्मिन् कृते यदि नष्टमेव कोऽर्थस्तेन कृतेन। यस्तु अत्र ब्रूते आर्त्तौ निमित्ते कर्माङ्गं प्रायश्चित्तमिति स च वक्तव्यः। अङ्गं नाम तत् यत् प्रधानं फलवत् करोति प्रधानविनाशादफलत्वमापन्नं यदि तदनेन फलवत् क्रियते तत एतदङ्गं यच्चेदं फलं प्रयुक्तमेतेन फलवत् क्रियते हन्त तर्हि जातस्य विनष्टस्य समाधानार्थमथ न क्रियते न तर्हि कर्माङ्गं तत्र यदुच्यते निमित्ते कर्माङ्गमिति तदेव नास्ति। अपि च तत्र तत्र समाधानमेव वाक्यशेषे श्रूयते। अग्निर्वै देवानां पथि कृतः स्वेन भागधेयेनोपासीरन् स एवं पन्थानमपि न यति स एवं व्रतमालम्भयतीति तस्मादेते दोषनिर्घातार्थाः तेषु विकल्पः स्यात् कुतः? ऐकार्थ्यात्। कथमैकार्थ्यमेतेषां निष्पन्नेन दोषेण केवलस्य तस्य तस्याभिसंयोगो यद्युक्तो यत्र आर्त्तिमियात् भूः स्वाहेति जुहुयादिति। तस्मात् सर्वस्य दोषस्यैकेन निर्घातः। एकेन चेन्निर्हतो दोषो द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति एवं स्मार्त्तेष्वपि द्रष्टव्यम्।

## समुच्चयस्तु दोषार्थः ॥१३॥ (सि॰)

यानि तु दोषनिर्घातानि तेषु समुच्चयः कानि पुनस्तानि यानि श्रुतस्याक्रियया प्रतिषिद्धादि वा तानि उच्यन्ते। यथा यस्याहुतमग्निहोत्रं सूर्य्योऽभ्युदियान्मैत्रं चरुं निर्व-

पेत् सौर्य्यमेककपालं यस्याहुतमग्निहोत्रं सूर्योऽभ्युदिया-
दित्यादि। अग्निं समाधाय वाचं यत्वा दम्पती सर्वाह-
मुपासीयातामिति। तत्र दोषो न दृश्यते दोषस्याभावा-
न्निर्घातार्थता नास्ति। केवलमभ्युदये निमित्ते कर्म्म
विधीयते तन्नैमित्तिकं कर्मणः प्रकरण उत्पन्नत्वात् कर्माङ्गं
विज्ञायते यावन्ति चोद्यन्ते तानि सर्वाणि प्रयोगवचनेन
गृह्यन्ते तेषां समुच्चयः।

अनध्याये मन्त्रपाठाधिकरणम्।

मन्त्राणां कर्मसंयोगः स्वधर्मेण प्रयोगः स्यात् धर्मस्य तन्निगित्तत्वात् ॥ १४ ॥ (पू०)

कर्म्मणि प्रयुज्यमानानां स्वधर्मेण प्रयोगः स्यात्। य एषां ग्रहणकाले धर्माः पर्वणि नाध्येयं वाते नाध्येयं स्तनयित्नौ नाध्येयमित्यादयः धर्मस्य तन्निमित्तत्वात् धर्मोऽयं मन्त्रप्रयोगनिमित्तः अयमपि च मन्त्रप्रयोगः। तस्मादत्रापि न भवितव्यम्।

विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य॥ १५ ॥　(सि०)

अध्यायेऽनध्यायेऽपि कुतः। विद्यार्थोऽयं प्रयोगः। प्रत्येतद्धर्म्मविधानं स एष ग्रहणस्य धर्म्मः तस्माद्ग्रहणं गुणवत् करोति कः पुनर्ग्रहणस्य गुणः। अविघ्नेन निर्वृत्तिः कथं पुनर्ज्ञायते। ग्रहणार्थोऽयं धर्म इति ग्रहणकाले श्रूयते न कर्मकाले। मा भूत् कर्मधर्मो मन्त्रधर्मो

भविष्यति। मन्त्रधर्मश्च स यत्र मन्त्रस्तत्र प्राप्नोति। उच्यते न धर्मो मन्त्रेषु विधीयते। किं तर्हि ग्रहणे एवमभिनिर्वर्त्यते तेनैव मन्त्रो भवति। तस्माद्ग्रहणधर्मो न च कर्मणि ग्रहणार्थः प्रयोगः किं तर्हि कर्मार्थः तस्मात्तत्र धर्मस्याप्राप्तिः अपि च पर्वणि चाध्ययनस्य प्रतिषेधः यद्यमन्त्रकं कर्म क्रियते प्रयोगानर्थक्यम्। अथापर्वणि तथापि स एव श्रुत्यनुरोधेन प्रयोगः प्राप्नोति स्मृत्यनुरोधेनाप्रयोगः श्रुतिश्च स्मृतितो बलीयसी तस्मान्नादर्तव्यः प्रयोगनियमः।

मन्त्रस्वराधिकरणम्।

भाषास्वरोपदेशे ऐरवत्प्रायवचनप्रतिषेधः स्यात् ॥ १६ ॥ (पू०)

भाषिकेण स्वरेण केचिन्मन्त्रा ब्राह्मण उपदिष्टाः मन्त्रसमाम्नाये त्रैस्वर्येण पठिताः। यथा इमामगृभ्णन्नित्यश्वमेधे। कः पुनर्भाषिकः स्वर उच्यते। छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः। उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते। इति तेषु मन्त्रेषु प्रायवचनस्य स्वरस्य प्रतिषेधः स्यान्निवृत्तिः कस्मात् स्वरान्तरोपदेशात् ऐरवत् यथा इरापदस्योपदेशात् कर्मकाले गिरापदस्य निवृत्तिः कथं पुनर्ज्ञायते स्वरस्यायमुपदेशो न मन्त्रस्येति मन्त्रो नोपदेष्टव्यः। रूपादेव प्राप्नोति स्वरस्त्वनुपदिष्टो न प्राप्नोति तस्मात्तस्योपदेशः।

मन्त्रोपदेशो वा न भाषिकस्य प्रायोपपत्ते-र्भाषिकश्रुतिः ॥ १७ ॥ (सि०)

मन्त्रस्य वायमुपदेशो न स्वरस्येति कथं ज्ञायते मन्त्रोपदेशरूपोऽयं शब्दः किमस्य तत्सारूप्यम् इत्यस्याभि-धानमादत्त इत्याह मन्त्रेण वा साभिधीयते। न भाषिकेण स्वरेण मन्त्रोपादानं प्रत्याययति नेतरस्य कस्मात्तद्धुचा-ख्येति प्रायापत्ते र्भाषिकश्रुतिः। भाषास्वरो ब्राह्मणे प्रवृत्तः। तन्मध्ये यदि प्रवचनेन पठ्यते। भाषिकस्वरसन्तानो वि-च्छिद्येत तत्परिहारार्थं भाषिकेणोपदेशः। यथा गायना गीतवस्तुकानि यानि गीतकेषु प्रक्षिपन्ति तान्यपि तेनैव गीतिस्वरेणैवोच्चारयन्ति मा भूत् स्वरसन्तानस्य विच्छेद इति तस्मान्न भाषिकस्वरोपदेश इति।

विकारः कारणाग्रहणे तन्न्यायत्वाद्दृष्टे-ऽप्येवम् ॥ १८ ॥ (पू०)

इरापदेन तु गिरापदस्य विकारो युक्तः। कारणा-ग्रहणात्। यथा भाषिकस्यानुपदेशेन कारणेनोक्तो नैव गिरापदस्यानुपदेशो किञ्चित्कारणं गृह्यते। तस्मात्तस्योप-देशः। स कर्मकाले विधानात् समाम्नाये प्राप्तं गिरापदं बाधते तस्मात्तत्र विकारः। तन्न्यायत्वाद् दृष्टेऽप्येवम्। यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टः तस्य तथैव प्रयोगः। यस्तु न दृष्टो ब्राह्मणेन च भाषिकेनोपदिष्टः। यथा तं प्रोहिदानस्यत्वोऽसीति। तत्र का प्रतिपत्तिरुच्यते। तन्न्याय-

त्वात्। अदृष्टेऽपि योऽसौ न्याय उक्तः। मन्त्रोपदेशोऽयं तद्रूपत्वात् शब्दस्येति। तेनैव न्यायेनादृष्टेऽपि मन्त्रोपदेश एव न भाषिकोपदेशः। तस्मान्न तस्यापि प्रवचनेनैव स्वरेण प्रयोगः।

**तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥१९॥ (सि०)**

तदुत्पत्तेर्वा मन्त्रस्य भाषिकेण प्रयोगः स्यात् प्रवचनलक्षणत्वात्। प्रवचनं मन्त्राणां लक्षणं यथा प्रोच्यते तथाविधा विज्ञायन्ते ते च भाषिकस्येत्यपरा व्याख्या इमामगृभ्णन्निति नैतस्योपदेशः। किं तर्हि आग्नेन प्रतीकेन लक्षणेनासौ यथोत्पन्नो लक्ष्यते प्रावचनेन स्वरेणोत्पन्ना तस्मात्तद्विधाया उपदेशः। यस्तु ब्राह्मणोत्पत्तिरेव मन्त्रस्तत्र लक्षणस्याभावात् न लक्षणा अतस्तत्र यथाश्रुतिप्रयोगः।

कर्म्मसु मन्त्रकरणप्रयोगाधिकरणम्।

**मन्त्राणां करणार्थत्वात् मन्त्रान्तेन कर्मादिसन्निपातः स्यात् सर्वस्य वचनार्थत्वात् ॥ ॥ २० ॥ (सि०)**

पदार्थकरण मन्त्राः यथा इषे त्वेति छिनत्ति, देवस्य त्वा सवितुः प्रसवे इत्याददत्त इति। तेषां मन्त्रान्ते न कर्मादिसन्निपातः यस्मिन् कर्मण्युपयुज्यते किं कारणं सर्वस्य वचनार्थत्वात्। सर्वो मन्त्रः समस्तं वचनार्थं करोति कः पुनर्मन्त्रस्य वचनार्थः प्रयोगकाले पदार्थस्योपस्थानं मन्त्रे-

णोपस्थितः पदार्थः कर्त्तव्यः विज्ञायते तदर्थस्य मन्त्रस्य आम्नानसामर्थ्यात् वचनाच्च क्वचिदिति आदत्ते निर्वपतीति मन्त्रान्ते तस्योपस्थानम् उपस्थितः पर्य्याप्तो यावन्न भ्रश्यत इति तस्मान्मन्त्रान्तेन कर्मादिः सन्निपातकरणमन्त्रेषु।

वसुधाराधिकरणम्।

## सन्ततवचनाद्धारायामादि संयोगः ॥२१॥(पू०)

श्रूयते सन्ततं वसोर्द्धारां जुहोतीति। अत्रापि पूर्वोक्तेन न्यायेन तथैव प्राप्त उच्यते। धारायामादिसंयोगः कर्मादिमन्त्रादिश्च सनिपत्यो सन्ततवचनात्। समित्येकीभावः। ततोऽतिविस्तारद्वयोर्यत्र संहननं भवति तत्र संपूर्वस्तनोऽपि वर्त्तते। इह कर्मवन्मन्त्रश्च सन्निपात्यः तस्मात्तयोः संहननमुच्यते। तच्चाद्योः सन्निपाते भवति तस्मादादिसंयोगः।

## कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २२ ॥ (सि०)

कर्मणां वा सन्तानोऽयं सन्ततं जुहोति इति हि होमस्य केवलस्य हि सन्तान उच्यते नात्र मन्त्रसंकीर्त्तनमस्ति न तु द्वयोः संयोगे संशब्दो भवति एकस्य होम उच्येतेति नैष दोषः नानाकर्मत्वात्। बहून्येतानि कर्माणि तेषामनुपरमेण क्रियासन्तानो भवति कर्मनानात्वं वचनात् द्वादश द्वादशानि जुहोतीति। न तु द्रव्यसंख्येयानी-

व्याह नात्र द्रव्यसङ्कीर्तनमस्ति होमोऽत्र संख्यया युज्यते। द्वादश द्वादशानि जुहोतीति एवंसंख्यान् होमान् करोतीति। किञ्च इतरस्य च मन्त्रकर्म्मणोः सन्तानस्याशक्यत्वात् क्षणिकं कर्म्म न मन्त्रेण सहतनितुं शक्यते तदत्रापि कर्मादिसन्निपात एव।

आधाराधिकरणम्।

## आघारे च दीर्घधारत्वात् ॥ २३ ॥ (सि०)

दर्शपूर्णमासयोराघारं प्रकृत्य श्रूयते। सन्ततमाघारयतीति तत्रापि क्षणिकत्वान्मन्त्रेण कर्म्मणः सहतननं घटते। एकत्वात् कर्म्मसन्तानो नास्ति तस्मात् द्रव्याभिप्रायः सन्तानशब्दः। सन्ततं घारयतीति दीर्घधारया जुहोतीति दीर्घपरत्वात् सन्ततशब्दः।

मन्त्रसन्निपाते विकल्पाधिकरणम्।

## मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात् ॥ २४ ॥ (सि०)

ये मन्त्रा एककार्य्या यथा पुरोडाशविभागार्थाः पूषा वां विभजतु। भगो वां विभजतु। अर्य्यमा वां विभजत्वित्येवमादयः। तेषां विकल्पः कुतः। सन्निपातित्वात् करणा एते करणानां च मन्त्रान्तेन कर्मादिसन्निपातः उक्तो मन्त्राणां करणार्थत्वात् मन्त्रान्तेन कर्मादिसन्निपातः स्यादिति न च विकल्पमन्तरेण सर्वेषामन्ते कर्मादिसन्निपातः कर्तुं शक्यः। किं वचनमेतत् न हि न्यायः सर्वस्य वचनार्थ-

त्वादिति यद्येवं समुच्चयेऽपि स मन्त्रः उच्यते । तत्रापि वचनार्थः सिद्ध्यति । एकेन तु कृते कर्मणि द्वितीयस्य प्रयोगोऽनर्थकः । तदेतत् कार्य्यैकत्वे भवति तस्मादेकार्थत्वाद्विकल्पः तच्च पूर्वमेवोक्तम् एकार्थास्तु विकल्पेरन्निति । ततस्तत्प्राप्तसूत्रमिदम् उत्तरचिन्तार्थम् ।

मन्त्रसमुच्चयाधिकरणम् ।

**संख्याविहितेषु समुच्चयो सन्निपातित्वात् ॥ ॥ २५ ॥ (सि०)**

संख्यया ये विधीयन्ते मन्त्रा यथाग्नौ चतुर्भिरादत्ते द्वाभ्यां खनति षड्भिराहरति तेषु समुच्चयः स्यात् किं कारणं संख्या शब्देनोच्यते साङ्गीकर्तव्या न च समुच्चयादृते सा शक्याङ्गीकर्तुम् । आह समुच्चयेऽपि यः कर्मणां सन्निपातः तेन तत् कर्म कृतं भवति ये व्यवहिताः न तैः सह असन्निपातात् । तथा सति न संख्या कर्मण्यङ्गीकृता भवति । नैष दोषः । अर्थाभिधानेन मन्त्रोऽङ्गीकृत इति । सदेवैते तमर्थमभिदधति । अनन्तरेण रूपं क्रियते इतरे जपवददृष्टार्था भवन्ति । उच्यते नादृष्टार्था भविष्यन्ति । सर्वे तदेव कर्म सकृदभिधास्यन्ति भवति हि कारणार्थस्य मन्त्रस्यासकृत्प्रयोगः यथा कुरु कुरु करवाणीति तत्र यथा ष्यभिधानार्थस्य मन्त्रस्याम्नानसामर्थ्यादभिहितमभ्युदयकरं भवति । एवं चतुर्भिरादत्त इति वचनाच्चतुरभिहितं कृतमभ्युदयकारि भवतीति तस्मात् समुच्चयेऽपि नादृष्टार्थता समुच्चयश्च सिद्धः ।

उरुप्रथस्वेति मन्त्रे विकल्पाधिकरणम् ।

## ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात् ॥ २६ ॥ (पू०)

ब्राह्मणे च ये मन्त्रा विधीयन्ते यथा उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयन्तीति । तेषु च समुच्चयः स्यात् । सर्वेषामुपदिष्टत्वात् । न प्रयुज्यते तस्योपदेशो बोध्यते सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुग्रहीष्यते । संख्याविहितवच्च सर्वेषामसकृदभिधानेनार्थवत्ता भविष्यति तस्मात् समुच्चयः ।

## याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ २७ ॥ (नि०)

समुच्चय एव याज्यावषट्कारयोः समुच्चयोऽवगन्तव्यः समुच्चयवत् दर्शनं भवति । याज्याया अधिवषट्करोतीति समुच्चये हि पौर्वापर्यं भवति तस्मादपि समुच्चयः ।

## विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥२८॥ सि०

विकल्पो वैष मन्त्राणां न समुच्चयः । कुतः ? उक्तो न्यायः । मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यादिति । न तु संख्याविहितवदेकार्था अपि सन्तो सकृदभिधानेन समुच्चेष्यन्ते नैतद्युक्तं कुतः ? समुच्चयस्याश्रुतित्वात् । यथा तत्र संख्याश्रवणात् । कृतकरणमप्य सकृदभिधानमाश्रितम् नैवं समुच्चयश्रवणमस्ति तस्माद्यथा न्यायमेकार्थत्वाद्विकल्पः ।

## गुणार्थत्वादुपदेशस्य ॥ २९ ॥ (हे०)

यच्च सर्वेषामुपदेशोऽर्थवान् भविष्यति । अहेतुः सः गुणार्थत्वादुपदेशस्य नैवासौ मन्त्रप्राप्त्यर्थ उपदेशः । किं तर्हि गुणार्थः अर्थवादो गुणं विधास्यतीति तदुक्तं गुणार्थेन पुनः श्रुतिः परिसंख्या अर्थवादो वेति यदि तर्हि नैवायं मन्त्रोपदेशः । किमिदमुच्यते सर्वेषामुपदिष्टत्वात् । एवं तर्हि कृत्वा चिन्तेयं मन्त्रोपदेश इति कृत्वा चिन्त्यते अथवा उदाहरणान्तरं द्रष्टव्यम् ।

वषट्कारे समुच्चयाधिकरणम् ।

## वषट्कारे नानार्थत्वात् समुच्चयः होत्रास्तु विकल्प्येरन्नेकार्थत्वात् ॥ ३० ॥ (पू०)

वषट्कारः प्रदानार्थो याज्या देवतोपलक्षणार्था तयोर्नानार्थत्वात् समुच्चयः सर्वोपदेशात् । होत्रास्तु विकल्प्येरन्नेकार्थत्वात् । होत्रास्तु ये मन्त्रा यूपोच्छ्रयणीया वा उच्छ्रयस्व वनस्पते इति यूपपरिव्याणार्था वा युवा सुवासा वा इति ते विकल्प्येरन् । कुतः एकार्थत्वात् । एकार्था एते उच्छ्रयणस्य परिव्याणस्य वाभिधायका एकैकश्च तेषामितरानपेक्षस्तदभिदधाति । तस्माद्विकल्पः ।

## क्रियमाणानुवादित्वात् समुच्चयो वा होत्राणाम् ॥ ३१ ॥ (सि०)

क्रियमाणानुवादित्वात् । करणानां विकल्प उक्तः न चैते करणाः क्रियमाणानुवादिन एवं कर्त्तव्यमिति कथं

कृत्वा उच्यते। अध्वर्योस्तावत्करोमीत्येतेन प्रत्ययेनार्थः असति ह्येतस्मिन् क्रियैव न प्रवर्त्तते। एष प्रत्ययः सति पूर्वस्मिन् प्रत्यये भवति। यो हि स्मरतीदं मया कर्त्तव्यमिति स तत्करोति क्रियमाणानुवादिभिश्चाध्वर्युणा क्रियमाणमर्थमनुवदन्ति युञ्जन्ति त्वामध्वरदेवाय न इति सोऽनुवादो समध्वर्योः स्मृतिं कर्तुम् अतस्तत्स्वरूपं तेन च कर्मणाकाङ्क्षितत्वात्। स्मरणार्था एते विज्ञायन्ते। स्मरणार्थस्य मन्त्रस्याम्नानसामर्थ्यात् स्मारितं कृतमदृष्टार्थाय भवति। यथा प्रततं कृतम्। ननु विधिशब्दादेव स्मृतिर्भवति। सत्यं विधेः शब्दादपि सामर्थ्याद्भवति। मन्त्रादपि भवति। मन्त्रस्याम्नानसामर्थ्यात् मन्त्रेण कर्तव्याः। प्रततेषु च कर्मसु स्मृतिसन्तानेनार्थ इत्यनेकस्यापि क्रियमाणानुवादिनो मन्त्रस्यैकस्मिन्नेव प्रयोगे स भवति क्रियमाणानुवादित्वाद्धोत्राणां समुच्चयः।

## समुच्चयं च दर्शयति ॥ ३० ॥ (उदा०)

विः प्रथमामन्वाह ज्योतिषतीरनुब्रूयादिति। अनेकसन्निपाते चैतद्भवति प्रथमा उत्तमेति। तस्मात् समुच्चयः।

इति आचार्य्यशबरस्वामिनः कृतौ मीमांसाभाष्ये
द्वादशाध्यायस्य तृतीयः पादः।

---

## अथ द्वादशाध्यायस्य चतुर्थः पादः ।



जपसमुच्चयाधिकरणम् ।

**जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीः पृथक्त्वात् ॥ १ ॥**

(पू॰सि॰)

वैष्णवीमनूच्य वाग्यन्तव्या सारस्वतीमनूच्य वाग्यन्तव्या बार्हस्पत्यमनूच्य वाग्यन्तव्येति स्तुतयः। अग्निर्मूर्द्धा दिव इति आशिषः। आयुर्दाग्न अस्यायुर्मे देहीति विधानादेशोऽसि त्वेषोऽसीति। अथ जप इति कः शब्दार्थः जप व्यक्तायां वाचीति। जप्यत इति जपः। यद्येवमग्निर्मूर्द्धादिव इति। अयमपि जप्यते। सत्यमयमपि जपः स्तुतिरपि त्विष्यते। अयं तु जप एव केवलः इतरैः स्तुत्यादिभिः समुच्चार्य्यमाणः एतस्मिन् जपे अकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्चेति केवलाः जपाः प्रतीयन्ते। यथा ब्राह्मणाः परिव्राजकाः ब्रह्मचारिणश्च निर्गच्छन्तीति उक्ते केवलब्राह्मणा ब्राह्मणशब्देनोच्यन्ते तद्वत्। ननु इदं विष्णुर्विचक्रम इति स्तुतिरियं न खलु नामास्ति शब्दो नापि किञ्चित् स्तोतव्यमस्ति। न च विष्णुः न च विष्णुना स्तुतेन कश्चिदर्थोऽस्ति न स्तुत्यो विष्णुः क्वचिदङ्गीक्रियते। नापि स्तुतिः कर्त्तव्या चोदितवचनमात्रन्तु चोदितं वैष्णवीमनूच्येत तत्र कर्त्तव्यं वचनं जपनमिति समानार्थौ यस्मा-

ज्ञपव्यक्तायां वाचीति स्मर्य्यते। तेन यत्र वचनमात्रं मन्त्रस्य क्रियते न स्तूयते नाशास्यते स जपः अथ जपस्याभिधानार्थस्य च को विशेषः। जपे वचनमात्रं मन्त्रस्य अभिधानेन तु जपतः सता असता वा गुणो नातिदिश्यते। एषोऽसि त्वेषोऽसीति नं तत्र तत्रैकार्थत्वाद्विकल्पे प्राप्ते उच्यते समुच्चयः कुतः आशीःपृथक्त्वात् स्तुतिपृथक्त्वात् अभिधानपृथक्त्वात् च न ह्येदं विष्णुरिति योऽर्थोऽभिधीयते स एव पावमानः सरस्वतीत्यनेन। एवं सर्वत्र। तस्मान्नानार्था एते अत एषां समुच्चयः स्यात्।

## समुच्चयं च दर्शयति ॥ २ ॥ (हे०)

शास्त्रानुवचनयोस्त्विः प्रथमामन्वाहेति त्रिरुत्तमामन्वाहेति। समुच्चये च सति प्रथमा च विद्यते न विकल्पे। तस्मादपि समुच्चयः। यजमाने स्थितिप्रायिको निर्देशः। एकस्मिंश्च मन्त्रे त्रितयमपि सम्भवति स्तुतिरभिधानं जपश्च। यथा इदं विष्णुर्विचक्रम इति यदि विष्णुर्बोध्यते ततः स्तुतिः अथान्यस्यै वृत्तान्त आख्यायते ततोऽभिधानम् अथात्मनावबोध्यते ततो जपः।

याज्यानुवाक्यासु विकल्पाधिकरणम्।

## याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥ (सि०)

ऐन्द्राबार्हस्पत्ये कर्म्मण्यनेकं याज्यानुवाक्यायुगलमाम्नातम् इदं वामास्ये हविःप्रियमिन्द्राबृहस्पती इत्ये-

कम् अयं वा परिषिच्यते सोम इन्द्राबृहस्पती । बृहस्पतिर्नः परिपातु पश्चादित्यपरन्तयोः किं समुच्चयो विकल्प इति विचारः तत्रोच्यते । याज्यानुवाक्यासु तु विकल्पः स्यादिति कस्माद्देवतोपलक्षणार्थत्वात् । कर्म्मणि गुणभूता देवता याज्यानुवाक्याद्वयेन कर्म्मसिद्धर्थमुपलक्ष्यते । सकृदुपलक्षणेन च तत्सिध्यति । कर्म्मसिद्धौ कर्म्मणि उपलक्षणकार्य्यं नास्तीति द्वितीयम् वै याज्यानुवाक्याद्वयं प्रयोगान्तरार्थं भवति तस्माद्विकल्पः ।

## लिङ्गदर्शनाच्च ॥ ४ ॥ (हे०)

लिङ्गं चेदमर्थं दर्शयति । किं लिङ्गं भवति एवमाह क्रतुर्वै देवानां याज्यानुवाक्ये एकया प्रत्यागच्छति गमयत्यन्यया अथात्र तिस्रः कार्य्या इति पितृयज्ञे याज्यानुवाक्यात्रयविधानस्य परे वाक्ये तयोस्त्रिद्वित्वमुदितं दर्शयति । तथा न सर्वाणि सह यज्ञायुधानि प्रकृत्या तु मानुषं न क्रियते नैकैकमेत्य पितृदैवकं तत् द्वे वै सहप्रकृते याज्यानुवाक्ययोः रूपमिति तस्मादपि विकल्पः । अथ तयोरेव मिथः कस्माद्विकल्पो न भवति एकार्थत्वात् प्राप्नोति । अन्यतरस्यापि हि देवतोपलक्षणं सिध्यति । उच्यते समाख्यया पुरोनुवाक्ये इति पुरोऽनूच्यत इति पुरोनुवाक्या आपेक्षिक पूर्वशब्दो याज्यामपेक्ष्य भवति । समुच्चये चैतदुपपद्यते । तस्मात् समुच्चयः । ननूपलक्षिते रूपलक्षणकार्याभावादर्थलाभादन्यतरस्याः प्रयोगो न प्राप्नोति । उच्यते समाख्यासामर्थ्यात् विरूपलक्षणसाध्यं कर्म्म भवि-

ष्यति। यथा द्वाभ्यां खनतीति वचनसामर्थ्यादभिधानं साध्यं तस्माद्विरोधः।

सोमक्रयद्रव्यसमुच्चयाधिकरणम्।

## क्रयेषु त्वविकल्पः स्यादेकार्थत्वात् ॥ ५ ॥ (पू०)

सोमक्रयणार्थानि द्रव्याणि समाम्नातानि अजया क्रीणाति हिरण्येन क्रीणाति इत्येवमादीनि। तेषु क्रयणेषु विकल्पः स्यात्। सर्वाणि हि क्रयणस्य साधनत्वेन निरपेक्षाणि विधीयन्ते यथा व्रीहियवौ यागेषु तथा अजया क्रीणाति हिरण्येन क्रीणाति वाससा क्रीणाति तान्येकार्थानि भवन्ति तस्मात्तेषु विकल्पः।

## समुच्चयो वा प्रयोगद्रव्यसमवायात् ॥६॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति। न चैतदस्ति विकल्प इति किन्तु समुच्चयः कस्मात् प्रयोगे द्रव्यसमवायात्। क्रयणस्य प्रयोगे अधिकस्यापि द्रव्यस्य समवाय उपपद्यते। तत्र विक्रेतुर्मूल्येनानमनं क्रियते तद्बहुभिः सुकरतरं भवति। तस्य तस्य द्रव्यस्याम्नानमापेक्षिकं सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुग्रहीष्यते। अपि च विषमाण्येतानि अश्वशफेन क्रीणातीति समुच्चयेनानतिं कर्तुं शक्नुवन्ति न विकल्पेन। विकल्प्यमानानामानर्थक्यमापद्यते। तस्मात् समुच्चयः।

## समुच्चयञ्च दर्शयति ॥ ७ ॥ (हे०)

तं वै दशभिः क्रीणाति दशाक्षरा विराड्विराजमेव प्राप्नोतीति क्रीणात्यनुवादोऽयं स एतेन न्यायेन प्राप्तानां

स्यात्। तस्मादपि समुच्चयः अथार्थवादेन विधिः कस्मान्न विज्ञायेत तथाप्यनुवादरूपं बाध्यते। तत्र सति सम्भवे न बाधितव्यं तस्मादनुवादः।

गुदोपयजनसमुच्चयाधिकरणम्।

अग्नीषोमीये पशौ गुदेनोपयजनमाम्नातं गुदेनोपयजति प्राणो वै गुद इति। एकादशिनेषु पशुष्वनेकगुदसन्निपाते विचारः प्रभवति। किमुपयजनगुदानां समुच्चयो विकल्पो वा यद्यर्थकर्मोपयजनं ततो विकल्पः। अथ प्रतिपत्तिस्ततः समुच्चयः किं पुनरत्र युक्तमर्थकर्मेति कुतः भूतभव्यसमुच्चारणे भूतं भव्याय दृष्टार्थत्वात् भवति पदार्थं कर्म तदेकेनायत्नात् सिद्ध्यतीति बहूनामेकत्र प्राप्तानां विकल्पो भवति। एवं प्राप्त उच्यते। (पू०)

## संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥ (सि०)

संस्कारोऽयं प्रतिपत्तिरित्यर्थः। कुतः। उपयुक्तशेषत्वात्। अग्नीषोमीयागार्थः पशुरुत्पन्नः तन्निवृत्तिः तच्छेषाः प्रतिपादनार्थास्तस्माद् गुदस्य प्रतिपत्तिनियमोऽयं दृष्टार्थः। नन्वर्थकर्मपक्षेऽपि दृष्टार्थतैव हेतुरुक्तस्तुल्योऽसौ प्रतिपत्तावपि हि प्रतिपाद्यमानाः कर्म साधयन्ति तस्माद् वैशेषिकोऽसौ यदा प्रतिपत्तिस्तदा समुच्चयः। तत्प्रधानत्वात् द्रव्यसंस्कारार्थं कर्म यस्यैव पशोर्गुदो न संस्क्रियते तस्यैव तेन संस्कारेण हानिः स्यात्। तस्मात् समुच्चयः।

आधाने दक्षिणासंख्याविकल्पाधिकरणम् ।

## संख्यासु तु विकल्पः स्यात् श्रुतिप्रतिषेधात् ॥ ६ ॥ (सि०)

आधाने दक्षिणाविधयः । एका देया षट् देया द्वादश देया इत्येवमादयस्तेषां समुच्चयो विकल्पो वा इति विचारणम् तत्राङ्गभूयस्त्वाय सर्वाङ्गग्राहिणा प्रयोगवचनेन समुच्चये प्राप्ते उच्यते । संख्यासु तु विकल्पः स्यात् कुतः श्रुतिविप्रतिषेधादेका देयेत्येकसंख्या परिच्छिन्नं द्रव्यं परिक्रयसाधनं श्रूयते तथा षड्देयेति षट्संख्यापरिच्छिन्नं यद्येका च षट्सु समुच्चीयेत संख्यान्तरप्राप्तसंख्योत्पद्यते । तत्परिच्छिन्नेन द्रव्येण परिक्रयवतः स्यात् तत्रैकश्रुतिः षड्श्रुतेश्च विप्रतिषेधः स्यात् । ननु नैवात्र परिक्रयः श्रूयते किं तर्हि दानम् एका देया षट्देया इति अत्रोच्यते दानं नात्मीयस्य परस्वत्वापादनं तत्र परस्वत्वात् स्यादित्येवमर्थः स्ववानसौ तस्यार्त्विज्यं तेन चास्य दातुरर्थः एवं दृष्टार्थो भवति । अथ दानमात्रं कल्प्यते ततोऽदृष्टं कल्पयितव्यम् । परिक्रय एवैकादीनां श्रवणं तत्र यः सप्तभिः परिक्रीणीते न तेनैकया षड्भिः परिक्रीतो भवति । न हि ते एकेत्यामनन्ति न षड़िति किं तर्हिं सप्तेति स एष श्रुतिविप्रतिषेधः । तस्माद् विकल्पः संख्यासु ।

जाघनी विकल्पाधिकरणम्।

द्रव्यविकारात्तु पूर्ववदर्थकर्म स्यात् तया विकल्पेन नियमप्रधानत्वात् ॥ १० ॥ (१पू०)

जाघन्या पत्नीः संयाजयन्तीति श्रूयते। तत्र पशुगुणेषु विचारो भवति। किं जाघन्यादीनां समुच्चय उत विकल्प इति अत्रापि पूर्व एव न्यायः यद्यर्थकर्म ततो विकल्पः अथ प्रतिपत्तिस्ततः समुच्चय इति किं प्राप्तं द्रव्यविकाराच्च पूर्ववदर्थकर्म स्यात्। पूर्ववदेतत् कर्म यज्जघन्या पत्नी संयाजनं दर्शपूर्णमासपूर्वकं चोदकपरम्परया पशुगुणप्राप्तदर्शपूर्णमासयोश्चैतदर्थकर्म न हि तत्र काचिच्छेषभूता जाघन्यस्ति यस्याः प्रतिपत्तिः स्यात्। लौकिकास्तु तत्राज्येन सह विकल्पश्चोदकेनाग्नीषोमीयः पशुः प्राप्तः तत्रापि श्रूयते जाघन्या पत्नीः संयाजयन्तीति सा श्रुतिः विकल्पे प्राप्ते नियमार्था भवति। यथाप्राप्तयोश्च नियमः गुणभूता च प्राप्ता तस्मादग्नीषोमीये गुणभूता जाघनी कर्मप्रधानं यथा अग्नीषोमीये तथा पशुगुणेषु तस्मात्तत्राप्यर्थकर्मणि चैकार्थानां जाघन्यादीनां समुच्चयो न युक्तः तस्माद् विकल्पः।

द्रव्यत्वेऽपि समुच्चयोद्रव्यकर्मनिष्पत्तेः प्रतिपशुकर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥ (पू०)

यद्यपि जाघनी गुणभूता कर्मणि एवमपि समुच्चयो युक्तः

कुतः द्रव्यस्य कर्मनिष्पत्तेः जाघनी द्रव्यं कर्मणा विशसनेन निष्पन्नमिति। तत्र प्रयोजनापेक्षा भवति। इदं च श्रूयते जाघन्या पत्नीः संयाजयन्तीति तदेवं विज्ञायते इदमस्य प्रयोजनं पशुगणे च प्रतिपशुकर्मभेदस्तस्य तस्य पशोः कर्मनिष्पत्तिः। जाघनी द्रव्यमतस्तत्रापि तत् पत्नीसंयाजार्थमेव कर्त्तव्यम्। एवं सति यथाप्रकृति कृतं भवति तस्मादर्थकर्मण्यपि समुच्चय एव।

## कपालेऽपि तथेति चेत् ॥ १२ ॥ (आ०)

इति चेत्पश्यसि कर्मनिष्पत्तित्वाज्जाघनीनां समुच्चय इति तेन तर्हि कपालेऽपि समुच्चयः प्राप्नोति पुरोडाशकपालेन तुषानुपवपतीति तदपि कर्मणा प्रयुज्यते। तस्यापि तुषोपवपनं प्रयोजनं भवितुमर्हति। तथा पुरोडाशगणे तस्य तस्य पुरोडाशस्य कपालेन तुषोपवपनं कर्त्तव्यं वक्तव्यो वा विशेषः।

## न कर्मणः परार्थत्वात् ॥ १३ ॥ (आ०नि०)

नैतदेवं कुतः कर्मणः परार्थत्वात् परार्थञ्च कपालानां प्रयोगकर्म पुरोडाशश्रपणार्थं तदर्थमुपात्ते कपाले तुषोपवपनमप्यन्वासज्यते तद्यथा। काष्ठान्याहर्तुं प्रस्थिते पुरुषे शाकाहरणमप्युपाधिः क्रियते। शाकमप्याहरेदिति तस्य गमनं शाकार्थमपि भवति कथं पुनर्ज्ञायते पुरोडाशार्थे कपाले तुषोपवपनमन्वासज्यते। तेन तदुभयार्थमिति उक्तोऽत्र न्यायो भविष्यति सङ्गस्य तन्निमित्तत्वादिति। न चेत् तुषोपवपनार्थां कपालानामुत्पत्ति

नाविष्यं सर्वैःसुषोपवपनं कर्त्तव्यम् अथवा उभयोरपि प्रतिषेधो यतः कर्मणः परार्थत्वादिति कपाले व्याख्यातं जावन्यामपि कर्मणा परार्थत्वं हृदयादीनां निष्पत्त्यर्थं विशसनकर्म न जाघन्याः । अपिच हृदयादिभिरवदानैर्यष्टुं पशोरालब्धव्यविशसनकर्मापि तदर्थमेव तस्मान्न जाघन्या निष्पत्त्यर्थं विशसनं नचेत्तदेवं नैवात्र प्रयोजनाकाङ्क्षा कुतः सम्बन्धः हृदयादीन्यनुनिष्पन्ना जाघनी सा पत्नीसंयाजनिर्वृत्त्यर्थमुपविष्टा एकया च तया ते निर्वर्त्त्यन्ते । तस्मात्पशुगुणे जाघनीनां विकल्पः ।

## प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ (२पू०)

भवेद्विकल्पो यद्यर्थकर्म स्यात् प्रतिपत्तिस्त्वेषा कस्माच्छेषत्वात् पशुना निर्वर्तिते यागे शेषभूता जाघनी निष्प्रयोजना न क्वचिन्निक्षेपार्हा तस्या निक्षेपः पत्नीसंयाजेषु क्रियते न जाघनी विधीयते न पत्नीसंयाजा उभये विहितः सम्बन्धो न विहितः । स विधीयते तत्र च जाघन्याः प्राधान्यं सूक्तं न गुणभावः गुणभावेऽस्य अनेकत्र गुणभावः स्यात् । तत्र को दोषः । अग्नीषोमीयं पशुमालभत इत्येषा चोदना बाध्येत नानादेवतोऽयं तदा भवति । एकदेशोऽस्याग्नीषोमीयः एकदेशः पत्नीसंयाजदेवतानामिति तस्मात्प्रतिपत्तिः । प्रतिपत्तौ यस्यैव पशोर्जाघनी न प्रतिपाद्यते तस्यैव तेन संस्कारेण वर्ज्जनं स्यात्तस्मादपि समुच्चयः ।

## श्रुतेऽपि पूर्ववत् स्यात् ॥ १५ ॥ (पू०)

श्रुते चरुं दधंश्चरुमित्यत्रापि प्रतिपत्तिः स्यात् कुतः पूर्ववत् स्यात्। अन्यपूर्वकं श्रुतं दधि चेन्द्रायोत्पन्नं तस्यार्थान्तरगमनं विष्णुंपिविष्टं तस्मात् तस्याप्युत्पत्तौ येन संयुक्तं तत्र तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तर गमने शेषत्वात् प्रतिपत्तिः स्यादित्यनेन न्यायेन प्रतिपत्तिः प्राप्नोति। वक्तव्यो वा विशेषः।

## विकल्पोऽन्वर्थंकर्मनियमप्रधानत्वात् शेषे च कर्मकार्य्यसमवायात्तस्मात्तेनार्थंकर्म स्यात् ॥ १६ ॥ (सि०)

सूत्रे द्वयोः सूत्रयोः परिहारउच्यते प्रतिपत्तिस्तु शेषत्वादिति च श्रुते च पूर्ववत् स्यादिति च। यत्तावदुच्यते जाघन्याः प्रतिपत्तिरिति। तत्र ब्रूमः। विकल्पः प्रतिपत्तौ जाघन्या आज्येन सह पत्नी च तथैव विकल्पे प्राप्ते नियमप्रधाना पुनः श्रुतिः जाघन्याः पत्नीं संयाजयन्तीति आज्यस्य निवर्त्तकत्वात्कृतार्था भवति। जाघन्या अर्थं कर्मं न वारयति। वस्तुशेषत्वादिति अशेषस्यापि वचनादेकत्र गुणाभावी भवति यथा प्रस्तरस्य यच्च श्रुतस्यान्यार्थं उत्पन्नस्यान्यत्र गमनं प्रतिपत्तिरिति तदप्ययुक्तम्। कुतः? शेषे च कर्मकार्यसमवायात्। य उपयुक्तः शेषस्तस्मिन् कर्मकार्यं समवेति किं पुनस्तत्संस्कारः स हि कर्मणा क्रियते न चैतच्छ्रुतं दधि वा क्वचिदुपयुक्तं यस्मै यागायोत्पन्नं

स नैव भवेन्निर्वपेत्तस्मात्तेन जावनीद्रव्येण दधिघृताभ्यां चार्थकर्म स्यात् न प्रतिपत्तिः।

उखाग्निविकल्पाधिकरणम्।

## उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥१७॥ (पू०)

अस्त्यग्नावुखाग्निः सन्तापेनाग्निं जनयतीति तं प्रकृत्य श्रूयते। ब्रह्माग्रात् ज्वलतो ब्रह्मवर्चसकामस्या हृत्यान्वादध्यात्। भ्राष्ट्रादन्नाद्यकामस्याहृत्यान्वादध्यात्। वैद्यताद् वृष्टिकामस्येति तत्र विचार्यते किं काम्यस्य नित्यस्य वा अग्नेः समुच्चयः। अथवा काम्येन नित्योऽग्नि-र्विक्रियत इति तत्रोच्यते। उखायां काम्यनित्ययोरन्येभ्यो वा समुच्चयः कृतः। एवं सर्वाङ्गोपसंहारी प्रयोगवचनो-नुग्रहीष्यते। ननु नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषादित्यनेन न्यायेन काम्योऽग्निर्नित्यस्य विकारको भविष्यति। न भविष्यति किं कारणं नियोगे कामदर्शनात्। अग्नेर्निर्यापने अयं कामः श्रूयते आहृ-त्यान्वादध्यात् ब्रह्मवर्चसकामस्य ह्यग्निर्होमार्थो भवतीति एवं चेदाहृत्याभिधानात् फलं भविष्यति होमस्तु यथा प्राप्तमुख्य एव सन्निधानाच्च अग्न्योः समुच्चयः असति वा संस्कृतेषु कर्म स्यात् यदि च काम्येन नित्योऽग्निर्विक्रियेत स नैव स्यात्। तस्मिंश्चासत्यसंस्कृतेषु भ्राष्ट्रादिषु कर्म स्यात्। तथा तस्य सर्वार्थता बाध्यते तस्मादपि समुच्चयः।

तस्य च देवतार्थत्वात् ॥१८॥ (हे०)

अपि चान्वन्वाधाने तद्देवतापरिग्रहणं यदि सोऽग्निरुत्सृज्येत ततो देवता अपरिगृहीता भवेयुः। अन्वन्वाधाने न अग्निर्धार्येत तदच्युताऽग्निधारणात् देवता परिग्रहः।

विकारो वा नित्यस्याग्नेः काम्येन तदुक्तहेतुः ॥ १९ ॥ (सि०)

नैमित्तिकं तु प्रकृतौ तद्विकार इति। सामान्येनैतदुक्तं यदाहवनीये जुहोतीति वृष्टिकामो वैद्युतादिति विशेषणं तेन सामान्यं बाध्येत किं कारणं स्वाश्रये वृत्तिर्विशेषस्य सामान्यस्य ततोऽन्यत्रापि वृत्तिसम्भवात्। विशेषस्य चान्यपरिच्छिन्नस्य एकावयविनस्तदसम्भवे विषयाभावात् प्रसङ्गादुपदेशवैयर्थ्यं मा भूदिति। अथ यदुक्तं नियोगे कामदर्शनादिति तत्र ब्रूमः। स्वाहाराहृत्यान्वादध्यादिति नित्यस्यैव होमार्थस्यान्वाधानस्यायं विशेषकामसंयोगः। शब्दादाहृत्यान्नाद्यकामस्येति आदध्यादिति पुनः श्रुतिः। यद्यन्वाधाने कामश्रुतिः स्यादाधानं विधीयेत नाधीयमानं कामस्य साधनत्वेन युज्यते। तस्मिंश्च विधीयमाने विशेषस्य स चेत्यनेकार्थत्वात् वाक्यं भिद्येत तस्मान्न नियोगे कामश्रुतिः। किं तर्हि होमायैवायं नित्यनियोगः। अग्निविशेषविधानार्थमनूद्यते। यावदुक्तं स्पष्टं वैद्युतमग्निं हासार्थं

कुर्यादिति तावदेव एवं चेन्नैमित्तिकः तस्मिन् तस्मिन् कार्ये नित्यमग्निं करोतीत्युपपन्नम्।

**वचनादसंस्कृतेषु कर्म स्यादिति ॥ १९ ॥ (सि०)**

तत्र ब्रूमः। वचनादसंस्कृतेषु कर्म स्यादिति किमिवचनं न कुर्यात्। नास्ति वचनस्यातिभारः। यथा यदि-जुहोतोति।

**संसर्गे चापि दोषः स्यात् ॥ २० ॥ (आ०)**

अपि च यदि समुच्चयः स्यात् प्राधान्येन सह संसर्गः स्यात्। वैहारिकस्य तु तत्र दोषः श्रूयते। अग्नये शुचयेऽष्टाकपालं निर्वपेद्यस्याग्निः प्रधानेन सह संसर्गं।

संगृह्णीत शुचितर एष योऽग्निर्यः प्रदातव्यः।

**वचनादिति चेदथेतरस्मिन्नुत्सर्गो परिग्रहः कर्मणः कृतत्वात् ॥ २१ ॥ (आ०नि०)**

आह नैष दोषः। वचनात् संसर्गो न वाचनिके क्रियमाणे दोष उच्यते। अथेतरस्मिन्। इतरस्मिन्नपि पक्षे वाचनिके असंस्कृतेषु होमः। एवमुभयत्र वाचनिकत्वात् दोषाभावे सति नैमित्तिकत्वात् विकार आश्रीयते न समुच्चयः। उत्सर्गोऽपि नित्यस्याग्नेर्देवतापरिग्रहो न विरुद्धः कर्मणः कृतत्वादन्यन्वाधानेन देवताः परिगृह्यन्ते। नाग्निना एवं श्रूयते। यः पूर्वेद्युरग्निं गृह्णाति स वै श्वोभूते देवता अभियजत इति तच्च कृतमग्ने र्ग्रहणं तेन परिगृहीता देवता अग्न्यन्तरे वचनाद्दूयन्ते तस्माद्विरोधः।

७ अन्यतोऽहवनीयत्वाधिकरणम् ।

स आहवनीयः स्यादाहुतिसंयोगात् ॥२२॥(पू०)

यश्चासौ वैहारिकोऽग्निः स आहवनीयः स्यात् । कुतः आहुति संयोगात् । एत्य हूयते यस्मिन् स आहवनीयः हूयते चास्मिन्निति तस्मादयमप्याहवनीयः ।

अन्यो वोद्धृत्याहरणात् तस्मिंस्तु संस्कारकर्मशिष्टत्वात् ॥ २३ ॥ (सि०)

अन्यो वा आहवनीयात् स्यान्नाहवनीयः कस्मात् । उद्धृत्याहरणात् । लौकिकोऽयमुद्धृत्य हूयते भ्राष्ट्रादाहरेत् । प्रावास्यादाहरेदिति । आहवनीयशब्दस्य संस्कारनिमित्तः संस्कारेषु तत्सद्भावात् अभावाच्च प्राङ् तेभ्यः यच्चाहुति संयोगादिति सिद्धे आहवनीयत्वे आहुतयो विधीयन्ते यदाऽऽहवनीये जुहोतीति न तेनासां विधानात् । कृतं तद्भवति । तस्मान्नाऽऽहवनीयः प्रयोजनमाहवनीयधर्म्माभावः । तस्मिन् संस्कारकर्म्मशिष्टत्वात् तस्मिन् वैहारिकेऽग्नौ आधानिकाः संस्काराः कर्तव्याः शिष्टत्वात् सर्वकर्म्मार्थाहिति आधानस्य सर्वशेषत्वात् । यदि न क्रियेरन् कर्म्म तेनाङ्गेन हीनमफलं स्यात् ।

स्थानात्तु परिलुप्येरन् ॥ २४ ॥ (हे०)

परिलुप्येरन् आधानिकाः संस्काराः कस्मात् स्थानात् तस्य संस्कृतस्याग्नेः स्थानेऽयमसंस्कृतः श्रुतः स वैशेषिकत्वात् तस्य निवर्त्तकः स चेन्निवृत्तः किमर्थं संस्काराः क्रि-

च्यन्ते। न संस्कृतः स्यादित्येवमर्थन्ते क्रियेरन्। असंस्कृते न चार्थः तस्मात् लुप्येरन्।

उल्कान्ते नित्यधारणाभावाधिकरणम्।

नित्यधारणे विकल्पो न ह्यकस्मात् प्रतिषेधः स्यात् ॥ २५ ॥ (पू०)

तस्मिन्नेवोल्के चिन्ता किमयं नित्यं धार्यो न वा अथ वा नैव धार्येत इति तत्रोऽच्यते नित्यधारणे विकल्पः धार्यो वा न वा कुतः नह्यकामात् प्रतिषेधः स्यात् धारणात् प्रतिषेधः तस्य भवति। प्रतिसमिन्धीत भ्रातृव्यमस्मै जनयतीति श्रुतिर्धारणप्रसङ्गे च प्रतिषेधार्थत्वात् भवति न यथा गन्तव्यं भोक्तव्यमिति सति गमनप्रसङ्गभोजनप्रसङ्गे च भवति। न च श्रुतिमन्तरेण प्रसङ्ग उपपद्यत इति नित्यसाधारणस्य विधायिका श्रुतिरनुमीयते तया प्राप्तिः। प्रतिषेधेन निवृत्तिः तस्मात् विकल्पः।

नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥२६॥ (सि०)

यदि कदाचित् प्रत्यक्षया श्रुत्या प्रसङ्गो न स्यात्। अतोऽर्थादनुमीयेत। अस्ति तु नित्यधारणस्य प्रसञ्जिका गतश्रियः श्रुतिः। नित्यवत्त आहवनीयो गतश्रिय इति आहवनीयस्थानापन्नत्वादुल्कायापि नित्यधारणं प्रसक्तं तत् प्रतिषेधार्थेयं श्रुतिः तस्मान्न श्रुत्यन्तरस्यानुमानं भवति। अतो नित्यधारणस्याविधानात् कार्याभावाद्धारणमेव स्यात्।

सत्राहीनयोः एकैककृतत्वे सर्वेषां करणाधिकरणम्।

परार्थान्येकः प्रतियन्त्रिवत्सला हौमयोर्थस-मानमतो अनियमोऽविशेषात् ॥ २६ ॥ (पू०)

यानि परार्थानि कर्माणि यथा शुल्कं यजमानो न्वारभेत यजमानसम्मितौदुम्बरी भवति। तान्येको यजमानः कुर्यान्न सर्वे कस्य हेतोः परार्थत्वादेव न तत्कर्मणा यजमानस्य कश्चिदुपकारः क्रियते ततश्च न स्वस्योपकाराय सर्वे कुर्युः। यजमानेन तु तत्कर्म क्रियते। तदेकेनैव कृतमिति द्वितीयानां प्रवृत्तौ हेतुर्नास्ति तस्मादेकः कुर्यात्।

सत्रैकस्यानियमो यः कश्चिदेकः कुर्यात्। कुतः अविशेषात्। नात्रशब्दकृतोवाऽर्थकृतो विशेषो गृह्यते तस्मादनियमः। अहीने मुख्यस्याभावादेवमवस्थितम्।

मुख्यो वा विप्रतिषेधात् ॥२७॥ (सि०)

सत्रे तु मुख्यः कुर्यात् गृहपतिः कुतः। विप्रतिषेधात् तस्य कुर्वतो विप्रतिषेधः। न हि तेनार्त्विजः पदार्थाः कर्त्तव्याः। ऋत्विजां तु स्वपदार्थसन्निपाते विप्रतिषेधः स्यात्। एवं हि गृहपतेरर्थवत्त्वं क्रत्वर्थानि याजमानानि।

सत्रे याजमानकर्मणां सर्वेषां कर्त्तव्यताधिकरणम्।

सत्रे गृहपतिरसंयोगाद्धौत्रवत् आम्नाय-वचनाच्च ॥ २८ ॥ (पू०)

अथ यानि याजमानानि संस्कारार्थानि कर्माणि तान्यपि किं सर्वे गृहपतिनैव कर्त्तव्यानि उत सर्वैरित्युच्यते। गृह-पतिना कर्तव्यानि कुतः। असंयोगादेवं गृहपतिरिति समाख्याया अन्वर्थेनाऽसंयोगो न भवति अन्वर्था भविष्यती-त्यर्थः। कथं कृत्वा तत्रोच्यते। इहानेन गृहशब्देन कर्मो-च्यते न शाला। शालायामभिधीयमानायामविशेषः स्यात्। सर्वे हि ते शालायाः पतयः ननु च कर्म्मणोऽपि ते सर्व एव पतयः सत्यमेवं समाख्यानात् प्रकर्षावगति र्विज्ञायते यथा देवदत्तो मथुरायां ब्राह्मण इति। प्रकर्षश्च कर्म्मभूयस्त्वाद्वा स्यात् फलभूयस्त्वाद्वा। तत्र कर्म्मभूयस्त्वन्नोपपद्यते य त इतरेषां बहुतरं कर्म्म फलभूयस्त्वन्तु युज्यते यजमान संस्काराणां तस्याधिक्यात्। तस्माद् गृहपतिसमाख्याया अर्थवत्वात् पुरुषार्थानां गृहपतिः कर्त्तेति हौत्रवत् तद्यथा हौत्रमिति समाख्यायाः अर्थवत्त्वाद्धोता हौत्रस्य कर्त्ता भवत्येवमिहापि आम्नायवचनाच्च आम्नायेऽप्य वचनं गृहपतेः फलभूयस्त्वे भवति। यो वै सत्रे बहूनां यजमा-मानानां गृहपतिः स सत्रस्य प्रत्येता स हि भूयिष्ठा-मृद्धिमश्नोतीति तथेति तस्मादेव कारणात्।

## सर्वैर्वा तदर्थत्वात् ॥ २९ ॥ (२९)

सर्वे वा यजमानाः पुरुषार्थानि कुर्युः। न गृहपतिरेव कुतः। तदर्थत्वात् सर्वार्थमेव हि कर्म अविशेषेण हि श्रुतं द्वादशाहमृद्धिकामा उपेयुरिति सर्वेषां संस्कारैर्न-युज्यते। तस्य गुणहीनमफलं कर्म भवेदिति तत्राविशेष

श्रुतिर्बाध्येत गृहपतिरिति समाख्यासामान्यात्। यथा गृहपतिः। स्वयं कर्म्म न करोत्यन्ये तस्य कर्म्मकारा भवन्त्येवमस्यापीत्यनेन सामान्येन स्वामित्वप्रकर्षः फलप्रकर्षाभावात्।

ननु स्वार्थलाभेन यजमानाः क्रत्वर्थं परिहापयन्त्यतोच्यते।

## विप्रतिषेधे परम् ॥ ३० ॥ (हे०)

यत्र क्रत्वर्थेन पुरुषार्थत्वाद् विप्रतिषेधः। तत्र स्वार्थं करिष्यति विप्रतिषेधे तु परकीयं क्रत्वर्थं, किं कारणं क्रत्वर्थे ह्यक्रियमाणे क्रतुरेव न संपद्यते पुरुषार्थे तु हीने पुरुषो विगुणः अङ्गगुणविरोधे च तादर्थ्यादिति क्रत्वर्थो बलवान्। तस्मात् कर्तव्यः।

## हौत्रे परार्थत्वात् ॥ ३१ ॥ दृ०वै०

यत्तु हौत्रवदिति हौत्रे परार्थः पुरुषः न कर्म पुरुषार्थं तदेकेन केनचित् कर्तव्यं न सर्वैः। तत्र समाख्या नियामिका स्यात्। इह पुनर्गृहपतिरिति समाख्यानिवृत्तिं शक्नोति कर्तुं अतोऽन्यथापि युज्यते। अयुज्यमानाऽपि काममनर्थिका स्यात्। नैव निवर्तयितुं शक्नुयात्। निवर्तकस्य वचनस्याभावात्।

## वचनं परम् ॥ ३२ ॥ (हे०)

यच्च दर्शनमुपदिष्टं सत्रस्य प्रत्येता इति। न तद्दर्शनं किं तर्हि वचनं तत्फलभूयस्त्वस्याप्राप्तेः। प्राप्तिपूर्वकं हि दर्शनं भवति।

आर्त्विज्ये ब्राह्मणमात्राधिकरणम्।

## प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ३३॥ (पू॰)

ऋत्विक्त्वं सर्ववर्णानां ब्राह्मणराजन्यवैश्यानां स्यात्। कुतः प्रभुत्वात्। प्रभवन्ति सर्वे शक्नुवन्ति कर्त्तुं सर्वेऽध्ययनवन्तो विद्वांसश्च न ह्यविद्वान् विहितोऽसौ करणाय कारणं सर्वेषां कर्मप्रदर्शनार्थं ब्राह्मण इत्युक्तम्।

## स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ३४ ॥ (सि॰)

ब्राह्मणानामेवार्त्विज्यं स्यात् नेतरयोर्वर्णयोः कुतः स्मृतेः एवं शिष्टाः स्मरन्ति। याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति स्मृतिश्च प्रमाणमित्युक्तम्। अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् तस्माद् ब्राह्मणा एव याजयेयुः।

## फलचमसविधानाच्चेतरेषाम् ॥ ३५ ॥ (हे॰)

इतरेषां राजन्यवैश्यानां फलचमसौ विधीयेते। स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत न्यग्रोधवल्लरीराहृत्य ताः संपिष्य दधन्युन्मृज्य ता अस्मै भक्षं प्रयच्छेन्न सोममिति। यदि क्षीरे सति तत्क्रीयते तत्र यदि चात्क्षीराभावो विज्ञायते यदि वा भोक्तुः क्षीराभागित्वमिहापि सोमं विभक्षयिषिते फलानि दीयन्ते तत्रापि सोमाभावो वा यदि वा भोक्तुरसोमपत्वं विज्ञायते तत्र सोमस्याप्रतिषिद्धितः तस्मात् सोमाभावो

भोक्तृत्वमसोमपत्वं विज्ञायते न चाऽसोमपाभ्यां यक्षम आर्त्विज्यं कर्तुं नियमात् सोमभक्षस्य तस्मान्न राजन्य-वैश्ययोरार्त्विज्यम् ।

**सान्नाय्येऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥३५॥ (हे०)**

अपि च सान्नाय्ये भक्ष्ये राजन्यवैश्ययोः प्रतिषेधं तु सोमपीथहेतुमाह न राजन्यो न वैश्यो वा सान्नाय्यं वा पिबेत् । असोमपीथो ह्येष इति ब्रुवन् सोमपीथाभावे राजन्यवैश्यानामार्त्विजनाभावं दर्शयति ।

**चतुर्धाकरणे च निर्देशात् ॥ ३६ ॥ (हे०)**

दर्शपूर्णमासयोश्च पुरोडाशस्य चतुर्द्धाकरणे ब्राह्मणा एव निर्दिश्यन्ते ब्राह्मणानामेवेदं हविः सौम्यानां सोमपीथिनां नेह ब्राह्मणस्यास्तीति शेषभक्षणार्थं चतुर्द्धाकरणमित्युक्तं शेषभक्षाश्चर्त्विजः । यदि राजन्यवैश्ययोरप्यार्त्विज्यमस्ति न ब्राह्मणानामेवेदं हविः स्यात् । राजन्यवैश्ययोरपि पक्षे स्यात् तत्रेदमवधारणमसमर्थं भवेत् ।

**अन्वाहार्ये च दर्शनात् ॥ ३७ ॥ (हे०)**

दर्शपूर्णमासिक्यां चान्वाहार्यदक्षिणायां ब्राह्मणा एव दृश्यन्ते । त एते वै देवा अहुतादो यद्ब्राह्मणा यदन्वाहार्यमाहरन्तीति तानेव तेन प्रीणातीति दक्षिणा च ऋत्विग्भ्यो दीयते तस्माद्ब्राह्मणानामार्त्विज्यम् । यस्मा-

दिव्य लक्षणा स्मृतिः तान्येतानि दर्शनान्युपोद्वलयन्ति तस्मादार्त्विज्यं ब्राह्मणानामेव स्यान्नेतरयोर्वर्णयोरिति ।

इति आचार्य्यभट्टशबरस्वामिनः कृतौ मीमांसा-
भाष्ये द्वादशस्याध्यायस्य चतुर्थः पादः ।

मीमांसाशास्त्रञ्च सम्पूर्णम् ।

---

शाके बालाभ्रवह्निन्दुमिते वर्षे द्विजन्मना ।
सभाष्यं जैमिनेः सूत्रं जीवानन्देन संस्कृतम् ॥